६

श्रीः

श्रीमदानन्दतीर्थ (पूर्णप्रज्ञ) भगवत्पादाचार्य विरचित

सर्वमूलान्तर्गत इतिहास-पुराणप्रस्थान ग्रन्थाः

# ३. श्रीमद्भागवततात्पर्यनिर्णयः



श्रीमदानन्दतीर्थ (पूर्णप्रज्ञ) भगवत्पादाचार्य विरचिताः

सर्वमूलानन्तर्गताः प्रकीर्ण ग्रन्थाः

॥ श्रीः ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः

# श्रीमद्भागवततात्पर्यनिर्णयः

## प्रथमः स्कन्धः

### प्रथमोऽध्यायः

॥ ॐ ॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ सृष्टिस्थित्यप्ययहानियतिदृशितमोबन्धमोक्षाश्च यस्मादस्य श्रीब्रह्मरुद्रप्रभृतिसुरनरस्त्रीशशश्वात्मकस्य । विष्णोर्व्यस्ताः समस्ताः सकलगुणनिधिः सर्वदोषव्यपेतः पूर्णानन्दोऽव्ययो यो गुरुरपि परमश्चिन्तये तं महान्तम् ॥

जन्माद्यस्येत्यादि[1] । तं परं धीमहि । अन्वयात् । 'यतो वा इमानि भूतानि जायन्त' इत्यादिश्रुतिस्मृतिभ्यः । इतरतः तर्कतः । चेतनाद्धि पित्रादेः पुत्रादिरुत्पद्यते । अभिज्ञः सर्वज्ञः । अतो युज्यते । 'यं कामये तं तमुग्रं कृणोमि' । 'मम योनिरि'त्यन्येषां तदपेक्षत्वात् । न चान्यापेक्षोऽसौ । स्वराट् । कुतः । तेने ब्रह्म हृदा य आदिकवये । स हि 'विश्वा जातानि परिता बभूव' । नान्यः । हृदा स्नेहेन । 'यो

---

श्रीमद्भागवतम्

प्रथमः स्कन्धः

प्रथमोऽध्यायः

( केवलं तात्पर्यसम्बद्धाः श्लोकाः )

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट् तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यं सूरयः ॥ तेजोवारिमृदां यथा विनिमयो यत्र

ब्रह्माणं विदधाति पूर्वमि'ति च । आत्मत एव हि तस्य बुद्धिप्रकाशः । न च प्रसादं विना ज्ञातुं शक्यः । मुह्यन्ति यं सूरयः । न च तृप्तः प्रवर्तते । किन्तु मृषा वृथैव । भित्वा मृषाश्रुरितिवत् । 'देवस्यैष स्वभावोऽयमि'ति । यत्रेतिविशेषणान्नान्यत्र । स्वविषय एव वृथा । जीवेश्वरजडानां सर्गस्त्रिसर्गः । एकस्य तेजसो बहुत्ववदीश्वरसर्गः । वारिनिमित्तप्रतिबिम्बवज्जीवसर्गः । मृदो घटादिवदव्यक्ताज्जडसर्गः । न च मायामयी सृष्टिः । धाम्ना स्वेन सदा निरस्तकुहकम् । तद्धाम्ना श्रियोऽपि निरस्तकुहकत्वं मुक्तानां च । न च मुक्तवत्पूर्वं बन्धभाक्त्वम् । सदा निरस्तकुहकत्वात् । सत्यं निर्दुःखनित्यनिरतिशयानन्दानुभवरूपम् । परं सम्पूर्णगुणम् । परत्वसाधकं जन्मादीत्यादि । तन्त्रभागवते च । 'सृष्टिस्थित्यप्ययेहादेः श्रुतिस्मृतिसमन्वयात् । युक्तितश्चेतृपूर्वादेः श्रीब्रह्मभवपूर्विणः ॥ सुरगन्धर्वमनुजपितृदैत्यात्मनः पृथक् । कर्ता विष्णुरजो नित्यः सर्वज्ञत्वान्न चापरः ॥ अनन्याधिपतिश्चासौ गरीयान् ब्रह्मणो यतः । तत्प्रसादमृते तस्य नान्यो वेत्ताऽस्ति कश्चन ॥ तेजसो रूपवद्रूपं बहुधा कुरुते हरिः । वारिस्थतेजःप्रतिमा जीवास्तस्माद्विनिर्गताः ॥ कुलालेन मृदा यद्वन्निर्मीयन्ते घटादयः । विष्णुनैवं प्रकृत्यैव निर्म्यते जगदीदृशम् ॥ एष त्रिसर्गो विष्णोस्तु वृथा लोकस्य चावृथा । इन्द्रजालविधां सृष्टिं मन्यन्ते ज्ञानदुर्बलाः ॥ नित्यं निरस्तेन्द्रजाले स्वत एव कथं भवेत् । अक्षमाः सत्यसृष्टौ हि मायासृष्टिं वितन्वते ॥ अनन्ताचिन्त्यविभवः कथं तामीहते हरिः । निर्दुःखपूर्णानन्दत्वाद्यमाहुः सत्यमच्युतम् ॥ निर्दोषगुणपूर्णत्वात्परं चाहुर्जनार्दनम् । एवंविधानुभावो यः स कथं निन्दितं सृजेत् ॥ स्वप्नादिकं परो देवः प्राणादिस्थस्तनोत्यसौ । केवलस्य परस्यास्य मायासृष्टिर्न युज्यते ॥ तस्माद्बाधायुताः सर्वे स्वप्नाद्या ये त्वकेवलाः । इदं

---

त्रिसर्गो मृषा धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ १ ॥



न बाध्यते सर्वं जगत्केवलजं यतः ॥ मोक्षवत्केवलस्यास्य शक्त्या सम्यग्विजृम्भितम् । एतद्रहस्यं परमं ब्रह्मसूत्रपदोदितम् ॥ ये त्वेवं न विजानन्ति ते हि यान्त्यधरं तमः । ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ॥ सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः । ये त्वेतदनुतिष्ठन्ति पारम्पर्यागतं मम ॥ ते यान्ति परमं स्थानं मयैवोदितमञ्जसे'त्यादि । 'वैधर्म्याच्च न स्वप्नादिवदि'ति च । 'प्रधान्वस्य महतो महानि सत्यासत्यस्य करणानि वोचमि'त्यादि । ब्रह्मसूत्रमहाभारतगायत्रीवेदसम्बन्धश्चायं ग्रन्थः । उक्तं च गारुडे । 'अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः । गायत्रीभाष्यरूपोऽसौ वेदार्थपरिबृंहितः । पुराणानां साररूपः साक्षाद्भागवतोदितः । द्वादशस्कन्धसंयुक्तः शतविच्छेदसंयुतः । ग्रन्थोऽष्टादशसाहस्रः श्रीमद्भागवताभिध' इति ॥ १ ॥

[2]अधिकारिविषयफलान्युच्यन्ते धर्म इति । प्रोज्झितकैतवः फलानपेक्षया । ईश्वरार्पणेन परमः । 'तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम् । अजातशत्रवः शान्ताः साधवः साधुभूषणाः । मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढामि'त्यादि सतां लक्षणम् । सतां मात्सर्यमर्जुनस्य एकलव्य इव कुत्रचिद्दृश्यते । तद्वर्जनीयमुत्तमेषु ज्ञानार्थिना । महासंहितायां च 'उत्तमेष्वात्मनो नित्यं मात्सर्यं परिवर्जयेत् । कुरुते यत्र मात्सर्यं तत्तत्स्याविहीयत' इति । नित्यनिरस्तदोषपूर्णगुणं वास्तवम् । नित्यसंहितायां च 'निरस्ताखिलदोषं यदानन्दादिमहागुणम् । सर्वदा परमं ब्रह्म तस्माद्वास्तवमीयत' इति । वस्तु अप्रतिहतं नित्यम् । स्कान्दे च 'वसनाद्वासनाद्वस्तु नित्याप्रतिहतं यतः । वासेनेदं यतस्तुन्नमतस्तद्ब्रह्म शब्द्यत' इति । किं वा परैः अर्थकामादिकथनैः । गारुडे

---

धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् । श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ॥ २ ॥ निगम-

च 'धर्मार्थकाममोक्षाणामेकमेव पदं यतः । अवरोधो हृदीशस्य पृथग्वक्ष्ये न तानहमि'ति । सद्यःशब्दः आपेक्षिक इति तत्क्षणादिति । न चासम्पूर्णाधिकारिणां तत्क्षणादवरुध्यत इति सद्यःशब्दः । अधिकारिविषयफलानां स्मरणात्फलाधिक्यं भवति । वामने च 'अधिकारं फलं चैव प्रतिपाद्यं च वस्तु यत् । स्मृत्वा प्रारभतो ग्रन्थं करोतीशो महत्फलमि'ति ॥ २ ॥

[3]ज्ञातफलस्यापि प्रशंसाविधिभ्यां क्षिप्रप्रवृत्तिर्भवतीति प्रशस्य विधत्ते । निगमकल्पतरोरिति । भगवता गलितम् । शुकेन द्रवीकृतम् । उक्तं च ब्रह्माण्डे 'धर्मपुष्पस्त्वर्थपत्रः कामपल्लवसंयुतः । महामोक्षफलो वृक्षो वेदोऽयं समुदीरितः । शातितानि फलानीह कृष्णद्वैपायनेन तु । भारतादीनि यानीह तथा भागवतं भुवि । आर्द्रीकृतानि तानीह शुकप्रभृतिर्जनैः । ख्यापयद्भिर्गुरुप्रोक्तान्वेदार्थान् ग्रन्थनिष्ठितान् । कानिचिद्दर्शयामास वृक्षस्याग्रे फलानि तु । व्याचक्षमाणो वेदार्थं भगवाँल्लोकपूजितः । एतेषामथ तेषां वा रसं पिबत सज्जनाः । आमोक्षान्महती तृप्तिरहो मे पश्यतो भवेदि'ति ॥ ३ ॥

[4]प्रकारान्तरेण पुरुषार्थशङ्कानिवृत्त्यर्थमाख्यायिका । पाद्मे च 'आख्यायिकाः प्रदर्श्यन्ते सर्ववेदेषु सर्वशः । द्योतयन्त्यस्तु महतां तात्पर्यं तत्र तत्र ह । अलाभः पुरुषार्थस्य प्रोक्तमर्थमृते त्विति । द्योतनाय महाराज श्रद्धावृद्ध्यर्थमेव चे'ति ॥ ४ ॥

[7]यानि भगवज्ज्ञातान्यन्यैरप्यृषिभिर्ज्ञायन्ते तानि वेत्थ । उक्तं हि ब्रह्माण्डे 'द्वैपायनेन यद्बुद्धं ब्रह्माद्यैस्तन्न बुध्यते । सर्वबुद्धं स वै वेद

कल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् । पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ॥ ३ ॥ नैमिषेऽनिमिषक्षेत्रे ऋषयः शौनकादयः । सत्त्रं स्वर्गाय लोकाय सहस्रसममासत ॥ ४ ॥ यानि वेदविदां श्रेष्ठो भगवान् बादरायणः । अन्ये च मुनयः सूत



तद्बुद्धं नान्यगोचरमि'ति ॥७-८॥ विवशः[14] बह्वभ्यासात् । उक्तं च ब्रह्मवैवर्ते । 'शारीराद्वाचिकाभ्यासो वाचिकान्मानसो भवेत् । मानसाद्विवशान्मुच्येन्नान्यथा मुक्तिरिष्यत'इति ॥ १४ ॥ [18]आत्ममायया स्वरूपभूतेच्छया । 'महामायेत्यविद्येति नियतिर्मोहिनीति च । प्रकृतिर्वासनेत्येव तवेच्छाऽनन्त कथ्यत' इति स्कान्दे । विष्णुसंहितायां च 'इच्छाशक्तिर्ज्ञानशक्तिः क्रियाशक्तिरिति त्रिधा । शक्तिशक्तिमतोश्चापि न भेदः कश्चनेष्यत' इति ॥ १८ ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भागवततात्पर्यनिर्णये प्रथमस्कन्धे प्रथमोऽध्यायः ॥ ॥ १ ॥

## द्वितीयोऽध्यायः

[2]अनुपेतं देहादिभिः । अनभिमानात् । अकातरः कातरवद्दर्शयन् । उक्तं च स्कान्दे 'नित्यतृप्तः परानन्दो योऽव्ययः परमेश्वरः । यस्य पुत्रफलं नैव यज्जातं जगदीदृशम् । यदधीनश्रियोऽपाङ्गाद्ब्रह्मरुद्रादिसंस्थितिः । स पुत्रार्थं तपस्तेपे व्यासो रुद्रस्य चेश्वरः । कातर्यं दर्शयामास वियोगे लौकिकं हरिः' ॥ 'कर्माणि कुरुते विष्णुः कीनाश इव दुर्बल' इति चोद्योगे । 'देवत्वे देववच्चेष्टा मानुषत्वे च मानुषी'ति विष्णुधर्मे । सर्वभूतहृदयम् । अहङ्कारात्मकत्वात् । 'अहङ्कारात्मको

परापरविदो विदुः ॥ ७ ॥ वेत्थ त्वं सौम्य तत्सर्वं तत्वतस्तदनुग्रहात् । ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत ॥ ८ ॥ आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन् । ततः सद्यो विमुच्येत यं बिभेति स्वयं भयः ॥१४॥ अथाख्याहि हरेर्धीमन्नवतारकथाः शुभाः । लीला विदधतः स्वैरं ईश्वरस्यात्ममायया ॥ १८ ॥

## द्वितीयोऽध्यायः

सूत उवाच—यं प्रव्रजन्तमनुपेतमपेतकृत्यं द्वैपायनो विरहकातर आजुहाव । पुत्रेति तन्मयतया तरवोऽपि नेदुस्तं सर्वभूतहृदयं मुनि–

रुद्रः शुको द्वैपायनात्मज' इति स्कान्दे ॥२॥ [3]स्वानुभावं ब्रह्म ॥३॥ [11]अद्वयं असमाधिकम् । तथा च भाल्लवेयश्रुतिः 'स पुरुषः सोऽद्वय इति न ह्येनमभि कश्चन न ह्येनमति कश्चनेती'ति । 'सोऽद्वयः पुरुषस्तस्मान्न समो नाधिको ह्यत'इति महासंहितायाम् । तत्त्वशब्दार्थस्तत्रैवोक्तः । 'अतीतानागते काले यत्ताद्दशमुदीर्यते । कुतश्चिदन्यथा नेयात्तत्तत्त्वं तत्त्वतो विदुरि'ति ॥ ११ ॥ [12]सत्तामात्रमानन्दमात्रम् । तथा च पैङ्गिश्रुतिः 'अथ कस्मादुच्यते सत्तेति नन्दति नन्दयति चेती'ति । न कार्यकारणविषयविशेषितवैषयिकज्ञानम् । केवलमेव तज्ज्ञानम् । स्रष्टृत्वादिभिः कार्यकारणविशेषितं च । तन्त्रभागवते च । 'विषयापेक्षि न ज्ञानं विषयैश्च विशेषितम् । यत्तदानन्दमात्रं च तद्ब्रह्मेत्यवधार्यतामि'ति । यत्किञ्चिदलोकसिद्धम् ॥ १२ ॥ [13]यस्मात्परमात्मैव तत्त्वं तस्मात्तमेव पश्यन्ति मुनयः ॥ १३ ॥ [22]आत्मनीश्वर इति न जीवैक्यमुच्यते । परेषामपि ब्रह्मादीनां यतोऽवरत्वं स परावरः । 'भेददृष्टयाभिमानेने'ति हि कापिलेये । 'ब्रह्म प्रधानमुपयान्त्यगताभिमाना' इति च । 'विद्याऽऽत्मनि भिदाबोधः' । 'यत्र हि द्वैतमिव भवति' । 'अन्यमीशमस्य महिमानमिति' । 'अनश्नन्नन्यो अभिचाकशीति' । 'छायातपौ ब्रह्मविदो वदन्ति' । 'एको बहूनां विदधाति कामान्' । 'सत्यः सो अस्य महिमा' । 'सत्यमेनमनु विश्वे मदन्ति' । 'यत्र पूर्वे साध्याः सन्ति देवाः' । 'शृण्वे वीर उग्रमुग्रं दमायन्नि'त्यादि

---

मानतोऽस्मि ॥ २ ॥ यः स्वानुभावमखिलश्रुतिसारमेकमध्यात्मदीपमतितितीर्षतां तमोऽन्धम् । संसारिणां करुणयाऽऽह पुराणगुह्यं तं व्याससूनुमुपयामि गुरुं मुनीनाम् ॥३॥ वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् । ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥ ११ ॥ सत्तामात्रं तु यत्किञ्चित्सदसच्चाविशेषणम् । उभाभ्यां भाष्यते साक्षाद्भगवान् केवलः स्मृतः ॥ १२ ॥ तच्छ्रद्दधाना मुनयो ज्ञानवैराग्युक्तया । पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतिगृहीतया ॥ १३ ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते



च । 'मग्नस्य हि परेऽज्ञाने किं न दुःखतरं भवेत्' । 'बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु । नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वहे'ति मोक्षधर्मे । 'भेददृष्टयाऽभिमानेन पश्यन्तो यान्ति तत्पदमि'त्यादि वायुप्रोक्ते । 'अनुपपत्तेस्तु न शारीरः' । 'भेदव्यपदेशाच्च' । 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' । 'पृथगुपदेशादि'त्यादि च । सत्यत्वं च भेदस्योक्तं भाल्लवेयश्रुतौ । 'स्थाणुर्होचक्राम स प्रजापतिमुवाच कोऽसि केऽस्य कः स इति होवाच । योऽसि येऽस्य यः स इति । अथ हैनमुपाक्रोशत् । सत्यं भिदा सत्यं भिदा सत्यं भिदेति । मैवारुवण्यो मैवारुवण्यो मैवारुवण्य इती'ति । 'सत्यमेनम्' । 'सत्यः सो अस्य महिमे'ति चोक्तम् । महासंहितायां च । 'त्रिविधं जीवसङ्घं च परमात्मानमव्ययम् । तेषां भेदं च ये सत्यं विदुर्मोहविवर्जिताः । ते यान्ति परमं स्थानं विष्णोरेवाचलं ध्रुवम् । जीवेश्वरभिदां भ्रान्तिं केचिदाहुरपण्डिताः । अनारतं तमो यान्ति परमात्मविनिन्दनात् । पराधीनश्च बद्धश्च स्वल्पज्ञानसुखेहितः । अल्पशक्तिः सदोषश्च जीवात्माऽनीदृशः परः । वदता तु तयोरैक्यं किं तेनादुष्कृतं कृतम् । अन्तर्याम्यैक्यवाचीनि वचनानीह यानि तु । तानि दृष्ट्वा भ्रमन्तीह दुरात्मानोऽल्पचेतसः । अस्यस्मित्वमहंस्वात्मेत्यभिधागोचरो यतः । सर्वान्तरत्वात्पुरुषस्त्वंतर्यामी नियामयन् । अतो भ्रमन्ति वचनैरासुरा मोहतत्परैः । तन्मोहने परा प्रीतिर्देवानां परमस्य च । अतो महान्धकारेषु पतन्त्यज्ञानमोहिता' इत्यादि ॥ २२ ॥ [24]विष्णोरेव त्रिसञ्ज्ञाः । वामने च । 'ब्रह्मविष्ण्वीशरूपाणि त्रीणि विष्णोर्महात्मनः । ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थितः । पृथगेव स्थितो देवो विष्णुरूपी

---

सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे ॥ २२ ॥ सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते । स्थित्यादये हरिविरिञ्चिहरेति संज्ञाः श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां

जनार्दन'इति। त्रयोऽपि गुणा विष्ण्वाश्रयाः। तथापि सत्वतनौ जीवे श्रेयांसि स्युः ॥२४॥ [25]मेघरूपत्वाद्धूम उत्तमः ॥२५॥ [27]सात्विकानां वासुदेवे भक्तिरुत्पद्यते ॥ २७ ॥ [28]भूतेशप्रजेशादीन् ॥ २८ ॥ [31]आत्ममायया स्वेच्छया। सदसद्रूपया प्रकृत्या च ॥ ३१ ॥ [32]तया सदसद्रूपया। विज्ञानेन विजृम्भितः। विज्ञानेनैव सम्पूर्णः ॥ ३२ ॥ [34]तद्गुणानेव भुङ्क्ते न दोषान्। 'सर्वत्र सारभुग्देवो नासारं स कदाचने'ति वामनपुराणे। अनश्नन्नित्यशुभापेक्षया परवशत्वापेक्षया क्लृप्त्यपेक्षया च। 'अक्लृप्त्या च स्वतन्त्रत्वादशुभस्य च वर्जनात्। अभोक्ता शुभभोक्तृत्वाद्भोक्तेत्येव च तं विदुः। अन्यूनानधिकत्वाच्च पूर्णस्वानन्दभोजनात्। विरागाच्च परस्यास्य भोक्तृत्वप्रतिषेधनमि'ति स्कान्दे ॥ ॥ ३४ ॥ इति प्रथमस्कन्धतात्पर्ये द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः

[1]व्यक्त्यपेक्षया जगृह इति। तथा हि तन्त्रभागवते। 'अहेयमनुपादेयं यद्रूपं नित्यमव्ययम्। स एवापेक्ष्य रूपाणां व्यक्तिमेव

---

स्युः ॥ २४ ॥ पार्थिवाद्दारुणो धूमस्तस्मादग्निस्त्रयीमयः। तमसस्तु रजस्तस्मात्सत्वं यद्ब्रह्मदर्शनम् ॥ २५ ॥ मुमुक्षवो घोररूपान् हित्वा भूतपतीनथ। नारायणकलाः शान्ताः भजन्ति ह्यनसूयवः ॥२७॥ रजस्तमःप्रकृतयः समशीलान् भजन्ति वै। पितृभूतप्रजेशादीन् श्रियैश्वर्यप्रजेप्सवः ॥ २८ ॥ स एवेदं ससर्जाग्रे भगवानात्ममायया। सदसद्रूपया चासौ गुणमय्याऽगुणो विभुः ॥ ३१ ॥ तया विलसितेष्वेषु गुणेषु गुणवानिव। अन्तः प्रविष्ट आभाति विज्ञानेन विजृम्भितः ॥ ३२ ॥ असौ गुणमयैर्भावैः भूतसूक्ष्मेन्द्रियात्मभिः। स्वनिर्मितेषु निर्विष्टो भुङ्क्ते भूतेषु तद्गुणान् ॥ ३४ ॥

## तृतीयोऽध्यायः

सूत उवाच—जगृहे पौरुषं रूपं भगवान्महदादिभिः। सम्भूतं



जनार्दनः। अगृह्णाद्व्यसृजच्चेति कृष्णरामादिकां तनुम्। पठ्यते भगवानीशो मूढबुद्धिव्यपेक्षया। तमसा ह्युपगूढस्य यत्तमःपानमीशितुः। एतत्पुरुषरूपस्य ग्रहणं समुदीर्यते। कृष्णरामादिरूपाणां लोकव्यक्तिमपेक्षये'ति। महदादिभिः सम्भूतं अन्तर्गतमहदादि। न महदादिशरीरम्। 'यस्मिन्नेताः षोडशकलाः प्रभवन्ती'ति श्रुतिः। 'यत्किञ्चिदिह लोके वै देहबद्धं विशां पते। सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः। ईश्वरो हि महद्भूतं प्रभुर्नारायणो विराट्। भूतान्तरात्मा विज्ञेयः सगुणो निर्गुणोऽपि च। भूतप्रलयमव्यक्तं शुश्रूषुर्नृपसत्तमे'ति मोक्षधर्मे। 'नासीदहो न रात्रिरासीन्नासदासीत्तन्महद्वपुस्तदाऽभवद्विश्वरूपं सा विश्वरूपस्य रजनी'ति भाल्लवेयश्रुतिः। 'न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसम्भवा। न योगित्वादीश्वरत्वात्सत्यरूपोऽच्युतो विभुरि'ति वाराहे। 'सर्वे नित्याः शाश्वताश्च देहास्तस्य परात्मनः। हानोपादानरहिता नैव प्रकृतिजाः क्वचित्। परमानन्दसन्दोहा ज्ञानमात्राश्च सर्वशः। सर्वे सर्वगुणैः पूर्णाः सर्वे भेदविवर्जिताः। अन्यूनानधिकाश्चैव गुणैः सर्वैश्च सर्वतः। देहिदेहभिदा चैव नेश्वरे विद्यते क्वचित्। तत्स्वीकारादिशब्दस्तु हस्तस्वीकारवत्स्मृतः। वैलक्षण्यान्न वा तत्र ज्ञानमात्रार्थमीरितम्। केवलैश्वर्यसंयोगादीश्वरः प्रकृतेः परः। जातो गतस्त्विदं रूपं तदित्यादि व्यवक्ष्यत'इति महावाराहे। 'एकमेवाद्वितीयं' 'नेह नानाऽस्ति किञ्चन'। 'एवं धर्मान्पृथक्पश्यन्नि'त्यादि च। तस्यैवास्थूलत्वाद्यैश्वर्ययोगात्। तथा च कौर्मे। 'अस्थूलश्चानणुश्चैव स्थूलोऽणुश्चैव सर्वतः। अवर्णः सर्वतः प्रोक्तः श्यामो रक्तान्तलोचनः। ऐश्वर्ययोगाद्भगवान्विरुद्धार्थोऽभिधीयते। तथापि दोषाः परमे नैवाहार्याः कथञ्चन। गुणा विरुद्धा अपि तु समाहार्याश्च सर्वत'इति ॥ विष्णुधर्मोत्तरे च 'गुणाः सर्वेऽपि युज्यन्ते ह्यैश्वर्यात्पुरुषोत्तमे। दोषाः कथञ्चिन्नैवात्र युज्यन्ते परमो हि सः। गुणदोषौ माययैव केचिदाहुरपण्डिताः। न तत्र माया मायावी

तदीयौ तौ कुतो ह्यतः । तस्मान्न मायया सर्वं सर्वमैश्वर्यसम्भवम् । अमायो हीश्वरो यस्मात्तस्मात्तं परमं विदुरि'ति ॥ १ ॥ [3]यस्यावयवसंस्थानैः । 'नाभ्या आसीदन्तरिक्षमि'त्यादि । सत्वं साधुगुणम् । ज्ञानबलरूपं वा । 'बलज्ञानसमाहारः सत्वमित्यभिधीयत'इति मात्स्ये ॥ ॥३॥ [5]निधानम् । अत्रैकीभवन्त्यन्तत इति । अंशांशेन सामर्थ्यैकदेशेन । ब्राह्मे च 'यच्छक्त्यैकांशसम्भूतं जगदेतच्चराचरमि'ति ॥ ५ ॥ '[6]कुमारो नाम भगवान्स्वयं स्वस्मादजायत । दिदेश ब्रह्मणे ब्रह्म ब्रह्मचर्ये स्थितो विभुः । यस्मात्सनत्कुमारश्च ब्रह्मचर्यमपालयत् । यः स्थाणोः स्थाणुतां प्रादाद्भगवानव्ययो हरिरि'ति ब्राह्मे ॥ ६ ॥ '[8]अवतारस्तृतीयोऽस्य देवर्षिः प्रथितो दिवि । महिदासस्त्वैतरेयो यस्तन्त्रं नारदेऽवददि'ति च ॥ ८ ॥ [9]धर्मकलासर्गः धर्मे स्वांशावतारः । लोकदृष्ट्याऽत्मशमोपेतम् ॥ ९ ॥ तन्त्रं [10]साङ्ख्यं वेदानुसारि । पाद्मे च 'कपिलो वासुदेवाख्यस्तन्त्रं साङ्ख्यं जगाद ह । ब्रह्मादिभ्यश्च देवेभ्यो भृग्वादिभ्यस्तथैव च । तथैवासुरये सर्ववेदार्थैरुपबृंहितम् ॥ सर्ववेदविरुद्धं च कपिलोऽन्यो जगाद ह । सांख्यमासुरयेऽन्यस्मै कुतर्कपरिबृंहितमि'ति ॥ १० ॥ [11]आन्वीक्षिकीं तत्त्वविद्याम् । 'आन्वीक्षिकी कुतर्काख्या तथैवान्वीक्षिकी परे'ति मात्स्ये ॥ ११ ॥ [14]पृथुशरीराविष्टं

षोडशकलमादौ लोकसिसृक्षया ॥ १ ॥ यस्यावयवसंस्थानैः कल्पितो लोकविस्तरः । तद्वै भगवतो रूपं विशुद्धं सत्वमूर्जितम् ॥ ३ ॥ एतन्नानावताराणां निधानं बीजमव्ययम् । यस्यांशांशेन सृज्यन्ते देवतिर्यङ्नरादयः ॥ ५ ॥ स एव प्रथमं देवः कौमारं सर्गमास्थितः । चचार दुश्चरं ब्रह्मा ब्रह्मचर्यमखण्डितम् ॥६॥ तृतीयमृषिसर्गं वै देवर्षित्वमुपेत्य सः । तन्त्रं सात्वतमाचष्ट नैष्कर्म्यं कर्मणां यतः ॥ ८ ॥ तुर्यं धर्मकलासर्गे नरनारायणावृषी । भूत्वाऽऽत्मोपशमोपेतमकरोद्दुश्चरं तपः ॥ ९ ॥ पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम् । प्रोवाचासुरये साङ्ख्यं तत्वग्रामविनिर्णयम् ॥ १० ॥ षष्ठमत्रेरपत्यत्वं वृतः प्राप्तोऽनुसूयया । आन्वीक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवान् ॥ ११ ॥ ऋषिभिर्याचितो



रूपम् । 'आविवेश पृथुं देवः शङ्खी चक्री चतुर्भुज'इति पाद्मे । उश इच्छायाम् । सत्यकामः ॥ १४ ॥ [21]रामात्पूर्वमप्यस्ति व्यासावतारः । 'तृतीयं युगमारभ्य व्यासो बहुषु जज्ञिवानि'ति कौर्मे ॥ २१ ॥ [23]आवेशो बलभद्रे । 'शङ्खचक्रभृदीशेशः श्वेतवर्णो महाभुजः । आविष्टः श्वेतकेशात्मा शेषांशं रोहिणीसुतमि'ति महावाराहे ॥२३॥ [24]मोहनार्थं दानवानां बालरूपं पथि स्थितम् । पुत्रं तं कल्पयामास मूढबुद्धिर्जिनः स्वयम् । ततः सम्मोहयामास जिनाद्यानसुरांशकान् । भगवान्वाग्भिरुग्राभिरहिंसावाचिभिर्हरिरि'ति ब्रह्माण्डे ॥२४॥ [26]विदासिनः उन्नतात् भिन्नाद्वा । 'त्रिविधाः पुरुषा लोके नीचमध्यविदासिन' इति ब्राह्मे । 'चतुर्धा वर्णरूपेण जगदेतद्विदासितमि'ति च ॥ २६ ॥ [28]एते प्रोक्ता अवताराः । मूलरूपी कृष्णः स्वयमेव । 'जीवास्तत्प्रतिबिम्बांशा वराहाद्याः स्वयं हरिः । दृश्यते बहुधा विष्णुरैश्वर्यादिक एव त्वि'ति ब्रह्मवैवर्ते ॥ २८ ॥ [30]एतज्जडरूपम् । 'नारायणवराहाद्याः परमं रूपमीशितुः । जैवं तु प्रतिबिम्बाख्यं जडमारोपितं हरेः । एवं हि त्रिविधं तस्य रूपं विष्णोर्महात्मन'इति पाद्मे ॥३०॥ [31]दृश्यत्वं जडरूपत्वम् । 'अविज्ञाय परं देहमानन्दात्मानमव्ययम् । आरोपयन्ति जनिमत्पञ्च-

भेजे नवमं पार्थिवं वपुः । दुग्धवानोषधीर्विप्रास्तेनायं च उशत्तमः ॥१४॥ ततः सप्तदशे जातः सत्यवत्यां पराशरात् । चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः ॥ २१ ॥ एकोनविंशे विंशतिमे वृष्णिषु प्राप्य जन्मनी । रामकृष्णाविति भुवो भगवानहरद्भरम् ॥ २३ ॥ ततः कलौ सम्प्रवृत्ते सम्मोहाय सुरद्विषाम् । बुद्धो नाम्ना जिनसुतः कीकटेषु भविष्यति ॥२४॥ अवतारा ह्यसंख्येया हरेः सत्वनिधेर्द्विजाः । यथा विदासिनः कुल्याः सरसः स्युः सहस्रशः ॥ २६ ॥ एते स्वांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् । इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे ॥ २८ ॥ एतद्रूपं भगवतो ह्यरूपस्य चिदात्मनः । मायागुणैर्विरचितं महदादिभिरात्मनि ॥ ॥ ३० ॥ यथा नभसि मेघौघा रेणुर्वा पार्थिवोऽनिले । एवं द्रष्टरि दृश्यत्वमारोपितमबुद्धिभिः ॥ ३१ ॥ अतः परं यदव्यक्तमव्यूढगुण-

भूतात्मकं जडमि'ति स्कान्दे ॥३१॥ [32]अतः परं जडेश्वरयोः परम् । अव्यूढगुणबृंहितं अनादिकाले कदाचिदप्यनपगतसत्वादिगुणबृंहितम् । अदृष्टाश्रुतवस्तुत्वात्पुनर्भवः ॥ ३२ ॥ [33]अविद्यया जीवकृते परमेश्वरे प्रतिषिद्धे इति ब्रह्मदर्शनम् ॥३३॥ [34]विशारदः परमेश्वरः । तन्मतिर्माया । यदा नैनं शोचयामीत्युपरता तदा सम्पन्न एव ॥ ३४ ॥ '[35]अप्रयत्नात्स्वतन्त्रत्वात्फलानां च विवर्जनात् । क्रियायाश्च स्वरूपत्वादकर्तेति च तं विदुः । कर्तृत्वं भ्रान्तिजं प्राहुरतस्तत्त्वविदो जनाः । ऐश्वर्यजं तु कर्तृत्वं सम्यक्तत्त्ववेदिन'इति पाद्मे ॥ ३५ ॥ '[40]धर्मः कं शरणं गत इत्यस्य तमेव व्यासरूपिणमिति परिहार उच्यते इदं भागवतमित्यादिना ॥ ४० ॥ इति प्रथमस्कन्धतात्पर्ये तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः

[4]निर्विकल्पकः । मदीयं तदीयमिति भेदमपहाय सर्वमीश्वराधीनमिति विज्ञाय स्थितः । 'साम्यमीश्वररूपेषु सर्वत्र तदधीनताम् । पश्यति ज्ञानसम्पत्त्या विनिद्रो यः स योगविदि'ति ब्राह्मे ॥४॥ [13]तृतीये

---

बृंहितम् । अदृष्टाश्रुतवस्तुत्वात्सजीवो यः पुनर्भवः ॥ ३२ ॥ यत्रेमे सदसद्रूपे प्रतिषिद्धे स्वसंविदा । अविद्यात्मनिकृते इति तद्ब्रह्मदर्शनम् ॥ ॥ ३३ ॥ यद्येषोपरता देवी माया वैशारदी मतिः । सम्पन्न एवेति विदुर्महिम्नि स्वे महीयते ॥ ३४ ॥ एवं जन्मानि कर्माणि ह्यकर्तुरजनस्य च । वर्णयन्ति स्म कवयो वेदगुह्यानि हृत्पतेः ॥ ३५ ॥ इदं भागवतं नाम पुराणं ब्रह्मसम्मितम् । उत्तमश्लोकचरितं चकार भगवानृषिः ॥ ४० ॥

चतुर्थोऽध्यायः

तस्य पुत्रो महायोगी समदृङ् निर्विकल्पकः । एकान्त गतिरुन्निद्रो गूढो मूढ इवेयते ॥ ४ ॥ सूत उवाच ॥ द्वापरे समनुप्राप्ते तृतीये युग-



द्वापरे युगे पर्यवसाने प्राप्ते सति ॥ १३ ॥ '[14-17]नित्यज्ञानस्य चिदृष्टिर्लोकदृष्टिव्यपेक्षया । सर्वज्ञोऽप्यज्ञवद्देवः सर्वशक्तिरशक्तवत् । प्रत्यापयति लोकानामज्ञानं मोहनाय चे'ति कौर्मे ॥ १४-१७ ॥ [24]भारतं ब्राह्मणादीनां वेदार्थपरिवित्तये । त एव वेदास्त्वन्येषां नर्ते तत्कस्यचित्सुखमि'ति स्कान्दे ॥ २४ ॥ [25]अतोषोऽनलम्बुद्धिः । 'श्रुत्वा कथां न तुष्यामि हरेरद्भुतकर्मण'इति मात्स्ये ॥ २५ ॥ [26]अप्रसादश्च स एव । 'कः प्रसन्नो भवेद्दिव्यां कथां शृण्वन्हरेः परामि'ति च ॥ २६ ॥ [27]आचारापेक्षया धृतव्रतत्वादि परिपूर्णस्य ॥ २७, २८ ॥ [28]दैह्यः देहरूपः । आत्मना विभुः स्वत एव व्याप्तः । 'तस्य सर्वावतारेषु न विशेषोऽस्ति कश्चन । देहदेहिविभेदश्च न परे विद्यते क्वचित् । सर्वेऽवतारा व्याप्ताश्च सर्वे सूक्ष्माश्च तत्त्वतः । ऐश्वर्ययोगाद्भगवान् क्रीडत्येवं जनार्दन' इति महासंहितायाम् । अवतारप्रयोजनासम्पत्त्याऽसम्पन्न इव । ब्रह्मवर्चसयुक्तानामुत्तमः ॥२९॥ [30]पुनरपेक्षितत्वान्न प्रायेण निरूपिताः ।

---

पर्यये । जातः पराशराद्योगी वासव्यां कलया हरेः ॥ १३ ॥ स कदाचित्सरस्वत्या उपस्पृश्य जलं शुचिः । विविक्त एक आसीन उदिते रविमण्डले ॥ १४ ॥ परावरज्ञः स ऋषिः कालेनाव्यक्तरंहसा । युगधर्मव्यतिकरं प्राप्तं भुवि युगे युगे ॥१५॥ भौतिकानां च भावानां शक्तिह्रासं च तत्कृतम् । अश्रद्दधानान्निःसत्वान् दुर्मेधान् ह्रसितायुषः ॥ १६ ॥ दुर्भगांश्च जनान् वीक्ष्य मुनिर्दिव्येन चक्षुषा । सर्ववर्णाश्रमाणां यद्दध्यौ चिरममोघदृक् ॥ १७ ॥ स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा । कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह । इति भारतमाख्यानं कृपया मुनिना कृतम् ॥ २४ ॥ एवं प्रवृत्तस्य सदा भूतानां श्रेयसि द्विजाः । सर्वात्मकेनाऽपि यदा नातुष्यद्धृदयं ततः ॥२५॥ नातिप्रसन्नहृदयः सरस्वत्यास्तटे शुचौ । वितर्कयन् विविक्तस्थ इदं प्रोवाच धर्मवित् ॥ २६ ॥ धृतव्रतेन हि मया छन्दांसि गुरवोऽग्नयः । मानिता निर्व्यलीकेन गृहीतं चानुशासनम् ॥ २७ ॥ भारतव्यपदेशेन ह्याम्नायार्थः प्रदर्शितः । दृश्यते यत्र धर्मो हि स्त्रीशूद्रादिभिरप्युत ॥ २८ ॥ अथापि बत मे दैह्यो ह्यात्मा चैवात्मना विभुः । असम्पन्न इवाभाति ब्रह्मवर्चस्विसत्तमः ॥ २९ ॥ किं

'यथा तु भारते देवो न तथाऽन्येषु केषुचित् । उच्यते न तथापीशं जानन्त्यज्ञा जनार्दनमि'ति स्कान्दे ॥ ३० ॥ [31]खेदोऽनलम्बुद्धिः । 'अतुष्टिरप्रसादश्च खेदोऽतृप्तिस्तथैव च । अनलत्वं वदन्त्येते सर्वे पर्यायवाचका' इति ब्राह्मे । मन्यमानस्य स्वेच्छया ॥ ३१ ॥ इति प्रथमतात्पर्ये चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः

[2]शारीरमानसयोरभेदादुभयथापि युज्यते । स्वतन्त्रत्वादात्मनैव ह्यलम्बुद्धिः ॥ २ ॥ [4]शोचसि प्रकाशयसि । 'अजस्रेण शोचिषा शोशुचान' इति हि श्रुतिः ॥ ४ ॥ '[5]ज्ञानशक्तिस्वरूपोऽपि ह्यज्ञाशक्तं वदेद्धरिः । अज्ञानां मोहनायेशस्तेन मुह्यन्ति मोहिता' इति पाद्मे ॥ ॥ ५ ॥ [9]धर्मादीनामल्पकथनेन पूर्तिः । न वासुदेवमहिम्नोऽतिकथितस्यापि ॥ ९ ॥ [10]वायसं तीर्थं वयोमात्रानुजीवि शास्त्रम् ॥१०॥ [12]परोक्षज्ञानं न शोभते । अपरोक्षज्ञानं न भक्त्या विनोत्पद्यते । 'यस्य

---

वा भागवता धर्मा न प्रायेण निरूपिताः । प्रियाः परमहंसानां त एव ह्यच्युतप्रियाः ॥ ३० ॥ तस्यैवं खिन्नमात्मानं मन्यमानस्य खिद्यतः । कृष्णस्य नारदोऽभ्यागादाश्रमं प्रागुदाहृतम् ॥ ३१ ॥

### पञ्चमोऽध्यायः

नारद उवाच ॥ पाराशर्य महाभाग भवतः कच्चिदात्मना । परितुष्यति शारीर आत्मा मानस एव वा ॥ २ ॥ जिज्ञासितमधीतं च ब्रह्म यत्तत्सनातनम् । तथापि शोचस्यात्मानमकृतार्थ इव प्रभो ॥ ४ ॥ व्यास उवाच ॥ अस्त्येव मे सर्वमिदं त्वयोक्तं तथापि नात्मा परितुष्यते मे । तन्मूलमव्यक्तमगाधबोधं पृच्छामहे त्वाऽत्मभवात्मभूतम् ॥ ५ ॥ यथा धर्मादयो ह्यर्था मुनिवर्यानुकीर्तिताः । न तथा वासुदेवस्य महिमा ह्यनुवर्णितः ॥९॥ न यद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं न गृणीत कर्हिचित् । तद्वायसं तीर्थमुशन्ति मानसा न यत्र हंसा न्यपतन् मिमङ्क्षया ॥ १० ॥ नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम् । कुतः पुनः



देवे परा भक्तिः' । 'यमेवैष वृणुते तेन लभ्यः' । 'यद्वासुदेवशरणा विदुरञ्जसैवे'त्यादेः ॥ १२ ॥ [13]शुचिश्रवाः विष्णुः । समाधिना समाधिभाषया । स्मरणं ग्रन्थकृतिः । स्मरन्ति चेत्यादेः ॥ १३ ॥ [15]प्रवृत्तिधर्मकृते ॥ १५ ॥ [16]अनन्तपारस्य विभोः सकाशाद्यत्सुखम् ॥ ॥ १६ ॥ [20]इतरोऽपि भगवानिवेश्वमिव । स्वातन्त्र्यात् ॥ २० ॥ [27]मयि स्थिते ब्रह्मणि स्वीयतामत्रेतीश्वरेच्छया परिकल्पितम् ॥ २७ ॥ [40]त्वमीश्वरोऽपि ॥ ४० ॥ इति प्रथमतात्पर्ये पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः

[11]मृगयाजीविनां खेटो वाटी पुष्पोपजीविनाम् । ग्रामो बहुजनाकीर्णो राजराजाश्रयं पुरम् । जलस्थलमतिस्फीतं पत्तनं कीर्त्यते

---

शश्वदभद्रमीश्वरे न चार्पितं कर्म यदप्यकारणम् ॥ १२ ॥ अतो महाभाग भवानमोघदृक् शुचिश्रवाः सत्यरतो धृतव्रतः । उरुक्रमस्याखिलबन्धमुक्तये समाधिनाऽनुस्मर यद्विचेष्टितम् ॥ १३ ॥ जुगुप्सितं धर्मकृतेऽनुशासनं स्वभावरक्तस्य महान् व्यतिक्रमः । यद्वाक्यतो धर्म इतीतरः स्थितो न मन्यते तस्य निवारणं जनः ॥ १५ ॥ विचक्षणोऽस्यार्हति वेदितुं विभोरनन्तपारस्य निवृत्तितः सुखम् । प्रवृत्तमानस्य गुणैरनात्मनस्ततो भवान् दर्शय चेष्टितं विभोः ॥ १६ ॥ इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसम्भवः । तद्धि स्वयं वेद भवांस्तथाऽपि प्रादेशमात्रं भवतः प्रदर्शितम् ॥२०॥ तस्मिंस्तदा लब्धरुचेर्महामुने प्रियश्रवस्यस्खलिता मतिर्मम । यथाऽहमेतत्सदसत् स्वमायया पश्ये मयि ब्रह्मणि कल्पितं परे ॥ २७ ॥ त्वमप्यदभ्रश्रुत विश्रुतं विभोः समाप्यते येन विदां बुभुत्सितम् । प्रख्याहि दुःखैर्मुहुरर्दितात्मनां संक्लेशनिर्वाणमुशन्ति नान्यथा ॥ ४० ॥

### षष्ठोऽध्यायः

स्फीतान् जनपदांस्तत्र पुरग्रामव्रजाकरान् । खेटान् पट्टनवाटीश्च

बुधैरि'ति स्कान्दे ॥ ११ ॥ [21]उभयं द्वितीयं नापश्यं तमेवापश्यम् ॥ ॥ २१ ॥ इति प्रथमतात्पर्ये षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः

[2]शम्यां प्रास्य तत्र शालां कृत्वा यत्र यज्ञः क्रियते स शम्याप्रासः ॥ २ ॥ [4]भक्तियोगेन सम्यक्प्रणिहिते लोकानां मनसि ॥ ४ ॥ [14]स्वात्मन एव विप्रियं न भर्तुः । प्रयोजनाभावाद्विप्रियमिव च तस्य प्रियमिति हि प्रख्यापोक्तम् ॥ १४ ॥ [15-56]स्वप्नोऽयम् । 'पार्थानुयातमात्मानं द्रौणिः स्वप्ने ददर्श ह । बन्धनं चात्मनस्तत्र द्रौपद्या चैव मोक्षणमि'ति स्कान्दे । तस्मान्नैषीकविरोधः ॥ १५-५७ ॥ इति प्रथमतात्पर्ये सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः

[23]भक्तियोगविधानविषयम् ॥ २३ ॥ [28]अपुनर्भवं दर्शयति ॥

---

वनान्युपवनानि च ॥ ११ ॥ प्रेमातिभरनिर्भिन्नपुलकाङ्गोऽति निर्वृतः । आनन्दसम्प्लवे लीनो नापश्यमुभयं मुने ॥ २१ ॥

सप्तमोऽध्यायः

सूत उवाच ॥ ब्रह्मनद्याः सरस्वत्याः आश्रमः पश्चिमे तटे । शम्याप्रास इति प्रोक्त ऋषीणां सत्रवर्धनः ॥ २ ॥ भक्तियोगेन मनसि सम्यक्प्रणिहितेऽमले । अपश्यत्पुरुषं पूर्णं मायां च तदपाश्रयाम् ॥४॥ भर्तुः प्रियं द्रौणिरिति स्म पश्यन् कृष्णासुतानां स्वपतां शिरांसि । अपाहरद्विप्रियमेतदस्य जुगुप्सितं कर्म विगर्हयन्ती ॥१४॥ माता शिशूनां निधनं सुतानां निशम्य घोरं परितप्यमाना । यदाऽरुदद्बाष्पकलाकुलाक्षी तां सान्त्वयन्नाह किरीटिमाली ॥ १५ ॥ बन्धनं द्रविणादानं स्थानान्निर्यापणं तथा । एष हि ब्रह्मबन्धूनां वधो नान्योऽस्ति दैहिकः ॥ ५७ ॥

अष्टमोऽध्यायः

तथा परमहंसानां मुनीनाममलात्मनाम् । भक्तियोगविधानार्थं कथं पश्येमहि स्त्रियः ॥ २३ ॥ विपदः सन्तु नः शश्वत्तत्र तत्र जगत्पते ।



॥ २८ ॥ [31]तत्तद्योग्यतया समत्वम् ॥ ३१ ॥ [41]यर्हि भवतो दर्शनं तदा यदूनामस्माकं नामरूपे ॥ ४१ ॥ इति प्रथमतात्पर्ये अष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः

[5]'यः पदातिं हन्ति स भवति चातुर्मास्ययाजी यः सादिनं सोऽग्निष्टोमस्य यो हन्ति गजरथौ सोऽश्वमेधराजसूयाभ्यामि'त्यादि शाश्वतं वचः ॥ ५ ॥ '[41]असङ्गश्चाव्ययोऽभेद्योऽनिग्राह्योऽशोष्य एव च । विद्धोऽसृगश्चितो बद्ध इति विष्णुः प्रदर्श्यते । असुरान्मोहयन्देवः क्रीडयैव सुरेष्वपि । मानुषान्मध्यया दृष्ट्या न मुक्तेषु कथञ्चने'ति स्कान्दे ॥ ४१, ४५ ॥ इति प्रथमतात्पर्ये नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः

॥ ॐ ॥ [4]'अमात्या मन्त्रिणो दूताः श्रेणयश्च पुरोहिताः ।

---

भवतो दर्शनं यत्स्यादपुनर्भवदर्शनम् ॥ २८ ॥ मन्ये त्वां कालमीशानामनादिनिधनं परम् । समं चरन्तं सर्वत्र भूतानां यन्मिथः कलिः ॥ ३१ ॥ ते वयं नामरूपाभ्यां यदुभिः सह पाण्डवाः । भवतो दर्शनं यर्हि हृषीकाणामिवेशितुः ॥ ४१ ॥

नवमोऽध्यायः

नैनो राज्ञः प्रजाभर्तुः धर्मो युद्धे वधो द्विषाम् । इति मे न तु बोधाय कल्पते शाश्वतं वचः ॥ ५ ॥ युधि तुरगरजोविधूम्रविष्वक्कचलुलितश्रमवार्यलङ्कृतास्ये । मम निशितशरैर्विभिद्यमानत्वचि विलसत्कवचेऽस्तु कृष्ण आत्मा ॥ ४१ ॥ (नि)शित विशिखहतो विशीर्णदंशः क्षतज परिप्लुत आततायिनो मे । प्रसभमभिससार मद्वधार्थं स भवतु मे भगवान्मुदे मुकुन्दः ॥ ४५ ॥

दशमोऽध्यायः

निशम्य भीष्मोक्तमथाच्युतोदितं प्रवृत्तविज्ञानविधूत विभ्रमः ।

पुरं जनपदं चेति सप्त प्रणिधयः स्मृता' इति ब्राह्मे ॥ ४ ॥ [20]पालनानुग्रहजयान् गौणेऽण्डे संस्थितो हरिः । करोत्यसौ बहिःसंस्थो न करोतीव निर्गुण'इति पाद्मे । अतो नानुरूपानुरूपाश्च ॥ २० ॥ [22]सत्वादिशक्तिषु ॥ २२ ॥ [23]श्रीर्भूर्दुर्गेति या भिन्ना जीवमाया महात्मनः । आत्ममाया तदिच्छा सा गुणमाया जडात्मिके'ति महासंहितायाम् ॥ अप्रसिद्धेस्तद्गुणानामनामासौ प्रकीर्तितः । अप्राकृतत्वाद्रूपस्याप्यरूपोऽसावुदीर्यत'इति वासुदेवाध्यात्मे ॥२३॥ [26]सात्विकानामनुग्राहकः । 'अगुणोऽपि परो देवो ह्यनुगृह्णाति सात्विकान् । देवांस्तु मानवान्मध्यानुपेक्ष्य क्लेश्यतेऽसुरानि'ति ब्रह्मदर्शने । 'सात्वतः सात्विकस्नेहात्सत्वो ह्यानन्दरूपत'इति ब्रह्मवैवर्ते । 'धारकत्वाद्धर्मरूपो ह्यैश्वर्यादेर्भगो ह्यसौ । सत्यमानन्दरूपत्वादृतो ज्ञानस्वरूपतः । यशो ह्यलं प्रसिद्धत्वाद्दया हि करुणाकर'इति तन्त्रभागवते । एवंविधगुणस्वरूपाणि रूपाणि दधद्युगेयुगे ॥ २६ ॥ '[31]अग्निपुत्रा महात्मानस्तपसा स्त्रीत्वमापिरे । भर्तारं च जगद्योनिं वासुदेवमजं विभुमि'ति महाकौर्मे ॥ ॥ ३१ ॥ [33]स्नेहमात्रात् ॥ ३३ ॥ [37]गविष्ठ आदित्यः । 'असौ वाव गविष्ठोऽप्स्वुदेत्यप्स्वस्तमेती'ति माध्यन्दिनायनश्रुतिः ॥३७॥ [46]कुरूणां मधूनां च नः ॥४६॥ [75]तदाश्रया बुद्धिः । तज्ज्ञानिनामपि प्रकृतिस्थानां न तत्सङ्गः किमु तस्येति व्यत्यासदृष्टान्तः । 'व्यत्यासोऽनन्वयश्चैव प्रसिद्धो भूत एव च । सर्वसांहार(रि)कश्चेति दृष्टान्तः पञ्चधा स्मृत'इति ब्राह्मे ॥ ७५ ॥ [76]मतयो यथा यथामति मेनिरे ॥ ७६ ॥ इति प्रथमतात्पर्ये दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः

[19]रामो दाशरथिर्यथा अधिकदृष्टान्तः । 'ऊर्णनाभ्यादिकोविष्णोर्विष्णुर्विष्णोस्तथैव च । विष्णुर्जीवस्य दृष्टान्ता ऊनसाम्याधिकाः क्रमादि'ति ब्राह्मे ॥ १९ ॥ '[31]पूरयन्ति दिशः सोमं देवा गावः सरस्वती'ति गारुडे ॥ ३१ ॥ इति प्रथमतात्पर्ये एकादशोऽध्यायः ॥ ॥ ११ ॥

## द्वादशोऽध्यायः

'[5]तत्प्राणे प्रपन्न उदतिष्ठदि'ति श्रुतिः ॥ ५ ॥ [12]यदुकुलक्षय-

---

शशास गामिन्द्र इवाजिताश्रयः प्रणिध्युपात्तामनुजानुवर्तितः ॥ ४ ॥ अश्रूयन्ताशिषः सत्यास्तत्र तत्र द्विजेरिताः । नानुरूपाऽनुरूपाश्च निर्गुणस्य गुणात्मनः ॥ २० ॥ स वै किलायं पुरुषः पुरातनो य एक आसीदविशेष आत्मनि । अग्रे गुणेभ्यो जगदात्मनीश्वरे निमीलितात्मा निशि सुप्तशक्तिषु ॥ २२ ॥ स एव भूयो निजवीर्यचोदितां स्वजीवमायां प्रकृतिं सिसृक्षतीम् । अनामरूपात्मनि रूपनामनी विधित्समानोऽनुससार शास्त्रिकृत्॥२३॥ यदा ह्यधर्मेण तमोऽधिका नृपा जीवन्ति तत्रैष हि सात्वतः किल । धर्मं भगं सत्यमृतं दयां यशो भवाय रूपाणि दधद्युगे युगे ॥२६॥ एताः पुरा स्त्रीत्वमवाप्तये समं निरस्तशोकं बत साधु कुर्वते । यासां गृहात्पुष्करलोचनः पतिर्न जात्वपैत्याकृतिभिर्हृदि स्पृशन् ॥३१॥ अजातशत्रुः पृतनां गोपीथाय मधुद्विषः । परेभ्यः शङ्कितः स्नेहात्प्रायुङ्क्त चतुरङ्गिणीम् ॥ ३३ ॥ तत्र तत्र च तत्रत्यैर्हरिः प्रत्युद्यतार्हणः । सायं भेजे दिशं पश्चाद्गविष्ठो गां गतस्तदा ॥ ३७ ॥ यर्ह्यम्बुजाक्षापससार भो भवान् कुरून् मधून् वाथ सुहृद्दिदृक्षया । तत्राब्दकोटिप्रतिमः क्षणो भवेद्रविंविनाऽक्ष्णामिव नस्तवाच्युत ॥ ४६ ॥ एतदीशनमीशस्य प्रकृतिस्थोपि तद्गुणैः । न युज्यते सदाऽऽत्मस्थैः यथा बुद्धिस्तदाश्रया ॥७५॥ तं मेनिरे खला मूढाः स्त्रैणं चानुव्रतं रहः । अप्रमाणविदो भर्तुरीश्वरं मतयो यथा ॥ ७६ ॥

### एकादशोऽध्यायः

ब्राह्मणाः ऊचुः ॥ प्रार्थ प्रजाविता साक्षादिक्ष्वाकुरिव मानवः । ब्रह्मण्यः सत्यसन्धश्च रामो दाशरथिर्यथा ॥ १९ ॥ स राजपुत्रो ववृध आशु शुक्ल इवोडुपः । आपूर्यमाणः पितृभिः काष्ठाभिरिव सोऽन्वहम् ॥३१॥

### द्वादशोऽध्यायः

प्रत्युज्जग्मुः प्रहर्षेण प्राणांस्तन्व इवागतान् । अभिसङ्गम्य विधिव-

मेष्यत्। 'शापं श्रुत्वा ब्राह्मणानामुद्धवः खिन्नमानसः। उदासीनं तथा कृष्णमिव सुप्रीतमेव च॥ न शिष्यमाणं स्वकुलं स्वर्यियासुं च केशवम्। ज्ञात्वा पप्रच्छ भगवत्स्वरूपं तमुपह्वरे॥ मैत्रेयोऽपि तदैवागाज्जिज्ञासुस्तत्त्वमुत्तमम्। तयोरदात्स भगवान् ज्ञानं निर्मलमञ्जसा॥ षड्विंशद्वत्सरात्पूर्वं स्वर्गतेः पुरुषोत्तमः। प्रेषयामास च हरिरुद्धवं बदरीमनु॥ कलापग्रामिणां वक्तुमेतत्तत्त्वमशेषतः। विदुरं तीर्थयात्रास्थमन्तराले स उद्धवः॥ दृष्ट्वा नशिष्यमाणं च कुलं जिगमिषुं हरिम्। कथयित्वा बदर्यां च कलापग्रामवासिनाम्॥ प्रोच्य तत्त्वमशेषेण वासुदेवमुखोद्गतम्। षड्विंशद्वर्षगमने पुनरागतिमात्मनः॥ तेषामुक्त्वा पुनः कृष्णसन्निधौ विचचार ह। मैत्रेयो विदुरायैतदूचिवान्कृष्णचोदितः॥ विदुरः पाण्डवानां च विना यदुविनाशनम्। षट्त्रिंशद्वर्षतः पूर्वं ज्ञात्वाऽप्यप्रियमेव तत्॥ नावोचद्विदुरो धीमांस्तस्मान्नाप्रियमावदेदि'ति पाद्मे॥ 'तावच्छशासक्षितिमेकचक्रामेकातपत्रामजितेन पार्थ' इति चोपरि॥ 'विदुरं चागतं पुनरि'ति च। भारते चैकविंशद्वर्षात्पूर्वं विदुरस्य युधिष्ठिरभाव उक्तः॥ १२॥ [15]योऽर्यमा दण्डमबिभ्रत्स वर्षशतं यावच्छूद्रत्वं बभार। 'न देवानां न देवीनां सामस्त्येन जनिर्भुवि। अंशांशेनैव जायन्ते सर्वे त्वाजानजादयः'॥ १५॥ '[20]संहर्ता भगवान्विष्णुः काल इत्यभिधीयते। अथवा गुणसर्वस्वं कालशब्दो व्यनक्ति ही'ति स्कान्दे॥२०॥ [28]स्वैरज्ञातगतिः विविक्तगतिः॥२८॥ [31]पितरौ कुन्तीधृतराष्ट्रौ। न चापश्यत्। तस्य मनसि तेषां विपद्भावो

रपरिष्वङ्गाभिवन्दनैः॥ ५॥ इत्युक्तो धर्मराजेन सर्वं तत्समवर्णयत्। यथानुभूतं भ्रमता विना यदुकुलक्षयम्॥ १२॥ अबिभ्रदर्यमा दण्डं यथाघमघकारिषु। यावद्बभार शूद्रत्वं शापाद्वर्षशतं यमः॥ १५॥ प्रतिक्रिया न यस्येह कुतश्चित्कर्हिचित्प्रभो। स एष भगवान् कालः सर्वेषां नः समागतः॥ २०॥ अथोदीचीं दिशं यातु स्वैरज्ञातगतिर्भवान्। इतोऽर्वाक् प्रायशः कालः पुंसां गुणविकर्षणः॥२८॥ अजातशत्रुः कृतमैत्रो



बभूव। अन्यथा महाभारतविरोधात्। स्कान्दे च। 'भीमसन्तर्जितो राज्ञस्त्वनुज्ञां प्राप्य यत्नतः। धृतराष्ट्रो वनेवासमकरोद्वत्सरत्रयम्। विदुरस्तद्दिदृक्षार्थमागतेषु वनं पुरा। पाण्डवेषु तु राजानं प्रविश्यैकत्वमागतः। ततो दावाग्निना दग्धं धृतराष्ट्रं च सौबलीम्। श्रुत्वा कुन्तीं च चिन्तां ते प्रापुः पाण्डुसुतास्तदा॥ तांस्तदा नारदो विद्वान् शमयामास धर्मवित्। उक्त्वोत्तमां गतिं तेषां निष्ठां तात्कालिकीं तथे'त्यादि॥ ॥३१॥ [32]ब्रह्माण्डे च। 'धृतराष्ट्रे मृते सूतः सञ्जयः पाण्डुसूनवे। गतिं शशंस कुन्त्याश्च गान्धारीधृतराष्ट्रयोरि'त्यादि॥ पितृव्योऽपि धृतराष्ट्र एव। द्विरुक्तिस्तात्पर्यार्था। 'यत्राधिक्यं तत्परता बहुवारमपि ध्रुवम्। तद्वदन्ति महाप्राज्ञा लोकवेदानुसारत'इति ब्रह्मतर्के॥ ३२॥ [34]पितृव्यौ गान्धारीधृतराष्ट्रौ॥ ३४॥ [37]मुषितोऽस्मीति प्रलापः॥ ३७॥ क्व [40]गतावित्यदृष्टयपेक्षया॥ ४०॥ [44]अपरिहार्यत्वादशोच्याः॥ ४४॥ [51]गमनकाले सह भ्रात्रा॥ ५१॥ [53]आस्त इत्याद्यतीतार्थे। 'स एष तर्ह्यध्यास्त आसनं पार्थिवोचितमि'त्यादिवत्। 'सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च। व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च

हुताग्निर्विप्रांस्त्वा तिलगोवस्त्ररुक्मैः। गृहं प्रविष्टो गुरुवन्दनाय न चापश्यत् पितरौ सौबलीं च॥ ३१॥ तत्र संजयमासीनं पप्रच्छोद्विग्नमानसः गावल्गणे क्व नस्तातो वृद्धो हीनश्च नेत्रयोः। अम्बा वा हतपुत्रार्ता पितृव्यः क्व गतो इतः॥३२॥ पितर्युपरते पाण्डौ सर्वान्नः सुहृदः शिशून्। अरक्षतां व्यसनतः पितृव्यौ क्व गतावितः॥ ३४॥ संजय उवाच—अहं च व्यंसितो राजन् पित्रोर्वः कुलनन्दन। न वेद साध्व्या गान्धार्या मुषितोऽस्मि महात्मभिः॥ ३७॥ राजोवाच—नाहं वेद गतिं पित्रोर्भगवन् क्व गतावितः। अम्बा वा हतपुत्रार्ता क्व गता च तपस्विनी। कर्णधार इवापारे सीदतां पारदर्शनः॥ ४०॥ यन्मन्यसे ध्रुवं लोकमध्रुवं वा नोभयम्। सर्वथा हि न शोच्यास्ते स्नेहादन्यत्र मोहजात्॥ ४४॥ धृतराष्ट्रः सह भ्रात्रा गान्धार्या च स्वभार्यया। दक्षिणेन हिमवत ऋषीणामाश्रमं गतः॥ ५१॥ स्नात्वा त्रिषवणं तस्मिन् हुत्वा चाग्नीन्यथा-

सिध्यति बाहुलकेने'ति महाव्याकरणे । 'व्यासादयो वर्तमानमतीतानागते तथा । व्यत्यस्यापि वदन्त्यद्धा मोहनार्थं दुरात्मनाम् ॥ पौर्वापर्यं यतो नैव सदैव परिवर्तनात् । अतश्च व्यत्ययादेतद्वदन्ति ज्ञानचक्षुष' इति ब्राह्मे ॥ ५३ ॥ [55]विज्ञानात्मा विरिञ्चोऽयं यस्तस्मिँल्लीयते जगत् । यार्दांसि सागरे यद्वत्स क्षेत्रज्ञे जनार्दने । हृदिस्थे च स च व्याप्ते स्वात्मन्येकीभवत्युत ॥ प्रलयौ भेदवन्तौ तु पूर्वोक्तौ ब्रह्मकृष्णयोः । अन्तस्थस्य बहिष्ठे तु तस्य तस्मिन्नभेदत'इति ब्रह्मवैवर्ते । काले तस्य तत्र लयो भविष्यतीति ध्यानमात्रं विलापनम् ॥ 'अविद्यमानमपि यो ध्यायेत्तैवं विनिश्चितः । उच्यते तस्य कर्तेति तथैव मुनयोऽमलाः । जगद्विलापयामासुरित्युच्यन्तेऽथ तत्स्मृतेः ॥ न च तत्स्मृतिमात्रेण लयो भवति निश्चितमि'ति नारदीये। 'स्वरूपं जायमानं च आकाशं च घटे द्विधा ॥ स्वरूपं जायमानं तु घटे निर्भेदमेव तु । भिन्नवद्व्यवहाराय समर्थं तल्लये भवेत् । तद्वदेवावतारेषु देहस्थश्च हरिः स्वयम् । भिन्नवद्व्यवहाराय शक्तो लीने जगत्यपि । स एव पूर्ववज्ज्ञेयो निर्विशेषेण केशवः । जायमानं घटे जाते जायते तल्लयेन तु । तस्माद्भिन्नं महाकाशादेवं जीवोऽपि कीर्तितः ॥ उपाधेश्चैव नित्यत्वान्नैव जीवोऽपि नश्यति । स्वरूपत्वादुपाधेश्च न भिन्नोपाधिकल्पनम् ॥ न चाभिन्नत्वमीशेन चिन्मात्रत्वं च युज्यत' इति ब्रह्मतर्के ॥ ५५ ॥ [56]त्रिगुणात्मिका तथा ज्ञानं विष्णुशक्तिस्तथैव च । मायाशब्देन भण्यन्ते शब्दतत्वार्थवेदिभिरि'ति नाममहोदधौ । अत्र सत्वादयो मायागुणाः । 'परावरे तथैवारादुभयार्थाभिधायिन' इति च ॥ ५६ ॥ [60]एतत्सर्व

---

विधि । अब्भक्ष उपशान्तात्मा स आस्ते विगतेक्षणः ॥५३॥ विज्ञानात्मनि संयोज्य क्षेत्रज्ञे प्रविलाप्य तम् । ब्रह्मण्यात्मानमाधारे घटाम्बरमिवाम्बरे ॥ ५५ ॥ ध्वस्तमायागुणोद्रेको निरुद्धकरणाशयः । निवर्तिताखिलाहार आस्ते स्थाणुरिवाधुना ॥ ५६ ॥ विदुरस्तु तदाश्चर्यं निशम्य कुरुनन्दन । हर्षशोकयुतस्तस्माद्गन्ता तीर्थनिषेवकः ॥ ६० ॥



पूर्वमेव ज्ञात्वा तस्मादेव कारणाद्विदुरस्तीर्थानि ययौ ॥ ६० ॥ इति प्रथमतात्पर्ये द्वादशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः

[2]मासशब्देनाहान्युच्यन्ते । तथाहि महाभारते । 'अहस्तु मासशब्दोक्तं यत्र चिन्तायुतं व्रजेत् । एवं वत्सरभाद्यं च विपरीते विपर्यय' इति नाममहोदधौ ॥ २ ॥ [8]अङ्कं पृथिवीम् । 'यदा त्यागादिरुच्येत पृथिव्याद्यङ्ककल्पना । तदा ज्ञेया नहि स्वाङ्गं कदाचिद्विष्णुरुत्सृजेदि'ति ब्रह्मतर्के ॥ ८ ॥ [14]अग्नौ पदं करोति । 'यदुलूको वदति मोघमेतद्यत्कपोतः पदमग्नौ कृणोती'ति हि श्रुतिः ॥ १४ ॥ [34]यथाऽन्येषां सुखं भविष्यति तथा । नित्यसुखत्वाद्धरेः । 'अत्युत्तमानां कुशलप्रश्नो लोकसुखेच्छया । नित्यदाऽऽप्तसुखत्वात्तु न तेषां युज्यते क्वचिदि'ति नारदीये ॥ ३४ ॥ [39]पूर्वं चिरोषितः ॥ ३९ ॥ इति त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्दशोऽध्यायः

[10]यत्पदयोः पतिताया अश्रुप्रधानः । यैः कबरं स्पृष्टं तत्स्त्रियः

---

### त्रयोदशोऽध्यायः

व्यतीताः कतिचिन्मासास्तदा तु शतशो नृपः । ददर्श घोररूपाणि निमित्तानि भृगूद्वह ॥२॥ अपि देवर्षिणाऽऽदिष्टः स कालोऽयमुपस्थितः । यदात्मनोऽङ्कमाक्रीडं भगवानुत्सिसृक्षति ॥ ८ ॥ मृत्युदूतः कपोतोऽग्नावुलूकः कम्पयन् मनः । प्रत्युलूकश्च हुङ्कारैरनिद्रौ शून्यमिच्छतः ॥१४॥ भगवानपि गोविन्दो ब्रह्मण्यो भक्तवत्सलः । कच्चित्पुरे सुधर्मायां सुखमास्ते सुहृद्वृतः ॥ ३४ ॥ कच्चित्तेऽनामयं तात ! भ्रष्टतेजा विभासि मे । अलब्धमानोऽवज्ञातः किंवा तात चिरोषितः ॥ ३९ ॥

### चतुर्दशोऽध्यायः

पस्न्यास्तवापि मखकृतमहाभिषेकश्लाघिष्ठचारुकबरं कितवै-

तत्पदयोः पतितत्वादेव । स विमुक्तकेश्यो न्यकृत ॥ १० ॥ [21]स रथो हयास्ते । तादृशा इत्यर्थः । त इषव इतीव । 'सदृशे वा प्रधाने वा कारणे वा तदित्ययम् । शब्दः सङ्घटते भेदे विद्यमानेऽपि तत्त्वत'- इति ब्रह्मतर्के । तद्रथहयानां दाहोक्तेः ॥ २१ ॥ इति प्रथमतात्पर्ये चतुर्दशोऽध्यायः ॥ १४ ॥

## पञ्चदशोऽध्यायः

[1]ज्ञानिनां प्रारब्धस्यैव विनिर्मथनं योग्यस्य(स्यैव) । 'महता कारणेनैव प्रारब्धान्यपि कानिचित् । कर्माणि क्षयमायान्ति ब्रह्मदृष्टिमतः क्वचिदि'ति भविष्यत्पर्वणि । तेषामपि काम्यकर्मफलदृष्टेश्च ॥१॥ [2]तम आदिनिरोधश्च प्रारब्धकर्मणैव । 'ज्ञानादिव्यक्तिरव्यक्तिः सुखदुःखादिकं तथा । सुदृष्टब्रह्मतत्त्वानां भवत्यारब्धकर्मणे'ति ब्रह्मवैवर्ते ॥ २ ॥ [3]ब्रह्मसम्पत्तिरवगतिः । 'भगवन्तं विनाऽन्यत्र प्रवृत्त्यादिप्रकाशनम् । प्रारब्धकर्मणैव स्यात्कदाचिज्ज्ञानिनामपि । तां द्वैतदृष्टिं मे देव छिन्धि ज्ञानवरासिने'ति ब्राह्मे । तदेव सञ्छिन्नद्वैतसंशयत्वम् । लीनप्रकृतित्वं नैर्गुण्यं च लीनप्रकृतिनैर्गुण्यम् । तस्मादसूक्ष्मशरीरत्वादनारब्धकर्ममूलत्वात् । असम्भवः पुनरुत्पत्तिवर्जितः । ज्ञानोदयकाल एवैवंभूतः

---

स्वसभायाम् । स्पृष्टं विकीर्य पदयोः पतिताश्रुमुख्यो यैस्तत् स्त्रियो न्यकृततत्स्व विमुक्तकेश्यः ॥ १० ॥ तद्वै धनुस्त इषवः स रथो हयास्ते सोऽहं रथी नृपतयो यत आमनन्ति । सर्वं क्षणेन तदभूदसदीशरिक्तं भस्मन्हुतं कुहकराद्धमिवोप्तमूषे ॥ २१ ॥

पञ्चदशोऽध्यायः

सूत उवाच ॥ वासुदेवाङ्घ्र्यभिध्यान परिबृंहितरंहसा । भक्त्या निर्मथिताशेषकषायधिषणोऽर्जुनः ॥१॥ गीतं भगवता ज्ञानं यत्तत्सङ्ग्राममूर्धनि । कालकर्मतमोरुद्धं पुनरध्यगमद्विभुः ॥ २ ॥ विशोको ब्रह्मसम्पत्त्या संच्छिन्नद्वैतसंशयः । लीनप्रकृतिनैर्गुण्यादलिङ्गत्वाद-



सन्पुनरध्यगच्छत् । 'प्रकृतिं स्वात्मसंश्लिष्टां गुणान्सत्वादिकानपि । कर्माणि सूक्ष्मदेहं च जायमाना हरेर्दृशिः । दहेदथापि सन्दग्धेन्धनवत्तत्पुनः पुनः । यावदारब्धकर्म स्यादाविर्वापि तिरो व्रजेदि'ति ब्रह्मतर्के ॥ ३ ॥ [7]पौत्रत्वे योग्यत्वमनवमत्वम् ॥ 'इन्द्राद्युत्तमताऽन्येषां समता वा स्वके कुले । उत्तमत्वमुपास्त्यादि योग्यता वा निगद्यत' इति ब्रह्मतर्के ॥ ७ ॥ [10-11]प्राणमपाने तं व्याने । समानोदानौ तेषु । तांश्च मूलप्राणे । आत्मा हृदिस्थो विष्णुः । ब्रह्म सर्वगतम् । 'उमा वागात्मिका रुद्राज्जाता सा मन आत्मनः । प्राणाद्धयात्स वायोश्च सोऽपानादात्मरूपतः ॥ स्वरूपादेव स व्यानादुदानो व्यानतस्तथा । तस्मात्समानो व्यानाच्चाप्यपानः प्राण एव च ॥ अपानात्तिसृभिश्चापि समानोदानयोर्जनिः । त्रयाणामथ पञ्चानामनाद्या प्राणतो भवः ॥ एकस्यैव स्वरूपाणि प्राणस्यैतानि पञ्च च । स च प्राणो हरेर्जातो हृदिस्थादात्मनो मतः ॥ स आत्मा ब्रह्मणो जातो विश्वरूपाज्जनार्दनात् । एतेषां ब्रह्मपर्यन्तं विलयोत्पत्तिचिन्तनम् ॥ ब्रह्मयज्ञ इति प्रोक्तः सर्वसंसारमोचक'इति नारायणाध्यात्मे ॥ 'अस्यास्मिन्विलयो भवतीत्येवं विज्ञानमाहुतिः । न तु तत्कालविलयस्त्वन्यो वा तस्य दर्शनादि'ति ब्रह्मतर्के ॥ १०, ११ ॥ [13]नावर्तेत वीरगतिम् ॥ १३ ॥ [15]आत्मनः स्वरूपमात्यन्तिकं ज्ञात्वा ॥ १५ ॥ इति पञ्चदशोऽध्यायः ॥ १५ ॥

---

सम्भवः ॥३॥ स्वराट् पौत्रं विनीतं तमात्मनोऽनवमं गुणैः । तोयनीव्याः पतिं भूमेरभ्यषिञ्चद्गजाह्वये ॥ ७ ॥ वाचं जुहाव मनसि तत्प्राण इतरे परम् । धृत्या ह्यपानं सोत्सर्गं तत्परत्वे ह्यजोहवीत् ॥१०॥ त्रित्वे हुत्वाऽथ पञ्चत्वं तच्चैकत्वेऽजुहोन्मुनिः । सर्वमात्मन्यजुहवीद् ब्रह्मण्यात्मानमव्यये ॥ ११ ॥ उदीचीं प्रविवेशाऽशां गतपूर्वां महात्मभिः । हृदि ब्रह्म परं ध्यायन्नावर्तेत गतो यतः ॥ १३ ॥ ते साधु कृतसर्वार्था ज्ञात्वाऽत्यन्तिकमात्मनः । मनसा धारयामासुर्वैकुण्ठचरणाम्बुजम् ॥ १५ ॥

## षोडशोऽध्यायः

[5]कोऽसावित्याक्षेपः । कलिमित्युक्तत्वात् ॥ ५ ॥ [6]अथेति पक्षान्तरे वा यदि ॥६॥ [7]अन्यथा चेदायुषो सद्व्यय इत्यर्थः । ‘यद्यर्थे च विकल्पार्थे वाशब्दः समुदीर्यत’इति नाममहोदधौ ॥ ७ ॥ [9]एतदर्थं हि मृत्युरुपहूतः । अहो नृलोके पीयेतेति ॥ ९ ॥ [17]स्निग्धेषु पाण्डुषु विष्णोः सारथ्यादिभिर्विशेषतो भक्तिं करोति ॥ १७ ॥ [27-30]त्यागो मिथ्याभिमानवर्जनम् । ‘मिथ्याभिमानविरतिस्त्याग इत्यभिधीयत’ इति नारायणाध्यात्मे ॥२७॥ [28]एकान्ततः शुभभागित्वं सौभाग्यम् । ‘शुभैकभागी सुभगो दुर्भगस्तद्विपर्यय’इति गीताकल्पे ॥२८॥ ‘[27]शमः प्रियादिष्वुद्व्युज्झा [28]क्षमा क्रोधाद्यनुत्थितिः । [27]महाविरोधकर्तुश्च सहनं तु तितिक्षणमि’ति पाद्मे । ‘स्वयं सर्वस्य कर्तृत्वात्कुतस्तस्य प्रियाप्रिये’ इति च । ‘प्रियमेव यतः सर्वमप्रियं नास्ति कुत्रचित् । स्वयमेव यतः कर्ता शान्तोऽतो हरिरीश्वर’इति ब्रह्मतर्के ॥ [29]मानः परेषाम् ॥ २९ ॥

---

### षोडशोऽध्यायः

शौनक उवाच—कस्य हेतोर्निजग्राह कलिं दिग्विजये नृपः । नृदेवचिह्नधृक्शूद्रः कोऽसौ गां यः पदाऽहनत् ॥५॥ तत्कथ्यतां महाभाग यदि विष्णुकथाश्रयम् । अथवाऽस्य पदाम्भोजमकरन्दलिहां सताम् ॥६॥ किमन्यैरसदालापैरायुषो यदसद्व्ययः । क्षुद्रायुषां नृणामङ्ग मर्त्यानां मृति-मृ(मि)च्छताम् ॥ ७ ॥ एतदर्थं हि भगवान् आहूतः परमर्षिभिः । अहो नृलोके पीयेत हरिलीलामृतं वचः ॥ ९ ॥ सारथ्यपार्षदसेवनसख्यदौत्य-वीरासनानुगमनस्तवनप्रणामैः । स्निग्धेषु पाण्डुषु जगत्प्रणतस्य विष्णोर्भक्तिं करोति नृपतिश्चरणारविन्दे ॥ १७ ॥ सत्यं शौचं दया दानं त्यागः सन्तोष आर्जवम् । शमो दमस्तपः साम्यं तितिक्षोपरतिः श्रुतम् ॥ २७ ॥ ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजो धृतिः स्मृतिः । स्वातन्त्र्यं कौशलं कान्तिः सौभगं मार्दवं क्षमा ॥ २८ ॥ प्रागल्भ्यं प्रश्रयः शीलं सह ओजो बलं भगः । गाम्भीर्यं स्थैर्यमास्तिक्यं कीर्तिर्मानोऽनहङ्कृतिः ॥ २९ ॥ इमे



‘[30]गुणैः स्वरूपभूतैस्तु गुण्यसौ हरिरीश्वरः । न विष्णोर्न च मुक्तानां कोऽपि भिन्नो गुणो मत’इति ब्रह्मतर्के ॥ ३० ॥ इति प्रथमतात्पर्ये षोडशोऽध्यायः ॥ १६ ॥

## सप्तदशोऽध्यायः

‘[2]बिभ्यतमिव मेहन्तम् ॥ २ ॥ [21]असतां सूचकस्य न दोषस्तथापि सतां न सूचनीयमिति दर्शयितुम् । ज्ञातुं शक्यत्वाच्च राज्ञः । ‘यद्यधर्मः कृतः सद्भिः स न वाच्यः कथञ्चन । असत्कृतधर्मं तु वदन्धर्ममवाप्नुयादि’ति व्यासस्मृतौ ॥ २१ ॥ [22]तस्य गोचरत्वेऽपि भूतानामगोचरेति ज्ञापयितुं वा ॥ २२ ॥ [32]ब्रह्मयज्ञा वितानयज्ञाश्च ॥ ॥ ३२ ॥ [33]इष्टात्ममूर्तिरिच्छातनुः ॥ ३३ ॥ [40]विहितातिरेकेण न सेवेत ॥ ४० ॥ इति प्रथमतात्पर्ये सप्तदशोऽध्यायः ॥ १७ ॥

---

चाऽन्ये च भगवन्नित्या यत्र महागुणाः । प्रार्थ्या महत्त्वमिच्छद्भिः न च यान्ति स्म कर्हिचित् ॥ ३० ॥

### सप्तदशोऽध्यायः

वृषं मृणालधवलं मेहन्तमिव बिभ्यतम् । वेपमानं पदैकेन सीदन्तं शूद्रपीडितम् ॥ २ ॥ न वयं क्लेशबीजानि यतः स्युः पुरुषर्षभ । पुरुषं तं विजानीमो वाक्यभेदविमोहिताः ॥१७॥ धर्मं ब्रवीषि धर्मज्ञ धर्मोऽसि वृषरूपधृक् । यदधर्मकृतः स्थानं सूचकस्यापि तद्भवेत् ॥२१॥ अथवा देवमायाया नूनं गतिरगोचरा । चेतसो वचसश्चापि भूतानामिति निश्चयः ॥२२॥ न वर्तितव्यं यदधर्मबन्धो धर्मेण सत्येन च वर्तितव्ये । ब्रह्मावर्ते यत्र यजन्ति यज्ञैर्यज्ञेश्वरं ब्रह्मवितानयज्ञाः ॥ ३२ ॥ यस्मिन् हरिर्भगवानीज्यमान इच्छात्ममूर्तिर्यजतां शं तनोति । कामानमोघान् स्थिरजङ्गमानामन्तर्बहिर्वायुरिवेश आत्मा ॥ ३३ ॥ अथैतानि न सेवेत बुभूषुः पुरुषः क्वचित् । विशेषतो धर्मशीलो राजा लोकपतिर्गुरुः ॥ ४० ॥

## अष्टादशोऽध्यायः

[3]'विज्ञानमात्मयोग्यं स्याज्ज्ञानं साधारणं स्मृतमि'ति भागवततन्त्रे ॥ ३ ॥ [13]'सम्यक्स्वरूपाभिव्यक्तिरभावो जननस्य च । अप्रयत्नात्ततो वृद्धिहेतोः सत्सङ्गतिर्वरे'ति वायुप्रोक्ते ॥१३॥ [19]अनन्तो देशतः कालतश्च ॥ १९ ॥ [22]परमहंसाश्रमप्राप्यं सत्यं ब्रह्म ॥ २२ ॥ [26]'स्वतो मनः स्थितिर्विष्णौ ब्रह्मभाव उदाहृत'इति ब्रह्माण्डे ॥ २६ ॥ [29]'अप्रीतिर्मद्वशो नायमिति मत्सर ईरित'इति नाममहोदधौ ॥ २९ ॥ [36]कौशिकी कुशपाणिः ॥ ३६ ॥ [43]'सेना पराकिणी प्रोक्ता वरूथो गुप्तिरुच्यत'इत्यभिधानम् ॥ ४३ ॥ [44]'विड्राष्ट्रं पशुरुत्सेको भ्रमरश्चेति कथ्यत' इति च ॥ ४४ ॥ [50]स्वकृतो गुणस्तस्यैव यतः ॥ ५० ॥ इति प्रथमतात्पर्ये अष्टादशोऽध्यायः ॥ १८ ॥

---

### अष्टादशोऽध्यायः

उत्सृज्य सर्वतः सङ्गं विज्ञानार्जितसंस्थितिः । वैयासकेर्जहौ शिष्यो गङ्गायां स्वकलेवरम् ॥ ३ ॥ तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् । भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥ १३ ॥ कुतः पुनर्गृणतो नाम तस्य महत्तमैकान्तपरायणस्य । योऽनन्तशक्तिर्भगवाननन्तो महद्गुणत्वाद्यमनन्तमाहुः ॥ १९ ॥ यत्रानुरक्ताः सहसैव धीरा व्यपोह्य देहादिषु सङ्गमूढम् । व्रजन्ति यत्पारमहंस्यसत्यं यस्मिन्नहिंसोपरमश्च धर्मः ॥ २२ ॥ प्रतिरुद्धेन्द्रियप्राणमनोबुद्धिमुपारतम् । स्थानत्रयात्परं प्राप्तं ब्रह्मभूतमविक्रियम् ॥२६॥ अभूतपूर्वः सहसा क्षुत्तृड्भ्यामर्दितात्मनः । ब्राह्मणं प्रत्यभूद्ब्रह्मन् मत्सरो मन्युरेव च ॥ २९ ॥ इत्युक्त्वा रोषताम्राक्षो वयस्यानृषिबालकान् । कौशिक्यप उपस्पृश्य वाग्वज्रं विससर्ज ह ॥३६॥ तदद्य नः पापमुपैत्यनन्वयं यन्नष्टनाथस्य पशोर्विलुम्पकाः । परस्परं घ्नन्ति शपन्ति वृञ्जते पशून्स्त्रियोऽर्थान् पुरुदस्यवो जनाः ॥ ४४ ॥ साधवः प्रायशो लोके परैर्द्वन्द्वेषु योजिताः । न व्यथन्ति न हृष्यन्ति यत आत्मा गुणाश्रयः ॥ ५० ॥



## एकोनविंशोऽध्यायः

[17]गङ्गायामुदक एव किञ्चिद्दक्षिणभागे प्रासादे । तथाहि महाभारते ॥ १७ ॥ इति प्रथमतात्पर्ये एकोनविंशोऽध्यायः ॥१९॥

## विंशोऽध्यायः

[4]'कैशोरयौवनाभ्यन्तः काल आपीच्यमुच्यत' इत्यभिधानम् ॥ ॥ ४ ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भागवततात्पर्यनिर्णये प्रथमस्कन्धे विंशोऽध्यायः ॥ २० ॥ प्रथमस्कन्धः समाप्तः ॥ १ ॥

---

# द्वितीयः स्कन्धः

## प्रथमोऽध्यायः

श्रीगुरुभ्योनमः ॥ [1]यः पर इति ॥ १ ॥ [2]अपश्यताम् ॥२॥

---

### एकोनविंशोऽध्यायः

इति स्म राजा व्यवसाययुक्तः प्राचीनमूलेषु कुशेषु धीरः । उदङ्मुखो दक्षिणकूल आस्ते समुद्रपत्न्याः स्वसुते न्यस्तभारः ॥ १७ ॥

### विंशोऽध्यायः

श्यामं सदापीच्यवयोङ्गलक्ष्म्या स्त्रीणां मनोज्ञं रुचिरस्मितेन । प्रत्युत्थिता मुनयश्चासनेभ्यस्तल्लक्षणज्ञा अपि गूढवर्चसम् ॥ ४ ॥

---

# द्वितीयः स्कन्धः

### प्रथमोऽध्यायः

श्री शुक उवाच— वरीयानेष ते प्रश्नः कृतो लोकहितं नृप । आत्मवित्सम्मतः पुंसां श्रोतव्यादिषु यः परः ॥ १ ॥ श्रोतव्यानीह राजेन्द्र नृणां सन्ति सहस्रशः । अपश्यतामात्मतत्त्वं गृहेषु गृहमेधिनाम् ॥ २ ॥

[3]निद्रया ॥ ३ ॥ [4]असत्सु अभद्रेषु । 'सद्भावे साधुभावे चे'ति वचनात् ॥४॥ [7]ध्यानापेक्षया प्रायेण । नैर्गुण्यस्था मुक्ताः । 'एतत्साम गायन्नास्त' इति श्रुतेः ॥ ७ ॥ [8]द्वापरे च आदौ च । कृष्णावतारापेक्षया । 'व्यासः षट्शतवर्षीयो धृतराष्ट्रमजीजनदि'ति स्कान्दे ॥८॥ [9]परिनिष्ठितोऽपि मुक्तिरस्य भविष्यतीति निश्चितोऽपि । 'उदरं संशयः प्रोक्तः परिनिष्ठा विनिश्चय'इत्यभिधाने ॥ 'ऋष्युत्तमा देवताश्च विमुक्तौ परिनिश्चिताः । तथाप्यधिकसौख्यार्थं यतन्ते शुभकर्मसु ॥ विमुक्तास्तु स्वभावेन नित्यं ध्यानादितत्परा'इति गारुडे ॥ ९ ॥ [18]शुभार्थे भगवति ॥ १८ ॥ [19]विषयेभ्यो निर्गत्य तत्रैव मनोयुङ्क्त्वाऽन्यन्न स्मरेत् ॥ १९ ॥ [21]भद्रं हरिम् ॥ २१ ॥ [22]यच्छब्दः प्रश्ने । 'यतश्चोदेति सूर्य'इत्यादिवत् । 'यच्छब्दस्तु परामर्शे प्रश्नार्थे चाभिभण्यत'-इत्यभिधाने ॥ यथेत्यस्य जितासन इत्यादि । यत्र स्थूले ॥ यादृशीत्यस्य विशेष इत्यादि ॥२२॥ [24]विशेष आण्डकोशः । 'शिलावत्तस्य देहोऽयमण्डकोशस्तु सावृतिः । तत्तन्त्रत्वान्न तत्संस्थदुःखभोगोऽस्य न

---

निद्रया ह्रीयते नक्तं व्यवायेन नवं वयः । दिवा चार्थेहया राजन् कुटुम्बभरणेन वा ॥३॥ देहापत्यकलत्रादिष्वात्मदैन्येष्वसत्स्वपि । तेषु प्रसक्तो निधनं पश्यन्नपि न पश्यति ॥ ४ ॥ प्रायेण मुनयो राजन्निवृत्ता विधिनिषेधतः । नैर्गुण्यस्था रमन्ते स्म गुणानुकथने हरेः ॥७॥ इदं भागवतं नाम पुराणं ब्रह्मसम्मितम् । अधीतवान् द्वापरादौ पितुर्द्वैपायनादहम् ॥ ॥ ८ ॥ परिनिष्ठितोऽपि नैर्गुण्य उत्तमश्लोकलीलया । गृहीतचेता राजर्षे आख्यानं यदधीतवान् ॥ ९ ॥ नियच्छेद्विषयेभ्योऽक्षान् मनसा बुद्धिसारथिः । मनः कर्मभिराक्षिप्तं शुभार्थे धारयेद्धिया ॥ १८ ॥ तत्रैकावयवं ध्यायेदव्युच्छिन्नेन चेतसा । मनो निर्विषयं युक्त्वा ततः किञ्चिन्न संस्मरेत् । पदं तत्परमं विष्णोर्मनो यत्र प्रसीदति ॥ १९ ॥ यस्यां सन्धार्यमाणायां योगिनो भक्तिलक्षणः । आशु सम्पद्यते योग आश्रयं भद्रमीक्षतः ॥ २१ ॥ राजोवाच—यथा सन्धार्यते ब्रह्मन् धारणा यत्र सम्मता । यादृशी वा हरेदाशु पुरुषस्य मनोमलम् ॥ २२ ॥ विशेषस्तस्य देहोऽयं स्थविष्ठश्च स्थवीयसाम् । यत्रेदं दृश्यते विश्वं भूतं



क्वचिदि'ति ब्रह्मवैवर्ते ॥ २४ ॥ '[25]अण्डकोशो विराट्प्रोक्तो विशेषेण प्रकाशनात् । वैराजस्तद्गतो विष्णुरथवा सर्वतो वर'इति भागवततन्त्रे ॥ ॥ २५ ॥ [26]प्रतिमापेक्षयाऽङ्गानि स्वरूपापेक्षया तदङ्गानि तदाश्रितानि च ॥ २६ ॥ [30-31]बहुरूपत्वाद्दंष्ट्रार्यमेन्द्र इत्यादि । 'प्रतिमापेक्षयाङ्गानि भूरादीनि स्वरूपतः । तदाश्रितानि तदङ्गानि बहुङ्गत्वं बहुत्वत'-इति ब्रह्मतर्के ॥ ३०, ३१ ॥ इति द्वितीयतात्पर्ये प्रथमोऽध्यायः ॥१॥

## द्वितीयोऽध्यायः

॥ ॐ ॥ [2]एष हरिः । यदपार्थैर्ध्यायति । तत्रार्थान्न विन्दते । 'सर्वनामा यतो विष्णुस्तदन्यार्थान्न तु स्मरेत् । स्मरंस्तु यावदर्थः स्यादन्यथा स्यात्महा स्मृत' इति ब्रह्माण्डे ॥ १, २ ॥ [6]एतमितस्तं प्रेत्याभिसम्भविताऽस्मी'ति नियतार्थः ॥ ६ ॥ '[7]यथैकस्तु बहून्सुप्ता-

---

भव्यं भवच्च यत् ॥ २४ ॥ आण्डकोशे शरीरेऽस्मिन् सप्तावरणसंयुते । वैराजः पुरुषो योऽसौ भगवान् धारणाश्रयः ॥ २५ ॥ पातालमेतस्य हि पादमूलं पठन्ति पार्ष्णिप्रपदे रसातलम् । महातलं विश्वसृजः सुगल्फौ तलातलं वै पुरुषस्य जङ्घे ॥ २६ ॥ द्यौरक्षिणी चक्षुरभूत्पतङ्गः पक्ष्माणि विष्णोरहनी उभे च । तद्भ्रूविजृम्भः परमेष्ठिधिष्ण्यमापोऽस्य तालू रस एव जिह्वा ॥ ३० ॥ छन्दांस्यनन्तस्य गिरो गृणन्ति दंष्ट्रार्यमेन्द्रुडुगणा द्विजानि । हासो जनोन्मादकरी च माया दुरन्तसर्गो यदपाङ्गमोक्षः ॥ ॥ ३१ ॥

## द्वितीयोऽध्यायः

श्री शुक उवाच—एवं पुरा धारणयाऽऽत्मयोनिर्नष्टां स्मृतिं प्रत्यवरुध्य तुष्यन् । तथा ससर्जेदममोघदृष्टिर्यथाप्ययात्प्राग्व्यवसायबुद्धिः ॥ ॥ १ ॥ शब्दस्य हि ब्रह्मण एष पन्था यन्नामभिर्ध्यायति धीरपार्थैः । परिभ्रमंस्तत्र न विन्दतेऽर्थान् मायामये वासनया शयानः ॥ २ ॥ एवं स्वचित्ते स्वत एव सिद्ध आत्माप्रियोऽर्थो भगवाननन्तः । तं निर्वृतो नियतार्थो भजेत संसारहेतूपरमश्च यत्र ॥ ६ ॥ स सर्वविद्ध्यनुभूश्च

नसुप्तः पश्यति प्रभुः । एवमीशो बहूञ्जीवानज्ञान्पश्यति नित्यदृगि'ति व्योमसंहितायाम् । 'स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीती'ति च । 'यथेष्टभवनाद्विष्णुरनुभूः परिकीर्तितः । उदधिः कर्मणामीशः सर्वः पूर्णगुणो यतः । सत्यः केवलसारत्वान्नियमो नियतेरज'-इति बृहत्संहितायाम् ॥ ७ ॥ [13]चिन्तामयं चिन्ताप्रधानम् । 'यस्मात्सञ्चिन्तितो विष्णुश्चिन्तितं प्रददात्यजः । तस्माच्चिन्तामयं देवं वदन्ति ज्ञानचक्षुष'इति च ॥ १३ ॥ [15]स्थवीयः पातालमेतस्येत्यादि ॥१५॥ '[16-17]भक्त्या प्राणं वशं नीत्वा जितप्राणो भवत्युते'ति षाड्गुण्ये ॥१६॥ 'जीवस्थो भगवान्विष्णुः क्षेत्रज्ञ इति गीयते । देहस्थोऽपि स एवात्मा व्याप्तोऽप्यात्मेति भण्यत'इति तत्त्वनिर्णये । हरौ हरेर्भवेन्नीतिस्तदेकत्वस्य चिन्तनम् । अन्यत्र तन्नियम्यादिचिन्तनं नीतिरुच्यत'इति प्रकाशसंहितायाम् ॥ १७ ॥ [18]कालो वायुः । 'हरिश्च प्रकृतिश्चैव ब्रह्मवायू तथैव च । सुपर्णशेषरुद्राश्च शक्रः सूर्ययमावपि । अग्निर्यमानुजश्चैव कालशब्देरिताः क्रमात् । पूर्वोक्तास्त्वपरोक्तानां प्रभवः सर्वशो मता'इत्युद्दामसंहितायाम् ॥ १८ ॥ [21-22]उदानगत्या ब्रह्मनाड्या । 'अथैकयोर्ध्व उदान' इति श्रुतेः । 'प्राणापानाविडायां च

सर्वं आत्मा यथा सुप्तजनेक्षितैकः । तं सत्यमानन्दनिधिं भजेत सर्वात्मनाऽतोऽन्यत आत्मघातः ॥ ७ ॥ अदीनलीलाहसितेक्षणोल्लसद्भ्रूभङ्गसंसूचितभूर्यनुग्रहम् । ईक्षेत चिन्तामयमेनमीश्वरं यावन्मनो धारणयाऽवतिष्ठते ॥ १३ ॥ यावन्नजायेत परावरेऽस्मिन् विश्वेश्वरे द्रष्टरि भक्तियोगः । तावत् स्थवीयः पुरुषस्य रूपं क्रियावसाने प्रयतः स्मरेत् ॥ १५ ॥ स्थिरं सुखं चासनमास्थितो यतिर्यदा जिहासुरिममङ्ग लोकम् । काले च देशे च मनो न सज्जेत् प्राणान्नियच्छेन् मनसा जितासुः ॥ १६ ॥ मनश्च बुद्ध्याऽमलया नियम्य क्षेत्रज्ञ एतां निनयेत्तमात्मनि । आत्मानमात्मन्यवरुध्य धीरो लब्धोपशान्तिर्विरमेत कृत्यात् ॥ १७ ॥ न यत्र कालोऽनिमिषां परः प्रभुः कुतो नु देवा जगतां य इशिरे । न यत्र सत्त्वं न रजस्तमश्च न वै विकारो न महान् प्रधानम् ॥ १८ ॥ नाभ्यां स्थितं



पिङ्गलायां च वर्ततः । व्यानः सन्धिषु सर्वत्र उदानो ब्रह्मनाडिगः । सर्वत्रैव समानस्तु समं चरति सर्वग'इति भारते ॥ २१ ॥ परं चिन्तयन् ॥२२॥ '[23-24]चिन्मात्राणीन्द्रियाण्याहुर्मुक्तानामन्यदेव तु । तान्येव जडयुक्तानि ह्यभिन्नानि स्वरूपत'इति ब्राह्मे ॥ पवनस्याप्यन्तरात्मा यः तम् । पवनश्चान्तरात्मा चेति वा । 'ईयुस्त्रीन्कर्मणा लोकाञ्ज्ञानेनैव तदुत्तरान् । तत्र मुख्या हरिं यान्ति तदन्ये वायुमेव तु अपक्का येन ते यान्ति वायुं वा हरिमेव वा । स्थानमात्राश्रितास्ते तु पुनर्जनिविवर्जिता' इति ब्रह्मतर्के ॥ २३, २४ ॥ [25]हरेः शैंशुमारं चक्रम् । वैश्वानरोदस्तात् । 'वैश्वानरे द्युनद्यां वा सूर्ये वा देह एव वा । विधूय सर्वपापानि यान्ति किंस्तुघ्नकेशवमि'ति ब्रह्माण्डे ॥ २५ ॥ '[26]पितृयानं देवयानं ब्रह्मयानमिति त्रिधा । गच्छन्वैश्वानरं याति तस्मान्मार्गः स ईरितः ॥ २६ ॥ '[27]दक्षिणाः पिङ्गलाः सर्वा इडा वामाः प्रकीर्तिताः । नाड्योऽथ मध्यमाः प्रोक्ताः सुषुम्ना वेदपारगैरि'ति भागवततन्त्रे ॥ 'देवयानस्य मार्गस्था अहःशब्दाभिसञ्ज्ञिताः । पितृयानस्य मार्गस्था रात्रिशब्दाह्वया मता'इति बृहत्तन्त्रे ॥ 'शतायुर्मरणं चैव कालिकं परमावृतिरि'त्यभिधाने ॥ पिङ्गलाभिः शतायुषा अहः-

हृद्यधिरोप्य तस्मादुदानगत्योरसि तं नयेन्मुनिः । ततोऽनुसन्धाय धिया मनस्वी स्वतालुमूलं शनकैर्नयेत ॥ २१ ॥ तस्माद् भ्रुवोरन्तरमुन्नयेत निरुद्धसप्ताश्वपथोऽनपेक्षः । स्थित्वा मुहूर्तार्धमकुण्ठदृष्टिर्निर्भिद्य मूर्धन् विसृजेत्परङ्गतः ॥ २२ ॥ यदि प्रयास्यत्यथ पारमेष्ठ्यं वैहायसानामुत यद्विहारम् । अष्टाधिपत्यं गुणसन्निवाये सहैव गच्छेन्मनसेन्द्रियैश्च ॥२३॥ योगेश्वराणां गतिमामनन्ति बहिस्त्रिलोक्याः पवनान्तरात्मा । न कर्मभिस्तां गतिमाप्नुवन्ति विद्यातपोयोगसमाधिभाजाम् ॥२४॥ वैश्वानरं याति विहायसा गतः सुषुम्नया ब्रह्मपथेन शोचिषा । विधूतकल्कोथ हरेरुदस्तात् प्रयाति चक्रं नृप शैंशुमारम् ॥२५॥ योऽन्तः पचति भूतानां यस्तपत्यण्डमध्यगः । सोऽग्निर्वैश्वानरो मार्गो देवानां पितृणां मुनेः ॥ ॥२६॥ देवयानं पिङ्गलाभिरहान्येति शतायुषा । रात्रीरिडाभिः पितृणां

सञ्ज्ञं देवयानमेति । इडाभी रात्रिसञ्ज्ञं पितृयानम् । 'विषुवत्ता ब्रह्मयानो विशेषेण सुखं यतः । पिङ्गला देवयानं स्यात्पिङ्गाख्यसुखदं यतः । इडाऽन्नदानात्पितृणामेवं मार्गाः प्रकीर्तिता'इति ब्रह्मतर्के ॥२७॥ [28]अशेषजगदाधारः शिंशुमारो हरिः परः । सर्वे ब्रह्मविदो नत्वा तं यान्ति परमं पदमि'ति ब्रह्माण्डे ॥ तद्विष्णोर्विश्वाधारं रूपं प्रतिपद्य यत्र कल्पायुषस्तं महर्लोकमुपैति । 'मन्वन्तरायुषः स्वर्ग्या महर्लोके तु काल्पिकाः । आब्रह्मणो जनाद्यास्तु महर्लोकेऽपि ये वरा'इति ब्राह्मे ॥ ॥२८॥ [30]ऋते सत्यलोके । अनिदंविदां अब्रह्मविदाम् । दुरन्तदुःखं च प्रभवश्च । 'सर्वदुःखविहीना ये मुक्ताः प्रायस्तु तादृशाः । अमुक्तास्तु जनाद्येषु विशेषेण तु सत्यगा' इति वाराहे ॥ विष्णोर्लोकं तदैवैके यान्ति कालान्तरे परे । आज्ञयैव हरेः केचिदपूर्तेः केचिदञ्जसा । विहृत्यैवान्यलोकेषु मुच्यन्ते ब्रह्मणा सहे'ति वामने ॥ २९, ३० ॥ [31]ब्रह्मणा सह विशेषं पृथिवीम् । तेनात्मना पृथिव्यात्मना । ज्योतिर्मय अग्निप्रधानः । आकाशवत्सर्वगतश्च नित्य इति । परमात्मसदृशं किञ्चित् । 'ज्ञानिनः प्रलये सर्वे ब्रह्मणा सह पार्थिवम् । परमात्मानमाविश्य वारिस्थं तत्समन्विताः । अग्निस्थं तद्युताश्चैव तेन नीताश्च वायुगम् । नभोगतं तेन नीता मनःस्थं तद्युतास्तथा । ततो बुद्धिस्थमीशेशं ततोऽहङ्कारगं हरिम् । ततो विज्ञाननामानं महत्तत्त्वगतं हरिम् । तत आनन्दनामानमव्यक्तस्थं जनार्दनम् । प्राप्य नावृत्तिमायान्ति शान्ति-

विषुवत्तां सुषुम्नया ॥ २७ ॥ तद्विश्वनाभिं त्वभिपद्य विष्णोरणीयसा विरजेनात्मनैकम् । नमस्कृतं ब्रह्मविदामुपैति कल्पायुषो यद्विबुधा रमन्ते ॥ २८ ॥ अथो अनन्तस्य मुखानलेन दन्दह्यमानं स निरीक्ष्य विश्वम् । निर्याति सिद्धेश्वरजुष्टधिष्ण्यं यद्द्वैपरार्ध्यं तदु पारमेष्ठ्यम् ॥ ॥ २९ ॥ न यत्र शोको न जरा न मृत्युर्नार्तिर्नचोद्वेगः ऋते कुतश्चित् । यच्चित्ततोदः क्रिययाऽनिदंविदां दुरन्तदुःखप्रभवानुदर्शनात् ॥ ३० ॥ ततो विशेषं प्रतिपद्य निर्भयस्तेनात्मनाऽपोऽनलमूर्ति च त्वरन् । ज्योति-



(ती)भूता निरामयाः ॥ येषां पदान्तरापेक्षा वाय्वादीनां महात्मनाम् । आवृत्य ते पुनर्यान्ति ज्ञानिनोऽपि निरामयाः । अनावृत्तिमसंमूढाः परानन्दैकभागिन'इति ब्रह्मतर्के ॥ 'भूम्यब्गमन्ननामानं प्राणमग्न्यादिसंस्थितम् । मानसं मन आदिस्थं विज्ञानं महति स्थितम् । आनन्दमव्यक्तगतं क्रमशो यान्ति देवताः । ब्रह्माद्याः केचिदेवात्र तदन्ये क्रमशोऽपरानि'ति बृहत्तन्त्रे ॥ ३१ ॥ '[32]पञ्चेन्द्रियैर्ये विषया एष्टव्याः सर्वतो वराः । मानसांश्चाखिलान्प्राप्य मुक्तौ मोदन्ति देवताः । तथोद्रिक्तनिजानन्दा नित्यानन्दा असंवृता'इति षाड्गुण्ये ॥ ३२ ॥ [33]भूतसूक्ष्मेन्द्रियैश्च सह अनादिर्भगवानाकाशगो मनोमयं याति । नादवत्त्वात्सनातनः । 'नादेन तेन महता सनातन इति स्मृत'इति मोक्षधर्मे ॥ विविधकार्ययुक्तं विकार्यम् । देवमयं देवप्रधानम् । 'मनःस्थितो हरिर्नित्यं सर्वदेवेषु संस्थितः । देवप्रधानकाँल्लोकान्करोत्यनुगतः सदे'ति वाराहे ॥ भूतसूक्ष्माणि पञ्चभूतानि जीवाश्च । 'पञ्चभूतैश्च शब्दाद्यैरिन्द्रियैर्जीवराशिभिः । युक्त आकाशगो विष्णुर्मनःस्थमुपगच्छती'ति वामने । योऽसावनादिर्मनोमयस्तमिति वा । विपर्ययश्चेतस्यैव गन्तृत्वमिति ज्ञापयितुम् । मतिस्थेन तेन मनःस्थेन च सह विज्ञानतत्वं याति ॥ ३३ ॥ [34]गुणसंनिरोधं निर्गुणं वासुदेवम् ॥ [35]एतां गतिं गतो न विषज्जते । 'वासुदेवाश्रिता देवा ब्रह्माद्या मुक्तबन्धनाः । भेददृष्ट्याभिमानेन चावृत्तिं नैव यान्ति ते । भुञ्जते तु

र्मयो वायुमुपेत्य काले वाय्वात्मना खं बृहदात्मलिङ्गम् ॥ ३१ ॥ घ्राणेन गन्धं रसनेन वै रसं रूपं तु दृष्ट्या स्पर्शं त्वचैव । श्रोत्रेण चोपेत्य नभोगुणं तत् प्रायेण नावृत्तिमुपैति योगी ॥ ३२ ॥ स भूतसूक्ष्मेन्द्रियसन्निकर्षात् सनातनोऽसौ भगवाननादिः । मनोमयं देवमयं विकार्यं संसाद्य मत्या सह तेन याति ॥३३॥ विज्ञानतत्वं गुणसन्निरोधं तेनात्मनाऽऽत्मानमुपैति शान्तिम् । आनन्दमानन्दमयोऽवसाने सर्वात्मके ब्रह्मणि वासुदेवे ॥३४॥ एतां गतिं भागवतो गतो यः स वै पुनर्नेह विषज्जतेऽङ्ग । एते सृती ते

पृथग्भोगान्नानन्दं तत्स्वरूपकम्। स्वरूपं च पृथक्तेषामाविष्टग्रहवद्भवे-दि'ति ब्रह्माण्डे ॥ ३४, ३५॥ यद्भगवानाह। [36]अतो भागवताख्या-द्ग्रन्थाच्छिवः पन्था न ॥ ३६ ॥ [37]तद्भावतं पुराणमपश्यत्। 'नित्य-ज्ञानेन सिद्धं च पुनः पुनरवेक्षते। लीलयैव हरिर्देवो दुष्टानां मोहनाय चे'ति ब्रह्मतर्के (पाद्मे) ॥ ३७ ॥ [38]लक्षितश्चास्मिन्पुराणे बुद्ध्यादीनां पारवश्यदर्शनादन्यो नियन्ताऽस्तीति। 'समाधावसमाधौ च निः-स्वतन्त्रस्य देहिनः। अन्यो नियन्ता भगवान्वासुदेवः परः प्रभुरि'ति ब्रह्मतर्के ॥३८॥ [39]यस्माद्भगवतैष एवोक्तस्तस्मात्स एव श्रोतव्यादिः ॥ ॥ ३९ ॥ इति द्वितीयतात्पर्ये द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः

[8]अकामो धर्मकामो वा मोक्षकामोऽपि यो भवेत्। अथवा सर्वकामो यः स विष्णुं पुरुषं यजेदि'ति स्कान्दे ॥ ९ ॥ [17]तस्यायुषः उत्तमश्लोकवार्तया ऋते यः क्षणः स नीत एव वृथा ॥ १० ॥ इति द्वितीयतात्पर्ये तृतीयोऽध्यायः ॥ ३ ॥

---

नृप वेदगीते त्वयाभिपृष्टेऽथ सनातने च। ये वै पुरा ब्रह्मण आह पृष्ट आराधितो भगवान् वासुदेवः ॥३५॥ न ह्यतोऽन्यः शिवः पन्था विशतः संसृताविह। वासुदेवे भगवति भक्तियोगो यतो भवेत् ॥३६॥ भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया। तदध्यवस्यत् कूटस्थो रतिरात्मन्यतो भवेत् ॥३७॥ भगवान् सर्वभूतेषु लक्षितश्चात्मना हरिः। दृश्यैर्बुद्ध्यादिभि-र्द्रष्टा लक्षणैरनुमापकैः ॥ ३८ ॥ तस्मात्सर्वात्मना राजन् हरिः सर्वत्र सर्वदा। श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यो भगवान्नृणाम् ॥ ३९ ॥

### तृतीयोऽध्यायः

राज्यकामो मनून् देवान् निर्ऋतिं त्वभिचरन् यजेत्। कामकामो यजेत्सोममकामः पुरुषं पुमान् ॥ ९ ॥ अकामः सर्वकामो वा मोक्षकाम उदारधीः। तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥ १० ॥



## चतुर्थोऽध्यायः

[2]अन्येषां नित्यं निरूढा। तदा विशेषतो जहौ ॥२॥ '[4]आप्तैः सर्वगुणानां य आत्मनामतया हरिम्। उपास्ते नित्यशो विद्वानाप्त-कामस्तदा भवेदि'ति वामने ॥४॥ [1]गृहीतशक्तित्रितयायेति। 'इच्छा ज्ञानं क्रिया चेति नित्याः शक्तय ईशितुः। स्वरूपभूता अपि तु भेदवद्व्यावहारिका'इति प्रकाशसंहितावचनान्नित्यगृहीतशक्तित्वमेव ॥ ॥ १२ ॥ [13]अखिलसत्वमूर्तये। पूर्णसाधुभावस्वरूपाय। निःशेष-गुणपूर्णत्वात्सत्व इत्येव तं विदुरिति महासंहितायाम् ॥१३॥ '[19]वेदानु-सारिवशगः स्वेच्छया तु हरिर्यतः। अतः स्वतन्त्रमप्याहुः प्राज्ञा वेद-मयेति हे'त्यध्यात्मे ॥ १९ ॥ इति द्वितीयतात्पर्ये चतुर्थोऽध्यायः ॥ ॥ ४ ॥

## पञ्चमोऽध्यायः

[1]विजानीहि विज्ञापय। 'व्यत्ययो भेदस्वातन्त्र्यकरणेष्वि'ति

---

### चतुर्थोऽध्यायः

आत्मजायासुतागारपशुद्रविणबन्धुषु। राज्ये चाविकले नित्यं निरूढां ममतां जहौ ॥ २ ॥ संस्थां विज्ञाय सन्न्यस्य कर्म त्रैवर्गिकं च यत्। वासुदेवे भगवति स्वात्मभावं दृढं गतः ॥४॥ श्री शुक उवाच— नमः परस्मै पुरुषाय भूयसे सदुद्भवस्थाननिरोधलीलया। गृहीत शक्ति-त्रितयाय देहिनामन्तर्भुवायानुपलभ्यवर्त्मने ॥१२॥ भूयो नमः सद्वृजिन-च्छिदेऽसतामसम्भवायाखिलसत्त्वमूर्तये। पुंसां पुनः पारमहंस्य आश्रमे व्यवस्थितानामनुमृग्यदाशुषे ॥ १३ ॥ स एष आत्माऽऽत्मवतामधीश्वर-स्त्रयीमयो धर्ममयस्तपोमयः। गतव्यलीकैरजशङ्करादिभिर्वितर्क्यलिङ्गो भगवान् प्रसीदताम् ॥ १९ ॥

### पञ्चमोऽध्यायः

नारद उवाच—देवदेव नमस्तेऽस्तु भूतभावन पूर्वज। तद्विजानीहि

वचनात् ॥ १ ॥ ‘[2]तद्वशत्वादिदं रूपं हरेर्नैव स्वरूपत’ इति मानससंहितायाम् । ‘अधिष्ठानमिति प्रोक्तं मूलाधारं विचक्षणैः । यत्स्थितं दृश्यते वस्तु संस्थानं तदुदीरितम् । उभयं हरिरेवास्य जगतो मुनिपुङ्गवे’ति वामने ॥ ‘हरिः परोऽस्य जगतो ह्यव्यक्तादेश्च कृत्स्नशः । अतस्तत्परमेवेदं वदन्ति मुनयोऽमला’ इति सात्वतसंहितायाम् । ‘यदधीना यस्य सत्ता तत्तदित्येव भण्यते । विद्यमाने विभेदेऽपि मिथो नित्यं स्वरूपत’इति भविष्यत्पर्वणि ॥ २ ॥ तदधिकं ज्ञातुं पूर्वपक्षं दर्शयति । एकः सृजसीत्यादिना ॥ ४ ॥ ‘[6]त्वदधीना यतः सत्ता अवरस्यापि केशव । अतः स्वरूपतः सम्यक्सति भेदेऽपि तद्भवानि’ति मात्स्ये ॥ ६ ॥ [10]नानृतमित्याक्षेपः ॥ १० ॥ ‘[12-13]मुख्या माया हरेः शक्तिरमुख्या प्रकृतिर्मता । अथामुख्यतमा चैव माया हीना प्रकीर्तिता’ ॥ १२, १३ ॥ [14]परः अधिकः । ‘तद्वदेव स्थितं यत्तु तात्विकं तत्प्रचक्षत’इति कौर्मे ॥ १४ ॥ [15-16]वेदप्रतिपाद्येषु स पर इत्यादि । ‘गम्येज्यज्ञेयवाच्येषु याज्येषु च परो हरिः । तपसा युज्यमानानां सर्वलोकेभ्य एव चे’ति वाराहे ॥ १५, १६ ॥ [18]युगपत्क्रम-

---

यज्ज्ञानमात्मतत्त्वनिदर्शनम् ॥ १ ॥ यद्रूपं यदधिष्ठानं यतः सृष्टमिदं विभो । यत्संस्थं यत्परं यच्च तत्तत्त्वं वद तत्वतः ॥ २ ॥ यद्विज्ञानो यदाधारो यत्परस्त्वं यदात्मकः । एकः सृजसि भूतानि भूतैरेवात्ममायया ॥ ४ ॥ नाहं वेद परन्त्वस्मान्नावरं न समं विभो । नामरूपगुणैर्भाव्यं सदसत्किञ्चिदन्यतः ॥६॥ नानृतं बत तच्चापि यथा मां प्रब्रवीषि भो । अविज्ञाय परं मत्त एतावत्त्वं यतो हि मे ॥१०॥ तस्मै नमो भगवते वासुदेवाय धीमहि । यन्मायया दुर्जयया मां विदन्ति जगद्गुरुम् ॥ १२ ॥ विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया । विमोहिता विकत्थन्ते ममाहमिति दुर्धियः ॥ १३ ॥ द्रव्यं कर्म च कालश्च स्वभावो जीव एव च । वासुदेवात्परो ब्रह्मन् नैवान्योऽर्थोऽस्ति तत्वतः ॥ १४ ॥ नारायणपरा वेदा देवा नारायणाङ्गजाः । नारायणपरा लोका नारायणपरा मखाः ॥ ॥ १५ ॥ सत्वं रजस्तम इति निर्गुणस्य गुणास्त्रयः । स्थितिसर्गनिरोधेषु



शोऽपि वेत्यस्य परिहारः ‘सत्वं रजस्तम’इति । ‘नित्यं गृहीताः सत्वाद्याः स्थित्यादिषु विशेषतः । युगपत्क्रमशश्चैव गृह्णाति भगवान्स्वयमि’ति ब्रह्मवैवर्ते ॥ १८ ॥ ‘[19]ज्ञानेन्द्रियैश्च मनसा सत्वं बध्नाति पूरुषम् । रजः कर्मेन्द्रियैर्नित्यं शरीरेण तमस्तथा ॥ आन्तरं यत्तु कर्तृत्वं तत्सत्वेनाभिमन्यते । रजसा त्वभिमन्येत करणैः कर्मकारणैः ॥ शारीरं वेदनाद्यं तु तमसा ह्यभिमन्यते । अकर्ता करणैर्हीनः शरीरेण विवर्जितः ॥ नित्यज्ञातस्वरूपोऽसौ गुणैरेवाभिमन्यते । एवं जीवः परेणैव प्रेरितः संसृतिं व्रजेत् । न परः संसृतिं क्वापि स्वातन्त्र्यादधिकत्वतः ॥ एवं जीवपरौ भिन्नौ किमन्यच्छ्रोतुमिच्छसी’ति पाद्मे ॥ मायिनं ज्ञानिनं स्वतः ॥ १९ ॥ [20]लिङ्गैर्ज्ञापकैः । त्रिगुणैः । एतैर्लिङ्गैः । स्वप्रसादाज्जीवेन लक्षितगतिः । ‘स्वप्रसादादिमं जीवः पश्येत्तेन स्वलक्षित’इति षाड्गुण्ये ॥ २० ॥ [21]स्वया मायया स्वशक्त्या । ‘यत्रान्यहेत्वभावः स्यादीश्वरेच्छादिना विना । तदिच्छा हि यदृच्छा स्यादतस्तत्र यदृच्छये’ति ब्रह्मतर्के । ‘कालकर्मस्वभावादि नित्ययेशेच्छया सदा । प्राप्तमेव विशेषेण सृष्ट्यादावुन्नयत्यज’इति च ॥ विबुभूषुः बहुधा बुभूषुः । ‘ईशो बह्वीः पुरः सृष्ट्वा तत्रैव बहुरूपताम् । तत्तन्नियामकतया प्राप्तुं कालाद्युपादद’ इति च ॥ २१ ॥ [22]प्रकृतेः परिणामस्वभावतः । ‘गुणकालस्वभावेभ्य ईशेनाधिष्ठितत्वतः । जगदादि महत्तत्त्वमभूत्तस्येच्छया हरेरि’ति षाड्गुण्ये ॥ २२ ॥ ‘[23]भूतानि द्रव्यनामानि ज्ञानं

---

गृहीता मायया विभोः ॥१८॥ कार्यकारणकर्तृत्वे द्रव्यज्ञान क्रियाश्रयाः । बध्नन्ति नित्यदा मुक्तं मायिनं पुरुषं गुणाः ॥ १९ ॥ स एष भगवान् लिङ्गैस्त्रिभिरेतैरधोक्षजः । स्वलक्षितगतिर्ब्रह्मन् सर्वेषां मम चेश्वरः ॥ ॥२०॥ कालं कर्म स्वभावं च मायेशो मायया स्वया । आत्मन् यदृच्छया प्राप्तं विबुभूषुरुपाददे ॥ २१ ॥ कालाद्गुणव्यतिकरात्परिणामस्वभावतः । कर्मणो जन्म महतः पुरुषाधिष्ठितादभूत् ॥ २२ ॥ महतस्तु विकुर्वाणा-

ज्ञानेन्द्रियाण्यपि । क्रियां कर्मेन्द्रियाण्याहुस्तन्मूलत्वादहं त्रिधे'ति गारुडे ॥ २३ ॥ '[24]विशिष्टकार्यशक्तित्वाद्देवा वैकारिकाः स्मृताः ॥ अतिजाज्वल्यमानत्वात्तैजसानीन्द्रियाण्यपि । तामसानि तु भूतानि यतस्तावन्न तूभयमि'ति पाद्मे ॥ २४ ॥ 'ज्ञानेन्द्रियाणां देवानां ज्ञानशक्तिरुदीरिता । क्रिया कर्मेन्द्रियाणां च भूतानां द्रव्यशक्तिते'ति स्कान्दे । 'द्रव्यं तु द्रवणप्राप्यं द्रयोर्विवदमानयोः । पूर्वं वेगाभिसम्बन्धादाकाशस्तु प्रदेशत'इति प्रकाशसंहितायाम् ॥२५॥ '[26]पञ्चेन्द्रियाभिमेयत्वान्मात्रा गुण इतीरित' इति मात्स्ये । 'शब्देनैव परो द्रष्टा ज्ञायते जगदेव चे'ति विष्णुसंहितायाम् ॥ २६ ॥ '[27]सर्वचेष्टयितृत्वात्तु प्राणोऽभिभवशक्तितः । ओजस्त्वनभिभाव्यत्वात्सहश्च स्वेच्छया कृतेः । बलं विधारकत्वाच्च विधृतिर्वायुरुच्यत'इति भारते ॥२७॥ '[30]अनाद्यनन्तोऽपि हरिर्वैकारिकगणेष्वजः । अवतीर्णः पदाङ्गुष्ठमध्यास्ते विश्वभुग्विभुः । पाददेवस्तु यज्ञोऽन्यस्तं प्रविश्य हरिः स्वयम् । सर्वं विधारयन्देहे वर्ततेऽनन्तशक्तिधृगि'ति वह्निपुराणे ॥ ३० ॥ [33]सदसत्वं व्यक्ताव्यक्तत्वम् । नः भयम् । अदो ब्रह्माण्डम् । ब्रह्माण्डं हि वदन्तीति जीवानां भयकारणम् । तत्र हि संस्मृतिः । 'आकाशवायू त्वव्यक्तावितरेऽण्डे प्रकाशिताः । तथात्वाद्ब्राह्मभूतानामण्डस्थानां च

---

द्रजः सत्वोपबृंहितात् । तमः प्रधानस्त्वभवद्द्व्यज्ञानक्रियात्मकः ॥२३॥ सोऽहङ्कार इति प्रोक्तो विकुर्वन् समभूत्त्रिधा । वैकारिकस्तैजसश्च तामसश्चेति यद्भिदा ॥ २४ ॥ द्रव्यशक्तिः क्रियाशक्तिर्ज्ञानशक्तिरिति प्रभोः । तामसादपि भूतादेर्विकुर्वाणादभून्नभः ॥ २५ ॥ तस्य मात्रागुणः शब्दो लिङ्गं यद्द्रष्टृदृश्ययोः । नभसोऽथ विकुर्वाणादभूत् स्पर्शगुणोनिलः ॥ २६ ॥ परान्वयाच्छब्दवांश्च प्राण ओजः सहोबलम् । वायोरपि विकुर्वाणात् कालकर्मस्वभावतः ॥ उदपद्यत तेजो वै रूपवत् स्पर्शशब्दवत् ॥२७॥ वैकारिकान्मनो जज्ञे देवा वैकारिका दश । दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः ॥ ३० ॥ तदा संहत्य चान्योन्यं भगवच्छक्तिचोदिताः । सदसत्वमुपादाय नो भयं ससृजुर्ह्यदः ॥ ३३ ॥ वर्ष-



सा गतिरि'ति मात्स्ये ॥ ३३ ॥ [34]कालकर्मस्वभावस्थ अजीवः परमेश्वरः । अजीवः स्वात्मानमजीजनत् । तदण्डं यथा स्वात्मानं प्रसूते तथा चकार । 'यः प्राणधारणं प्राणप्रसादात्कुरुतेऽनिशम् । स जीव इति सन्दिष्टस्तदन्योऽजीव उच्यते । यत्प्रसादात्स तु प्राणः कुरुते स्वस्य धारणमि'ति वायुप्रोक्ते ॥ 'कालकर्मस्वभावस्थो वासुदेवः परः पुमान् । अकरोदण्डमुद्बुद्धमात्मप्रसनकारणमि'ति ब्रह्माण्डे ॥ जीव इति वा । 'प्राणं धारयते यस्मात्स जीवः परमेश्वरः । अजीवोऽपि महातेजास्त्वथवा जीवयज्जगदि'ति स्कान्दे ॥ ३४ ॥ '[35]अण्डे जातौ पुमांसौ द्वौ हरिर्ब्रह्मा तथैव च । अनादिस्तु हरिस्तत्र ब्रह्मा सादिरुदाहृत' इति च ॥३५॥ '[36]हरेरवयवैर्लोकाः सृष्टा इति विकल्पनम् । साक्षात्सत्यमतोऽन्यस्माद्व्यावहारिकमुच्यत'इति मात्स्ये ॥३६॥ '[37]ब्राह्मणो मुखमित्येव मुखाज्जातत्वहेतुतः । यथावदच्छ्रुतौ तद्वज्जीवो ब्रह्मेति वाग्भवेदि'ति ब्राह्मे ॥ ३७ ॥ इति द्वितीयतात्पर्ये पञ्चमोऽध्यायः ॥ ॥ ५ ॥

## षष्ठोऽध्यायः

[3]तीर्थानां शास्त्राणाम् ॥ ३ ॥ [5]याज्ञिका रोममूलस्था रोमान्तस्थास्तु तत्परे । उद्भिदो वासुदेवस्य लिङ्गगास्तु जरायुजा इति पाद्मे ।

---

पूगसहस्रान्ते तदण्डमुदकेशयम् । कालकर्मस्वभावस्थो जीवोऽजीवमजीजनत् ॥ ३४ ॥ स एष पुरुषस्तस्मादण्डं निर्भिद्य निर्गतः । सहस्रोर्वङ्घ्रिबाह्वक्षिः सहस्राननशीर्षवान् ॥ ३५ ॥ यस्येहावयवैर्लोकान् कल्पयन्ति मनीषिणः । ऊर्वादिभिरधः सप्त सप्तोर्ध्वं जघनादिभिः ॥३६॥ पुरुषस्य मुखं ब्रह्म क्षत्रमेतस्य बाहवः । ऊर्वोर्वैश्यो भगवतः पद्भ्यां शूद्रो व्यजायत ॥ ३७ ॥

### षष्ठोऽध्यायः

रूपाणां तेजसां चक्षुर्दिवः सूर्यस्य चाक्षिणी । कर्णौ दिशां च तीर्थानां श्रोत्रमाकाशशब्दयोः ॥ ३ ॥ रोमाण्युद्भिजजातीनां यैर्वा

हरेः श्मश्र्वाश्रया विद्युच्छिला लोहा नखाश्रया' इत्याग्नेये ॥ ५ ॥ [6-7]ब्राह्मणवैश्यादीन्वर्जयितुं प्रायश इति । 'मोक्षः शान्तिश्च शरणं निर्वाणं चाभिधीयत'इति ब्राह्मे । 'भेजे खगेन्द्रध्वजपादमूलमि'ति च । स्वोत्पत्त्यङ्गेषु देवानामन्येषां पादमूलतः । मुक्तिस्तु विहिता विष्णोर्निर्दिष्टेषु यथावच'इत्यध्यात्मे ॥ ६, ७ ॥ '[12]कुमारब्रह्मरुद्राद्या हरेर्मध्यात्समुद्गता'इति वामने । आत्मेति मध्यदेहश्च सर्वदेहोऽपि वा भवेत् । मनोबुद्धिरहङ्कारश्चित्तं जीवश्च कथ्यते । अथवा स्वयमेवेति वायुर्ब्रह्मापि वा भवेत् । मुख्यतो ब्रह्म परममात्मशब्देन भण्यत'इति नाममहोदधौ ॥ ११, १२ ॥ '[15]देहेन्द्रियादिभेदेन निर्भेदोऽपि हरिः स्वयम् । भण्यते केवलैश्वर्यादनाद्यानन्दचिद्घन'इति गारुडे । 'सर्व पुरुष एवेति भण्यते भेदवज्जगत् । तदधीनं तु सत्तादि यतो ह्यस्य सदा भवेदि'ति ब्रह्मतर्के । 'वितस्तिमात्रं हृदयमास्थाय व्याप्नुते जगदि'ति गारुडे ॥ १५ ॥ [17]पश्यन्त्स्वधिष्ण्यं देहं स बहिष्ठान्विषयानपि । एवमण्डान्तरं पश्यन्बहिः सर्वं च पश्यती'ति वामने ॥ १६ ॥ [18]अव्यक्तमात्मनोऽन्नं च महदादि विनाशि च । यदतीतः परो विष्णुः स एवातो विमोक्षद'इति नारदीये ॥ १८ ॥ '[19]स्वरूपांशो विभिन्नांश इति द्वेधांश इष्यते । अनन्तासनवैकुण्ठपद्मनाभाः स्वयं हरिः । जीवा

---

यज्ञस्तु सम्भृतः । केशश्मश्रुनखान्यस्य शिलालोहाभ्रविद्युताम् ॥ ५ ॥ बाहवो लोकपालानां प्रायशः क्षेमकर्मणाम् । विक्रमो भूर्भुवः स्वश्च क्षेमस्य शरणस्य च ॥ ६ ॥ सर्वकामवरस्यापि हरेश्चरण आस्पदम् ॥७॥ उदरं विदितं पुंसो हृदयं मनसः पदम् । धर्मस्य मम तुभ्यं च कुमाराणां भवस्य च ॥ ११ ॥ विज्ञानस्य च तत्वस्य परस्यात्मा परायणम् । अहं भवान् भवश्चैव य इमे मुनयोऽग्रजाः ॥ १२ ॥ ग्रहर्क्षकेतवस्तारास्तडितस्तनयित्नवः । सर्वं पुरुष एवेदं भूतं भव्यं भवच्च यत् ॥ तेनेदमावृतं विश्वं वितस्तिमधितिष्ठता ॥ १५ ॥ स्वधिष्ण्यं प्रतपन् प्राणो बहिश्च प्रतपत्यसौ ॥ १६ ॥ महिमैष ततो ब्रह्मन् पुरुषस्य दुरत्ययः । पादोऽस्य सर्वा भूतानि पुंसः स्थितिविदो विदुः ॥१८॥ अमृतं क्षेममभयं



इमे विभिन्नांशा धर्माधर्मादिसंयुता'इति वामने ॥ १९ ॥ [18]सर्वस्य यथावत्स्थितिविदः ॥ '[19]त्रिमूर्धा सन् हरिर्धत्ते द्युत्रयं मूर्धभिस्त्रिभिः । अनन्तासनवैकुण्ठनारायणपुराणि तु । बहुलक्षोच्छ्रितेष्वेषु स वसत्यमृतो हरिरि'ति मात्स्ये । 'अनन्तासनवैकुण्ठनारायणपुराणि तु । त्रीणि धामानि वै विष्णोस्त्रिलोकाद्बहिरेव च । अदायादास्तु पुत्राणामुद्रिक्तज्ञानचक्षुषः । नारायणपरा देवा एवं तान्याप्नुवन्ति' च ॥ '[20]स [21]एवान्यस्वरूपेण शक्रलोकसमीपगः । इज्यो यज्ञपुमान्नाम ज्ञानिनां गृहिणां पदम् । यतीनां ध्रुवलोकस्थो वनिनां मेरुमध्यगः । आदित्यमण्डलस्थस्तु ज्ञानिनां ब्रह्मचारिणामि'ति ब्रह्माण्डे । 'त्रिपात्स एव भगवान्सर्वप्राणिषु संस्थितः । निरन्नेषु च विद्वत्सु त्रिदशेष्वितरेषु च'त्यध्यात्मे । 'तस्माद्धरेरण्डमभूदण्डादपि चतुर्मुखः । स विराण्नामकस्तस्मादधिको हरिरेव तु ॥ १९, २०, २१ ॥ '[22]अण्डाज्जातस्य तस्यान्यद्रूपं पद्माद‌भूद्धरेः । यदोभयात्मको जज्ञे ब्रह्मा लोकपितामहः । तदैव सोऽतिरिक्तोऽभूच्छर्वपूर्वपराज्ञनात् ॥ २२ ॥ '[23-27]त्रिलोकस्थानगं विष्णुमयजच्च समाहितः । तद्रूपभूतांस्त्रींल्लोकान् पशून्कृत्वा महामना'इति गारुडे ॥ २३-२७ ॥ [26]सूत्रं मीमांसासूत्रम् ॥ २६ ॥

---

त्रिमूर्ध्नोऽधायि मूर्धसु । पादास्त्रयो बहिस्त्वासन्न प्रजानां य आश्रयाः ॥ १९ ॥ अन्तस्त्रिलोक्यास्त्वपरो गृहमेधैर्बृहद्व्रतः । सृती विचक्रमे विष्वक् साशनानशने उभे ॥२०॥ यदविद्या च विद्या च पुरुषस्तूभयाश्रयः । तस्मादण्डाद्विराड् जज्ञे भूतेन्द्रियगुणाश्रयः ॥ २१ ॥ तद्द्रव्यमत्यगाद्विश्वं गोभिः सूर्य इवाश्रयम् । यदास्य नाभ्यान्नलिनादहमासं महात्मनः ॥ २२ ॥ नाविन्दं यज्ञ सम्भारान् पुरुषावयवानृते । तेषु यज्ञाश्च पशवः सवनस्पतयः कुशाः ॥ २३ ॥ इदं च देवयजनं कालश्चोरुगुणान्वितः । वसून्योषधयः स्नेहा रसलोहमृदो जलम् ॥ २४ ॥ ऋचो यजूंषि सामानि चातुर्होत्रं च सत्तम । नामधेयानि मन्त्राश्च दक्षिणाश्च व्रतानि च ॥ २५ ॥ देवतानुक्रमः कल्पः सङ्कल्पः तन्त्रमेव च । गतयो मतयः श्रद्धा प्रायश्चित्तं समर्पणम् ॥ २६ ॥ ततस्ते

[30]यस्मात्तमेवायजन् तस्मादिदं तस्मिन्नाहितम्। ‘नित्यं गृहीताः सत्वाद्या जीववज्जडवन्न तु। मिथ्यामानात्स्वरूपत्वात्स्वातन्त्र्याद्धहिरेव त्वि’ति ब्रह्मतर्के ॥३०॥ ‘[32]सदिति व्यक्तमुद्दिष्टमसद्व्यक्तमुच्यते। गम्यागम्यस्वरूपत्वात्तत्सत्तादिर्हरेर्यतः। अतस्तस्मादन्यदेव ह्यनन्यदिति भण्यत’इति च ॥ ३२ ॥ ‘[35]सर्वजीवनिकायेषु ब्रह्मवायू हरेर्विदौ। न चान्यस्तादृशो वेत्ता यावद्वेत्ति हरिः स्वयम्। तावत्तावपि नो विष्णुं जानीतो लोकवन्दितावि’ति ब्रह्माण्डे ॥ ३५ ॥ ‘[38]स्वयमेव स्वरूपाणि मत्स्यकूर्मादिकान्यजः। स्वात्मन्येवेच्छया सृष्ट्वा तैर्देवादीन्प्रपात्यसौ ॥ संयच्छत्यसुरान्विष्णुः कल्पे कल्पे जगत्प्रभुः। तिरोहितं स्वरूपं च प्रकाशयति शाश्वत’इति भागवततन्त्रे ॥ ३८ ॥ ‘[39-40]ऋतं तदात्मना ज्ञप्तेः सत्यं साधुत्वतः परम्। सम्यक्संस्थमदूष्यत्वाच्छुद्धं दोषोज्झितत्वतः। केवलं तादृशाभावात्प्रत्यगन्तरवस्थितेः। एतदेतादृशं तत्त्वं यो वेद स विमुच्यत’इति ब्रह्मतर्के ॥ ३९, ४० ॥ ‘[41]यः शेते [44]प्रलये विष्णुः शून्यनामा महाकृतिः। स तु नारायणो नाम नराणा-

---

भ्रातर इमे प्रजानां पतयो नव। अयजन् व्यक्तमव्यक्तं पुरुषं सुसमाहिताः ॥ २८ ॥ ततश्च मनवः काल ईजिरे ऋषयोऽपरे। पितरो विबुधा दैत्या मनुष्याः क्रतुभिर्विभुम् ॥ २९ ॥ नारायणे भगवति तदिदं विश्वमाहितम्। गृहीतमायोरुगुणे सर्गादावगुणे स्वतः ॥ ३० ॥ इति तेऽभिहितं तात यथेदमनुपृच्छसि। नान्यद्भगवतः किञ्चिद्भाव्यं सदसदात्मकम् ॥ ३२ ॥ नतोऽस्म्यहं तच्चरणं समीयुषां भवच्छिदं स्वस्त्ययनं सुमङ्गलम्। यः स्वात्ममायाविभवं स्वयं गतो नाहं नभस्वांस्तमथापरे कुतः ॥ ३५ ॥ स एष आद्यः पुरुषः कल्पे कल्पे सृजत्यजः। आत्माऽऽत्मन्यात्मनाऽऽत्मानं स संयच्छति पाति च ॥ ३८ ॥ विशुद्धं केवलं ज्ञानं प्रत्यक्सम्यगव्यवस्थितम्। सत्यं पूर्णमनाद्यन्तं निर्गुणं नित्यमद्वयम् ॥३९॥ ऋतं विन्दन्ति मुनयः प्रशान्तात्मेन्द्रियाशयाः। यदा तदेवासत्तर्कैस्तिरोधीयेत विप्लुतम् ॥ ४० ॥ आद्योऽवतारः पुरुषः परस्य कालः स्वभावः सदसन्मनश्च। द्रव्यं विकारो गुण इन्द्रियाणि विराट् स्वराट् स्थास्नु



मयनत्वतः। रूपं द्वितीयं भवति दीपाद्दीपान्तरं यथा। सिसृक्षोस्तस्य पुरुष इत्याहुस्तद्विदो जनाः। स रमाया द्वितीये तु रूपे प्रकृतिसंज्ञिते। वीर्यमाधत्त पुरुषो महांस्तस्मादजायत। योऽसौ हिरण्यगर्भाख्यः पुरुषः सोऽपि भण्यते। श्रद्धेत्युक्ता तु तत्पत्नी साऽपि प्रकृतिरुच्यते। प्रलये स्वशरीरौ तौ विभागेन व्यवस्थितौ। शरीरं प्राप्य पुरुषात्संयोगं तौ प्रचक्रतुः। ततः पुनर्महत्तत्त्वं प्रजातं जगदङ्कुरम्। स्वस्यैव पुत्रतां यातमहङ्कारस्ततोऽजनी’ति व्योमसंहितायाम्। पुरुषस्तस्यैवाद्योऽवतारः। कालादयो रूपवत्। अस्वरूपमपि प्रियत्वात्। ‘पुरुषाद्या हरेरूपं ब्रह्माद्यास्तत्प्रियाः स्मृताः। स्वरूपभूता नैवैते तत्सन्निधियुता अपी’ति पाद्मे। ‘कालो वस्तुस्वभावश्च प्रकृतिः प्राण एव च। मनश्च पञ्चभूतानि विकारस्त्रिगुणा अपि। न स्वरूपं हरेरेतत्तथाप्येषु हरिः स्थित’इति पाद्मे। सत्प्राणः। ‘सदिति प्राण’इति श्रुतेः। ‘द्रव्यं तु पञ्चभूतानि विकारोऽण्डमुदाहृतम्। विराजं गरुडं प्राहुः स्वराडिन्द्र उदाहृत’इति षाड्गुण्ये। सर्वं तु रूपवद्विष्णोर्विशेषेण विभूतिमत्। अतिप्रियत्वाच्चैवतत्स्वरूपमपि भण्यत’ इति स्कान्दे। ‘स्वतो महत्वं तु महोविशेषप्राप्तिशक्तिता। विभूतिर्लक्षणोत्साहो लक्ष्मीशब्देन भण्यत’इति ब्रह्मतर्के। ‘प्रधानत्वेन सर्वस्मान्मत्स्यकूर्मादयो हरेः। अवताराः श्रुतौ ख्याताः स एवैते ततः स्मृताः। न स्वरूपं तु ब्रह्माद्याः स्मृता मायाविभूतयः। स्वेच्छयैषां विशिष्टत्वं कुरुते तत्तथा स्मृत’इति व्योमसंहितायाम् ॥

---

चरिष्णु भूम्नः ॥ ४१ ॥ अहं भवो यज्ञ इमे प्रजेशा दक्षादयो ये भवदादयश्च। स्वर्लोकपालाः खगलोकपाला नृलोकपालास्तललोकपालाः ॥४२॥ गन्धर्वविद्याधरचारणेशा ये यक्षरक्षोरगनागनाथाः। ये वा ऋषीणामृषभाः पितृणां दैत्येन्द्रसिद्धेश्वरदानवेन्द्राः ॥ ४३ ॥ अन्ये च ये प्रेतपिशाचभूतकूष्माण्डयादोमृगपश्वधीशाः। यत्किञ्च लोके भगवन्महस्वदोजःसहस्वद्बलवत् क्षमावत्। ह्रीः श्रीर्विभूत्यात्मवदद्भुतार्णं तत्तत् परं रूपवदस्वरूपम् ॥४४॥ प्राधान्यतो यानृषय आमनन्ति लीलावतारान्

‘यज्ञशब्दोदितौ द्वौ तु देवौ लोकपुरस्कृतौ। एको नारायणस्तत्र रुद्रच्छिन्नस्तथापरः। स तु यज्ञाभिमानी स्यात्तत्पतिः केशवः स्मृत’इति पाद्मे ॥ ४१-४५ ॥ इति द्वितीयतात्पर्ये षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः

‘[2]क्रियाभिमानाद्यज्ञोऽसाविन्द्रसूनुः प्रकीर्तितः। यज्ञेशत्वात्स्वयं विष्णुर्यज्ञो रुचिसुतः स्मृत’इति पाद्मे। हरिरिति ज्ञात्वेशावास्यमित्यादिनाऽनूक्तः। ‘त्रयी श्रुतिर्नित्यवाक्च वेदोऽनुवचनं तथे’ति ह्यभिधानम् ॥ २ ॥ [4]अमर्यीं विष्णुप्रधानाम् ॥ ४ ॥ मे [5]तपतः सतः। सः नः अर्थे। सनात्पूर्वम्। ‘ब्रह्मणस्तपतः पूर्वं विष्णुर्जात उरुक्रमः। सर्वलोकहितार्थाय येन रूपं प्रकाशितम्। यश्च पाति सदा लोकानजितो जयतां वरः। तस्माद्रुद्रः समुत्पन्नः सर्वसंहारकृद्विभुः। एते त्रिपुरुषाः प्रोक्ताः सृष्टिस्थित्यन्तकारिणः। निमित्तमात्रं तौ देवौ विष्णुः सर्वस्य कारणमि’ति स्कान्दे ॥ ५ ॥ ‘[6]नरो नारायणश्चैव हरिः कृष्णस्तथैव च। चत्वारो धर्मतनया हरिरेव त्रयो मतः। अनन्तो नरनामाऽत्र

---

पुरुषस्य भूम्नः। आपीयतां कर्मकषायशोषाननुक्रमिष्ये त इमान् सुपेशलान् ॥ ४५ ॥

सप्तमोऽध्यायः

जातो रुचेरजनयत्सुयशाः सुयज्ञ आकूतिसूनुरमरानथ दक्षिणायाम्। लोकत्रयस्य महतीमहरद्यदार्तिं स्वायम्भुवेन मनुना हरिरित्यनूक्तः ॥ २ ॥ अत्रेरपत्यमभिकाङ्क्षत आह तुष्टो दत्तो मयाऽहमिति यद्भगवान् स दत्तः। यत्पादपङ्कजपरागपवित्रदेहा योगर्धिमापुरमयीं यदुहैहयाद्याः ॥ ४ ॥ तप्तं तपो विविधलोकसिसृक्षया मे आदौ सनात्सुतपसस्तपतः स नोऽभूत्। प्राक्कल्पसम्प्लवविनष्टमिहात्मतत्त्वं सम्यग्जगाद मुनयो यदचक्षतात्मन् ॥५॥ धर्मस्य दक्षदुहितर्यजनि स्वमूर्त्यां नारायणो नर इति स्वतपःप्रभावः। दृष्ट्वात्मनो भगवतो नियमावलोपं



तस्मिंस्तु नरनामवान्। विशेषेण स्वयं विष्णुर्निवसत्यम्बुजेक्षणः। तस्माच्चतुर्धा धर्मस्य जातो विष्णुरितीरित’इति षाड्गुण्ये ॥६॥ ‘[8]अवतारो महाविष्णोर्वासुदेव इतीरितः। यो ध्रुवाय निजं प्रादात्स्थानमन्यानधिष्ठितमि’ति प्रकाशसंहितायाम् ॥ ८ ॥ ‘[9]पृथुर्नाम महाराजस्तत्र विष्णुः स्वयं प्रभुः। पृथुनामा चतुर्बाहुः प्रविष्टस्तेन चार्थित’इति महासंहितायाम् ॥ ९ ॥ [10]यद्रूपं परमहंसप्राप्यं पदमामनन्ति ॥१०॥ ‘छन्दांसि [11]च मखाश्चैव देवा लोकाश्च सर्वशः। सर्वे विष्णौ स्थिता यस्मादतः सर्वमयो ह्यसावि’ति महासंहितायाम् ॥ ११ ॥ [12]क्षोणीमयनौकाश्रयत्वात्क्षोणीमयः ॥ १२ ॥ ‘[16]हरिस्तापसनामाऽसौ जातस्तपसि वै मनुः। गजेन्द्रं मोचयामास ससर्ज च जगद्विभुरि’ति मात्स्ये ॥१६॥ ‘ऐन्द्रं [18]पदं नान्तरीयं फलं तु हरितोषणम्। जगद्दातुर्बलेर्यस्मादानन्दोद्रिक्तता भवेदि’ति ब्रह्मतर्के। शीर्षाख्यं मानम् ॥१८॥

---

देवस्त्वनङ्गपृतना घटितुं न शेकुः ॥६॥ विद्धः सपत्न्युदितपत्रिभिरन्ति राज्ञो बालोऽपि सन्नुपगतस्तपसे वनाय। तस्मा अदाद्ध्रुवगतिं गृणते प्रसन्नो दिव्याः स्तुवन्ति मुनयो यदुपर्यधस्तात् ॥८॥ यद्वेनमुत्पथगतं द्विजवाक्यवज्रनिष्पिष्टपौरुषभगं निरये पतंतम्। त्रात्वाऽर्थितो जगति पुत्रपदं च लेभे दुग्धा वसूनि वसुधा सकलानि येन ॥ ९ ॥ नाभेरसावृषभ आस सुदेविसूनुर्यो वै चचार समदृग् हृदि योगचर्याम्। यत्पारमहंस्यमृषयः पदमामनन्ति स्वस्थः प्रशान्तकरणः परिमुक्तसङ्गः ॥ २० ॥ सत्रे ममास भगवान् हयशीर्ष एषः साक्षात् स यज्ञपुरुषस्तपनीयवर्णः। छन्दोमयो मखमयोऽखिलदेवतात्मा वाचो बभूवुरुशतीः श्वसतोऽस्य नस्तः ॥ ११ ॥ मत्स्यो युगान्तसमये मनुनोपलब्धः क्षोणीमयो निखिलजीवनिकायकेतः। विस्रंसितानुरुभये सलिले मुखान्मे आदाय तत्र विजहार ह वेदमार्गान् ॥ १२ ॥ स्मृत्वा हरिस्तमरणार्थिनमप्रमेयश्चक्रायुधः पतगराजभुजाधिरूढः। चक्रेण नक्रवदनं विनिपाट्य तस्माद्धस्ते प्रगृह्य भगवान् कृपयोज्जहार ॥ १६ ॥ नार्थो बलेरयमुरुक्रमपादशौचमम्भः शिवं धृतवतो विबुधाधिपत्यम्। यो वै प्रतिश्रुतमृतेऽपि च शीर्षमाणमात्मन्यमङ्ग मनसा हरयेऽभिमेने ॥ १८ ॥ तुभ्यं च नारद

‘[19]ऐतरेयो हरिः प्राह नारदाय स्वकां तनुम् । यत्प्रापुर्वैष्णवा नान्ये यद्दते न सुखं परमि’ति ब्राह्मे ॥ १९ ॥ ‘[20]मन्वन्तरेषु भगवान् चक्रवर्तिषु संस्थितः । चतुर्भुजो जुगोपैतदुष्टराजन्यनाशकः । राजराजेश्वरेत्याहुर्मुनयश्चक्रवर्तिनम् । वीर्यदं परमात्मानं शङ्खचक्रगदाधरमि’ति सत्यसंहितायाम् ॥२०॥ [23]प्राणादिक्लेशः ॥२३॥ [24]दूरस्था सुहृद्यस्य भगवतः स दूरेसुहृत् । सुशोषोऽग्निः । ‘अग्निः सुशोषः कक्षघ्नस्तिमिरारिर्हिरण्यद’ इति ह्यभिधाने ॥ २४ ॥ [25]विनेष्यति विनाशं एष्यति । दारहर्तुः भगवतः ॥ ‘धनुर्विस्फूर्जितैर्नष्टो रावणः पूर्वमेव तु । पुनः शरै राममुक्तैः सानुबन्धो विनश्यती’ति स्कान्दे ॥ ॥ २५ ॥ ‘[26]राम एको ह्यनन्तांशस्तत्र रामाभिधो हरिः । शुक्लकेशात्मकस्तिष्ठन्त्रमयामास वै जगदि’ति ब्राह्मे । ‘विष्णोर्नान्येन कर्माणि परेषां तन्निबन्धनमि’ति मात्स्ये ॥२६॥ ‘[27]सहस्रधनुपस्तूर्ध्वं द्युशब्देनापि भण्यत’ इति तन्त्रमालायाम् । इतरथा विष्णुर्न चेत् । स्वमहिम-

---

भृशं भगवान् विवृद्धभावेन साधु परितुष्ट उवाच योगम् । ज्ञानं च भागवतमात्मसुतत्वदीपं यद्वासुदेवशरणा विदुरञ्जसैव ॥ १९ ॥ चक्रं च दिक्ष्वविहतं दशसु स्वतेजो मन्वन्तरेषु मनुवंशधरो बिभर्ति । दुष्टेषु राजसु दमं विदधत्स्वकीर्तिं सत्ये निविष्ट उशतीं प्रथयंश्चरित्रैः ॥ २० ॥ कृत्स्नप्रसादसुमुखः कलया कलेश इक्ष्वाकुवंश अवतीर्य गुरोर्निदेशे । तिष्ठन् वनं सदयितानुज आविवेश यस्मिन् विरुध्य दशकन्धर आर्तिमृच्छत् ॥ २३ ॥ तस्मा अदादुदधिरूढभयाङ्गवेपो मार्गं सपद्यरिपुरं हरवद्दिधक्षोः । दूरेसुहृन्मथितरोषसुशोषदृष्ट्या तातप्यमानमकरोरगनक्रचक्रः ॥ २४ ॥ वक्षस्थलस्पर्शरुग्णमहेन्द्रवाहदन्तैर्विलम्बितककुब्जयरूढहासः । सद्योऽसुभिः सह विनेष्यति दारहर्तुर्विस्फूर्जितैर्धनुष उच्चरितैस्ससैन्यः ॥ २५ ॥ भूमेः सुरेतरवरूथविमर्दितायाः क्लेशव्ययाय कलया सितकृष्णकेशः । जातः करिष्यति जनानुपलक्ष्यमार्गः कर्माणि चात्ममहिमोपनिबन्धनानि ॥२६॥ तोकेन जीवहरणं यदुलूपिकायास्त्रैमासिकस्य च पदा शकटोऽपवृत्तः । यद्रिङ्गतोऽन्तरगतेन दिवि-



निबन्धनत्वेन न भाव्यम् ॥ २७ ॥ [28]दिव्यमिव स्तुत्यमिव । तदपेक्षया । अन्येषां स्तुत्यमेव यत्तस्य तच्च दिव्यमिव ॥ २९ ॥ ‘[31]अन्यथाज्ञानहेतुर्या वाक् सा जल्पिः प्रकीर्तिते’ति तन्त्रमालायाम् ॥ ‘[29-31]यत्तु सर्वात्मनाऽज्ञानं निशा सा परिकीर्तिते’ति कौर्मे ॥ ३१ ॥ [33]कलपदं च आयतं च । ‘सप्तस्वरसमाहारो मूर्च्छनेति प्रकीर्तिते’ति गान्धर्वे ॥ ३३ ॥ [34-35]विद्वेषिणोऽप्युदासीना भक्ता अपि न संशयः । हरेर्हि सदनं यान्ति व्यक्तं भक्तैस्तु गम्यते । आरभ्य तम आमुक्तेः कृष्णस्य सदनं यतः । अव्यक्तहरिलोकत्वादन्येषामन्यलोकते’ति बृहत्संहितायाम् ॥ ‘रामभीमार्जुनादीनि विष्णोर्नामानि सर्वशः । रमणाभयवर्णाद्याः शब्दवृत्तेर्हि हेतवः । हरिर्हि तत्र तत्रस्थो रमणादीन्करोत्यजः ॥ अतस्तस्यैव नामानि व्याजादन्यगतानि तु । व्यवहारप्रवृत्त्यर्थं दुष्टानां मोहनाय चे’ति स्कान्दे ॥ ३४, ३५ ॥ [36]तृतीये सप्तमे चैव षोडशे पञ्चविंशके । अष्टाविंशे युगे कृष्णः सत्यवत्यामजायत । व्यासाचार्यस्तु पूर्वेषु चरमे स्वयमेव तु । विव्यास वेदांश्चक्रे च भारतं वेदसंमितमि’ति

---

स्पृशोर्वा उन्मूलनं त्वितरथाऽर्जुनयोर्न भाव्यम् ॥ २७ ॥ तत्कर्म दिव्यमिव यन्निशि निःशयानं दावाग्निनाशु विपिने परिदह्यमाने । उन्नेष्यति व्रजमितोऽवसितान्तकालं नेत्रे पिधाय्य सबलोऽनधिगम्यवीर्यः ॥ २९ ॥ नन्दञ्च मोक्ष्यति भयाद्वरुणस्य पाशाद् गोपान् बिलेषु पिहितान् मयसूनुना च । जल्प्यावृतं निशि शयानमतिश्रमेण लोके विकुण्ठ उपधास्यति गोकुलं स्म ॥ ३१ ॥ क्रीडन् वने निशि निशाकररश्मिगौर्यां रासोन्मुखः कलपदायतमूर्च्छितेन । उद्दीपितस्मररुजां व्रजसद्वधूनां हर्तुर्हरिष्यति शिरो धनदानुगस्य ॥ ३३ ॥ ये च प्रलम्ब-खर-दर्दुर-केश्यरिष्ट-मल्लेभ-कंस यवनाः कुज-पौण्ड्रकाद्याः । अन्येऽपि शाल्व-कपि-बल्वल-दन्तवक्र-सप्तोक्ष-शम्बर-विदूरथ-रुक्मिमुख्याः ॥ ३४ ॥ ये वा मृधे समिति शालिन आत्तचापाः काम्बोजमत्स्यकुरुसृञ्जयकैकयाद्याः । यास्यन्त्यदर्शनमिता बलपार्थभीम व्याजाह्वयेन हरिणा निलयं तदीयम् ॥३५॥ कालेन-मीलितदृशामवमृश्य नृणां स्तोकायुषां स्वनिगमो बत दूरपारः । आविर्हितस्त्वनुयुगं सहि सत्यवत्यां वेदद्रुमं विटपशो विभजिष्यति स्म ॥३६॥

च ॥ ३६ ॥ ‘[39]हरीच्छया विभूतिर्या ब्रह्मादीनां सदा भवेत् । इच्छया वा बहुविधस्तेषु विष्णुः स्वयं स्थितः । अतो मायाविभूतित्वं तेषां मत्स्यादिकाः स्वयमि’त्यध्यात्मे ॥ ३९ ॥ [41]विदुर्नान्तम् । अनन्तत्वात् ॥ ४१ ॥ [42]देवमायां विदन्ति । संसारमतितरन्ति च ॥ ॥ ४२ ॥ [46]तत्परायणास्तच्छीलास्तच्छिक्षाश्च ॥ ४६ ॥ ‘[47]अव्यक्ताद्यनहंमानादात्मतत्त्वं हरिः स्मृतः । अशब्दश्चाप्रसिद्धत्वाच्छान्तः पूर्णसुखत्वत’इति ब्रह्मतर्के ॥ ४७ ॥ [49]भावस्वभावो भक्तिस्वभावः । तेन निर्मितस्य सत्पुरुषस्य प्रसिद्धः । ‘भावो भक्तिः प्रणामश्च प्रावण्यमपि चादर’इत्यभिधानात् ॥ ४९ ॥ ‘[50]सत्तादिर्यत्स्वतो विष्णोस्तस्मादन्यः स सर्वतः । यत्सत्तादिरतोऽन्यस्य नान्यत्वं भेदिनोऽपि त्वि’ति ब्रह्माण्डे ॥ ५० ॥ ‘[53]आक्षिप्यते किमित्येतद्यतोऽल्पफलता भवेत् ।

---

सर्गे तु योऽहमृषयो नव ये प्रजेशाः स्थानेऽथ धर्ममखमन्वमरावनीशाः । अन्ते त्वधर्महरमन्युवशाः सुराद्या मायाविभूतय इमाः पुरुशक्तिभाजः ॥ ॥ ३९ ॥ नान्तं विदाम्यहममी मुनयः प्रजेशा मायाबलस्य पुरुषस्य कुतोऽपरे ये । गायन् गुणान् दशशतानन आदिदेवः शेषोऽधुनापि समवस्यति नास्य पारम् ॥ ४१ ॥ येषां स एव भगवान् दययेदनन्तः सर्वात्मनाश्रितपदो यदि निर्व्यलीकम् । ते वै विदन्त्यतितरन्ति च देवमायां नैषां ममाहमितिधीः श्वसृगालभक्ष्ये ॥ ४२ ॥ ते वै विदन्त्यतितरन्ति च देवमायां स्त्रीशूद्रहूणशबरा अपि पापजीवाः । यद्यद्भुतक्रमपरायणशीलशिक्षास्तिर्यग् जना अपि किमु श्रुतधारणा ये ॥ ४६ ॥ शश्वत्प्रशान्तमभयं प्रतिबोधमात्रं शुद्धं समं सदसतः परमात्मतत्वम् । शब्दो न यत्र पुरुकारकवान् क्रियार्थो माया परैत्यभिमुखे च विलज्जमाना ॥ ४७ ॥ स श्रेयसामपि विभुर्भगवान् यतोऽस्य भावस्वभावविहितस्य सतः प्रसिद्धः ॥ देहे स्वधातुविगमे तु विशीर्यमाणे व्योमेव तत्र पुरुषो न विशीर्यतेऽजः ॥ ४९ ॥ सोऽयं तेऽभिहितस्तात भगवान् विश्वभावनः । समासेन हरेर्नान्यदन्यस्मात्सदसच्च यत् ॥५०॥ नृजन्मनि न तुष्येत किं फलं यमनश्वरे । कृष्णे यद्यपवर्गेशे भक्तिः स्यादनपायिनी ॥ ५३ ॥



वस्तुनो यस्य चाल्पत्वं पुंसो वा नेति चोच्यत’इति प्रकाशसंहितायाम् ॥ ॥ ५३ ॥ इति द्वितीयतात्पर्ये सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः

[11]निजावयवेभ्यः सृष्टाः । बाह्यावयवा लोकैः कल्प्यन्ते ॥११॥ [12-14]जीवे कर्मसमावापः । परमेश्वरेण गृह्यते । गुणिनां महदादिजीवानां सामर्थ्यं परिमाणम् । देवासुरेभ्यो मघवानित्यादि ॥ १२, १४ ॥ [18]श्रेणीनामङ्गरक्षकाणां युद्धेषूच्यते ॥ १८ ॥ [19]हेतुलक्षणं ब्रह्मलक्षणम् ॥ १९ ॥ [20]योगतो लिङ्गभङ्गः पूर्वोक्तः । पानेन ते देवेत्यादि पश्चात् ॥२०॥ [23]द्वेधा वावात्ममाया तद्रूपा तद्वशा चेति । तद्वशया संसारयति । स्वरूपया विमोचयत्युदास्ते तद्वशां विमुक्तस्य इतरयैनं रमयत्येष आत्मे(त्मै)ष आनन्द’ इति सौकारायणश्रुतिः ॥२३॥ [25]यस्मादनुतिष्ठन्ति तस्मात्परमेष्ठी प्रमाणम् ॥ २५ ॥ ‘[27]बालोऽपि स गुरुत्वेन मुनिभ्यो ब्रह्मणा यतः । दत्तोऽतो ब्रह्मरातेति नाम

---

### अष्टमोऽध्यायः

पुरुषावयवैर्लोकाः स पालाः पूर्वकल्पिताः । लोकैरमुष्यावयवाः स पालैरिति शुश्रुम ॥११॥ यावान्कल्पो विकल्पो वा यथा कालोऽनुमीयते । भूतभव्यभवच्छब्द आयुर्मानं च यत्कृतम् ॥ १२ ॥ यस्मिन् कर्मसमवायो यथा येनोपगृह्यते । गुणानां गुणिनां चैव परिमाणं सुविस्तरम् ॥ १४ ॥ नृणां साधारणो धर्मः सविशेषश्च यादृशः । श्रेणीनां राजर्षीणां च धर्मः कृच्छ्रेषु जीवताम् ॥ १८ ॥ तत्वानां परिसङ्ख्यानं लक्षणं हेतुलक्षणम् । पुरुषाराधनविधिर्योगस्याध्यात्मिकस्य च ॥ १९ ॥ योगेश्वरैश्वर्यगतिं लिङ्गभङ्गं च योगिनाम् । वेदोपवेदधर्माणामितिहासपुराणयोः ॥ २० ॥ यथात्मतन्त्रो भगवान् विक्रीडत्यात्ममायया । विसृज्य च यथा मायामुदास्ते साक्षिवद्विभुः ॥ २३ ॥ अत्र प्रमाणं हि भवान् परमेष्ठी यथात्मभूः । अपरे ह्यनुतिष्ठन्ति पूर्वेषां पूर्वजैः कृतम् ॥ २५ ॥ स उपामन्त्रितो राज्ञा कथायामिति सत्पतेः । ब्रह्मरातो भृशं प्रीतो विष्णुरातेन

वैयासकेरभूदि'ति ब्राह्मे ॥ २७ ॥ '[28]यत्र ब्रह्मान्तरोत्पत्तिः ब्रह्मकल्पः स ईरित'इति च ॥ २८ ॥ इति द्वितीयतात्पर्ये अष्टमोऽध्यायः ॥८॥

## नवमोऽध्यायः

[1-2]परस्य अर्थव्यतिरिक्तस्य । यदधातुमत इत्यस्य ह्युत्तरम् ॥ 'अशरीरस्य जीवस्य शरीरोत्पत्तिकारणम् । ईश्वरेच्छा प्राथमिका तां विना न हि किश्चन ॥ द्वितीया प्रकृतिः प्रोक्ता तद्रूपा हि गुणास्त्रयः । तेषां संपातजो भावो ममाहमिति या मतिः । देहात्परस्य देहित्वमहंभावमृते कुतः । यथारजस्तमोभावैर्विना स्वप्नो न जायते । निद्रा कामाद्यभावेन तद्वद्देहः क तान्विना । तस्मात्प्रकृत्यैव पुमान्मानुषादिविकारया । मानुषादिरिवाभाति नित्यचैतन्यरूपवान् ॥ ॥ १, २ ॥ [3]यदा स्वरूपं जानाति कालप्रकृतिवर्जितम् । वासुदेवप्रसादेन तदा मुक्तो भवत्यसावि'ति भविष्यत्पुराणे ॥ ३ ॥ [4]यतो भगवदुक्तं प्रमाणमतस्तदुक्तं पुराणं त्वत्प्रश्नानामुत्तरत्वेन वक्ष्ये ॥ ४ ॥ [8]तपो ब्रह्म । 'तपसोऽध्यजायते'ति श्रुतेः । अखिललोकप्रकाशनं यत् तदालोचयामास । तपतां तपीयानित्यनेनात्युत्तमोत्तमत्वमुक्तं भवति ।

---

संसदि ॥ २७ ॥ आह भागवतं नाम पुराणं ब्रह्म सम्मितम् । ब्रह्मणे भगवत्प्रोक्तं ब्रह्मकल्प उपागते ॥ २८ ॥

### नवमोऽध्यायः

श्री शुक उवाच—आत्ममायामृते राजन् परस्यानुभवात्मनः । न घटेतार्थसम्बन्धः स्वप्ने द्रष्टुरिवाञ्जसा ॥ १ ॥ बहुरूप इवाऽभाति मायया बहुरूपया । रममाणो गुणेष्वस्या ममाहमिति मन्यते ॥ २ ॥ यर्हि चायं महित्वे स्वे परस्मिन् कालमाययोः । रमते गतसम्मोहस्त्यक्त्वोदास्ते तदोभयम् ॥ ३ ॥ आत्मतत्वविशुद्ध्यर्थं यदाह भगवानृतम् । ब्रह्मणेऽदर्शयद्रूपमव्यलीकव्रुताद्दतः ॥ ४ ॥ दिव्यं सहस्राब्दममोघदर्शनो जितानिलात्मा विजितोभयेन्द्रियः । अतप्यत स्माखिललोकतापनं तपस्तपीयां-



'महान्महीयसामादिं ब्रूयादत्युत्तमोत्तमम् । यत्राधिकं वदेत्किश्चिज्ज्ञेयोऽर्थस्तत्र चाधिक'इति व्यासनिरुक्ते ॥ 'तपोरूपं परं ब्रह्म ब्रह्माऽचिन्तयदञ्जसे'ति षाड्गुण्ये ॥ ८ ॥ [9]यत् यतः । 'यत्तदित्यादयः शब्दाः पश्चम्यन्ताः प्रकीर्तिता'इति च ॥ ९ ॥ [10]मायातीतत्वात् ॥ १० ॥ [14]प्रेह्वश्रिताः याः विभूतयः । 'सत्वं तु शोभनत्वं स्यात्तद्युक्ताः सात्वता मता' इत्यध्यात्मे ॥१४॥ '[15]मुक्तैः स्वपार्षदैः पूर्वैर्ब्रह्माद्यैश्चैव संयुतम् । ब्रह्मा ददर्श तपसा भगवन्तं हरिं प्रभुमि'ति गारुडे ॥१५॥ [16]इच्छाद्या मोचिकाद्याश्च अणिमाद्याश्च शक्तयः । प्रदिष्टा वासुदेवाद्या दामोदरपरास्तथा । अङ्गानि विमलाद्यास्तु प्रह्वयाद्यात्मादिका मताः । एवं षोडशभिश्चैव पञ्चभिश्च हरिः स्वयम् । चतुर्भिश्च वृतो नित्यं तत्स्वरूपाश्च शक्तय'इति भागवततन्त्रे ॥ १६ ॥ [22]मनीषितं तपः ॥ २२ ॥ [23-24]कर्मविमोहिते इदंकार्यमित्यजानति । हृदयं प्रियम् । 'प्रियं हृदयमुद्रिक्तं कान्तमित्यभिधीयत'इत्यभिधानात् । 'तपः प्रियं सदा विष्णोस्तपसैवाप्यते हरिः । स्वयं च तपसैवेदं बिभर्ति ज्ञानमेव हि ।

---

स्तपतां समाहितः ॥८॥ तस्मै स्वलोकं भगवान् सभाजितः सन्दर्शयामास परं न यत्परम् । व्यपेतसङ्क्लेशविमोहसाध्वसं सन्दृष्टवद्भिर्विबुधैरभिष्टुतम् ॥ ९ ॥ न वर्तते यत्र रजस्तमस्तयोः सत्वं च मिश्रं न च कालविक्रमः । न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः ॥ १० ॥ प्रेह्वंस्थिता याः कुसुमाकरानुगैर्विगीयमाना प्रियकर्म गायती। ददर्श तत्राखिलसात्वतां पतिं श्रियः पतिं यज्ञपतिं जगत्पतिम् ॥ ॥१४॥ सुनन्दनन्द प्रबलार्हणादिभिः स्वपार्षदमुख्यैः परिसेवितं विभुम् । भृत्यप्रसादाभिमुखं दृगासवैः प्रसन्नहासारुणलोचनाननम् ॥ १५ ॥ किरीटिनं कुण्डलिनं चतुर्भुजं पीतांशुकं वक्षसि लक्षितं श्रिया । अध्यर्हणीयासनमास्थितं विभुं वृतं चतुः षोडश पञ्चशक्तिभिः ॥ १६ ॥ मनीषितानुभावोऽयं मम लोकावलोकनम् । यदुपश्रुत्य रहसि चकर्थ परमं तपः ॥ २२ ॥ प्रत्यादिष्टं मया तत्र त्वयि कर्मविमोहिते । तपो मे हृदयं साक्षादात्माऽहं तपसोऽनघ ॥ २३ ॥ सृजामि तपसैवेदं ग्रसामि

तपःशब्दाभिधं प्रोक्तं ज्ञानरूपो हरिर्यतः । ज्ञानवीर्यो ज्ञानबलो ज्ञानानन्द उदाहृत'इति बृहत्संहितायाम् ॥ २३, २४ ॥ '[31]येन येन यथा ज्ञात्वा नियतं मुक्तिराप्यते । तद्विज्ञानमिति प्रोक्तं ज्ञानं साधारणं स्मृतमि'ति वामने ॥ ३१ ॥ [33]परं स्वतन्त्रं न । विष्णोरधीनं प्राक्-सृष्टेस्तथैव च लयादनु । अस्य सत्वप्रवृत्त्यादि विशेषेणाधिगम्यते । स्वातन्त्र्यं स्थितिकाले तु कथञ्चिद्बुद्धिमोहतः । प्रतीयमानमपि तु तस्मान्नैवेति गम्यते । जनिष्येऽहं लयिष्येऽहमिति न ह्यभिसन्धितः । अतो जीवनमप्येतद्भवेदीशाभिसंहितम् । अतः स्वरूपभेदेऽपि ह्यात्मैवेद-मिति श्रुतिः । वदत्यस्येशतन्त्रत्वाद्यथाऽशक्तस्त्वसन्निति । विद्यन्ते हि तदा जीवाः कालकर्मादिकं तथा । क्वान्यथा हि पुनः सृष्टिः पूर्व-कर्मानुसारिणी'ति ब्रह्मतर्के । त्वमेतच्च परं न भवेत् । स्वतन्त्रं न ॥ ॥ ३३ ॥ [34]अर्थवदिव प्रतीयते । न च परमात्मन्यर्थवत्प्रतीयते । अर्थं प्रयोजनमृते । न हि जीवप्रकृतिभ्यामीश्वरस्यार्थः । 'मुख्यतो विष्णुशक्तिर्हि मायाशब्देन भण्यते । उपचारतस्तु प्रकृतिर्जीवश्चैव हि भण्यत'इति च । यथाऽऽभासो जीवः । 'सर्वं परे स्थितमपि नैव तत्रेति भण्यते । यतो हरेर्न जी न जीवनं न हरौ ततः । जीवः प्रकृतिरप्यत्र यतो नैव हि बन्धकृत् । कर्म चाफलदातृत्वात्कालश्चा-परिणामनात् । यथा छत्रधराद्यास्तु रथस्था अपि सर्वशः । रथिनो नैव भण्यन्ते एवं हरिगता अपि ॥ ३४ ॥ '[35]यथा महान्ति भूतानि शरीरेषु बहिस्तथा । एवं हरिश्च भूतेषु बहिश्च व्याप्तिहेतुतः । तस्मा-

---

तपसा पुनः । बिभर्मि तपसा विश्वं वीर्यं मे दुस्तरं तपः ॥ २४ ॥ श्री भगवानुवाच—ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम् । सरहस्यं तदङ्गं च गृहाण गदितं मया ॥ ३१ ॥ अहमेवासमेवाग्रे नान्यद्यत्सद-सत्परम् । पश्चादहं त्वमेतच्च योऽवशिष्येत सोऽस्म्यहम् ॥३३॥ ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि । तद्विद्यादात्मनो मायां यथाऽऽभासो यथा तमः ॥३४॥ यथा महान्ति भूतानि भूतेषूच्चावचेषु च । प्रविष्टान्य-



त्तत्स्थो न तत्स्थश्च प्रोच्यते हरिरीश्वर'इति च ॥३५॥ [36]अन्यभावा-भावकाले देशे च तद्विद्यमानाविद्यमानशक्तिर्मांश्चेत्यन्वयव्यतिरेकौ ॥ ॥ ३६ ॥ '[39]सर्वस्यापि प्रधानत्वात्स सर्वमय ईर्यत'इति च ॥ ३९ ॥ [42]मायां माहात्म्यं विविदिषुः । अन्येषां माहात्म्यपतेः । 'मुख्यतो विष्णुमाहात्म्यं मायाशब्दोदितं भवेत् । प्रधानत्वाच्च मातृत्वान्मेयत्वं नैव तस्य ही'ति च ॥ ४२ ॥ '[45]हरिर्व्यासादिरूपेण सर्वज्ञोऽपि स्वयं प्रभुः । श्रृणोति नारदादिभ्यो मोहायैषां प्रसिद्धय'इति पाद्मे ॥४५॥ '[46]विराड्ब्रह्मा समुद्दिष्टस्तद्गतः परमो यतः । अतो वैराजमित्येन-माहुरीशत्वतो विराडि'ति बृहत्संहितायाम् ॥ ४६ ॥ इति द्वितीय-तात्पर्ये नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः

'[3]महदाद्यण्डपर्यन्तः सर्गोऽण्डे ब्रह्मणस्तु यः । अनुसर्ग इति प्रोक्तः पौरुषश्चेति कथ्यते । पञ्चभूतसमूहेन जातः पुरुष उच्यते । बहुत्वात्तत्र भूतानां तावत्त्वात्तत्त्वमेकजमि'ति व्योमसंहितायाम् ॥ ३ ॥

---

प्रविष्टानि तथा तेषु न तेष्वहम् ॥३५॥ एतावदेव जिज्ञास्यं तत्वजिज्ञासु-नात्मनः । अन्वयव्यतिरेकाभ्यां यत्स्यात्सर्वत्र सर्वदा ॥ ३६ ॥ अन्त-र्हितेन्द्रियार्थाय हरये विहिताञ्जलिः । सर्वभूतमयो विश्वं ससर्जेदं स पूर्ववत् ॥ ३९ ॥ मायां विविदिषुर्विष्णोर्मायेशस्य महामुनिः । महा-भागवतो राजन् पितरं पर्यतोषयत् ॥४२॥ नारदः प्राह मुनये सरस्वत्या-स्तटे नृप । ध्यायते ब्रह्म परमं व्यासायामिततेजसे ॥४५॥ यदुताहं त्वया पृष्टो वैराजात्पुरुषादिदम् । यथाऽसीत्तदुपाख्यास्ये प्रश्नानन्यांश्च कृत्स्नशः ॥ ४६ ॥

## दशमोऽध्यायः

श्री शुक उवाच—अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः । मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः ॥ १ ॥ भूतमात्रेन्द्रियधियां जन्मसर्ग उदाहृतः । ब्रह्मणो गुणवैषम्याद्विसर्गः पौरुषः स्मृतः ॥ ३ ॥

‘[6]अनुप्रविश्य परमं जीवस्य शयनं तु यत्। सहैव शक्तिभिः स्वीयैरिच्छाद्यैरप्रकाशितैः। सन्निरोध इति प्रोक्तो विमुक्तिर्यत्र मोक्षिणामि’ति नारदीये ॥ ६ ॥ ‘[7]सृष्टिस्थित्यप्ययाभासा यद्बलाद्यत्र च स्थिताः। तद्ब्रह्म जगदाधारं वासुदेवेति तद्विदुरि’ति भागवततन्त्रे ॥७॥ [8]आधिभौतिकेन रूपेण हि चक्षुःप्रकाशयोः सम्यक्त्वपरिज्ञानम् ॥८॥ सुप्तावपि यः सर्वं वेत्ति जीवानां स परः। ‘स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीती’ति श्रुतेः। सुष्ठ्वाश्रयाणामप्याश्रयः ॥९॥ [10]विनिर्गतः प्रकाशितः। ‘अण्डं प्रविष्टो यो विष्णुः सोऽण्डं भित्त्वा प्रकाशितः ॥ [11]सोऽपोऽसृजत्ततो नारा नरो नाशात्परो यत’इति नारायणाध्यात्मे ॥ ॥ १०- ११ ॥ ‘[13]तत्तन्नियामकत्वेन बहुत्वं प्राप्तुमीश्वरः। अण्डं स्ववीर्यं तत्स्थः सन् कामादन्तस्त्रिधा व्यधादि’ति च। ‘अन्तःस्थितहरेः कामादण्डे ब्रह्मा ततोऽजनि। तत्र देवाश्च सञ्जाताः पुनस्तत्त्वात्मकाः प्रभोरि’ति च ॥१३॥ ‘[27]मलादिकं कदाचित्तु ब्रह्मा लोकाभिपत्तये। आत्मनो निर्ममे कामात्सर्वेषामभवत्ततः। वशित्वात्तस्य दिव्यत्वादिच्छया भवति प्रभोरि’ति च ॥ २७ ॥ ‘[33]स्थूलं भगवतो रूपं

---

निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः। मुक्तिर्हित्वाऽन्यथा रूपं स्वरूपेण व्यवस्थितिः ॥ ६ ॥ आभासश्च निरोधश्च यतस्तच्चयमीयते। स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते ॥ ७ ॥ आध्यात्मिकोऽयं पुरुषः सोऽसावेवाधिदैविकः। यस्तत्रोभयविच्छेदः स स्मृतो ह्याधिभौतिकः ॥ ॥ ८ ॥ एतदेकतमाभावे यदा नोपलभामहे। त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः ॥९॥ पुरुषोऽण्डं विनिर्भिद्य यदाऽसौ स विनिर्गतः। आत्मनोऽयनमन्विच्छन्नपोऽस्राक्षीच्छुचिः शुचीः ॥ १० ॥ तास्ववात्सीत्स्वसृष्टासु सहस्रपरिवत्सरान्। तेन नारायणो नाम यदापः पुरुषोद्भवाः ॥ ११ ॥ एको नानात्वमन्विच्छन् योगतल्पात्समुत्थितः। वीर्यं हिरण्मयं देवो मायया व्यसृजत्त्रिधा ॥ १३ ॥ उत्सिसृक्षोर्धातुमलं निरभिद्यत वै गुदम्। ततः पायुस्ततो मित्र उत्सर्ग उभयाश्रयः ॥ २७ ॥ एतद्भगवतो रूपं स्थूलं ते व्याहृतं मया। मह्यादिभिश्चावरणैरष्टभिर्बहि-



ब्रह्मदेह उदाहृतः। तत्तन्त्रत्वाच्च सूक्ष्मं च शङ्खचक्रगदाधरमि’ति चाध्यात्मे ॥ ३३ ॥ [34]निर्विशेषणं निरतिशयम्। ‘अस्य काव्यस्य कवयो न समर्था विशेषण’इतिवत् ॥ ३४ ॥ [35]मायासृष्टे जगति ये अविपश्चितः ॥३५ ‘[36]नामैव वाचकत्वेन नामरूपक्रिया अपि। वाच्यत्वेन हरिर्देवो नियामयति चैकराडि’ति च। ‘कर्तृत्वात्तु सकर्माऽसौ निष्फलत्वादकर्मक’ इति च ॥ ३६ ॥ [37-40]प्रजापत्यादीन्धत्ते ॥ ३७-४० ॥ ‘[41]तामसास्तामसा दैत्याः प्रधानादेव शत्रवः। तामसाराजसास्तेषामनुगास्तेषु सात्त्विकाः। अनाख्यातासुराः प्रोक्ता मानुषा दुष्टचारिणः। राजसास्तामसाश्चैव मध्या राजसराजसाः। राजसाः सात्त्विकास्तत्र मानुषेगूत्तमा गणाः। देवाः पृथगनाख्याताः स्मृताः सात्त्विकतामसाः। अतात्विकास्तथाख्याताः स्मृताः सात्त्विकराजसाः। सात्त्विकाः सात्त्विकास्तत्र सात्त्विकाः परिकीर्तिताः। तेषां च सात्त्विकाः शेषगरुत्मद्रुद्रतत्स्त्रियः। ततोऽपि देवी ब्रह्माणी ब्रह्मा चैव ततः स्वयम् ॥ ४१ ॥ [42]सात्त्विकेषु त्रिषु यदा त्वेकस्य प्रतिबाधनम्। रजस्तमोभ्यां विष्णुर्हि तदा प्रादु-

---

रावृतम् ॥ ३३ ॥ अतःपरं सूक्ष्मतममव्यक्तं निर्विशेषणम्। अनादिमध्यनिधनं नित्यं वाङ्मनसोः परम् ॥ ३४ ॥ अमुनी भगवद्रूपे मया ते ह्यनुवर्णिते। उभे अपि न गृह्णन्ति मायासृष्टेऽविपश्चितः ॥३५॥ स वाच्यवाचकतया भगवान् ब्रह्मरूपधृक्। नामरूपक्रिया धत्ते सकर्माकर्मकः परः ॥ ३६ ॥ प्रजापतीन् मनून् देवानृषीन् पितृगणान्पृथक्। सिद्धचारणगन्धर्वान् विद्याध्रान् सुरगुह्यकान् ॥ ३७ ॥ किन्नराप्सरसो नागान् सर्पान् किम्पुरुषानपि। मातृरक्षः पिशाचांश्च प्रेतभूतविनायकान् ॥३८॥ कूष्माण्डोन्मादवेतालान् यातुधानान् ग्रहानपि। खगान् मृगान् पशून् वृक्षान् गिरीन्नृप सरीसृपान् ॥ ३९ ॥ द्वि(वि)विधाश्चतुर्विधाश्चान्ये जलस्थलनभौकसः। कुशलाकुशलमिश्राणां कर्मणां गतयस्त्विमाः ॥ ४० ॥ सत्त्वं रजस्तम इति तिस्रः सुरनृनारकाः। तत्राप्येकैकशो राजन् भिद्यन्ते गतयस्त्रिधा ॥ ४१ ॥ यदैवैकतमोऽन्याभ्यां स्वभाव उपहन्यते। तदैवेदं जगद्धाता भगवान् धर्मरूपधृक्। पुष्णाति स्थापयन् विश्वं तिर्यङ् नर-

र्भवत्यजः । राजसांस्तामसान्हत्वा सात्विकान्वर्धयिष्यती'ति स्कान्दे ॥ ॥ ४२ ॥ '[43]मत्स्यादिरूपी पोषयति नृसिंहो रुद्रसंस्थितः । विलापयेद्विरिश्चस्थः सृजते विष्णुरव्यय'इति वामने ॥ ४३ ॥ [44]भगवत्तमः । ना पुरुषः ॥ ४४ ॥ [45]जन्मकर्माणि विधीयत इति क्रियाविशेषणम् । 'प्रतिषेधाय बन्धस्य जीवानां परमेशितुः । स्वेच्छयैव तु कर्तृत्वं नित्यारूढं चिदात्मकमि'ति भविष्यत्पुराणे ॥ रूप उपरिभाव इति धातुः । 'सुभद्रां रथमारोप्ये'त्यादिवच्च । 'स्वाभाविकी ज्ञानबलक्रिया चे'ति च ॥ ४५ ॥ [46]अन्यकल्पानां साधारणः । यत्रैव प्राकृतवैकृताः सर्वसर्गाः । अन्यब्रह्मकल्पानां च साधारणः ॥४६॥ इति द्वितीयस्कन्धतात्पर्ये दशमोऽध्यायः ॥ १० ॥ द्वितीयस्कन्धः संपूर्णः ॥ २ ॥

---

## तृतीयः स्कन्धः

### प्रथमोऽध्यायः

श्रीगुरुभ्यो नमः ॥ '[1-2]युद्धकाले तु विदुरस्तीर्थयात्रां गतोऽपि

---

सुरात्मभिः ॥ ४२ ॥ ततः कालाग्निरुद्रात्मा यत्सृष्टमिदमात्मनः । सन्नियच्छति तत्काले घनानीकमिवानिलः ॥४३॥ इत्थम्भावेन कथितो भगवान् भगवत्तमः । नेत्थम्भावेन हि परं द्रष्टुमर्हन्ति सूरयः ॥ ४४ ॥ न चास्य जन्मकर्माणि परस्य न विधीयते । कर्तृत्वं प्रतिषेधार्थं माययाऽरोपितं हि तत् ॥ ४५ ॥ अयं तु ब्रह्मणः कल्पः सविकल्प उदाहृतः । विधिः साधारणो यत्र सर्गाः प्राकृतवैकृताः ॥ ४६ ॥

---

## तृतीयः स्कन्धः

### प्रथमोऽध्यायः

श्री शुक उवाच—एवमेतत्पुरा पृष्टो मैत्रेयो भगवान् किल । क्षत्त्रा



सन् । प्राय आस्ते गजपुरे पाण्डवानां व्यपेक्षये'ति स्कान्दे ॥ १, २ ॥ [6-7]यदा ददाह । यदा केशाभिमर्शः प्राप्त इति यदाशब्दो हेत्वर्थः । 'यदा तदेति हेत्वर्थे कालार्थे चापि भण्यत'इत्यभिधानम् ॥ ६, ७ ॥ [20-21]सुहृद्विनष्टिं यदुकुलविनाष्टिमेष्याम् । 'विदुरस्तु प्रभासस्थः शापं सङ्क्षेपतोऽशृणोत् । यदूनां विस्तरात्पश्चादुद्धवाद्यमुनामन्वि'ति स्कान्दे । भारतविरोधाच्चान्यथा ॥ २०, २१ ॥ [23]प्रत्यङ्गमुख्यो विष्णुः । 'ब्रह्मा प्रत्यङ्गवान् विष्णुः सम्यग्लक्षणवत्तम'इति तन्त्रमालायाम् ॥ २३ ॥ '[26]पद्मो ब्रह्मा समुद्दिष्टः पद्मा श्रीरपि चोच्यत'इति ब्राह्मे । 'लोकानां सुखकर्तृत्वमपेक्ष्य कुशलं विभोः । पृच्छ्यते सततानन्दात्कथं तस्यैव पृच्छ्यत'इति पाद्मे ॥ २६ ॥ [27]वरतर्पणेन भर्तृतर्पणेन ॥ २७ ॥ '[29]आधिर्मनोवरूथं च आत्मा स्वमिति चोच्यत'इत्यभिधानम् ॥ २९ ॥

---

वनं प्रविष्टेन त्यक्त्वा स्वगृहमृद्धिमत् ॥ १ ॥ यदा त्वयं मन्त्रकृद्वो भगवानखिलेश्वरः । कौरवेन्द्रपुरं हित्वा प्रविवेशात्मसात्कृतम् ॥ २ ॥ श्री शुक उवाच—यदा तु राजा स्वसुतानसाधून् पुष्णन्नधर्मेण विनष्टदृष्टिः । भ्रातुर्यविष्ठस्य सुतान् विबन्धून् प्रवेश्य लाक्षाभवने ददाह ॥ ६ ॥ यदा सभायां कुरुदेव देव्याः केशाभिमर्शं सुतकर्म गर्ह्यम् । न वारयामास नृपः स्नुषाया अस्रैर्हरन्त्याः कुचकुङ्कुमानि ॥ ७ ॥ इत्थं व्रजन् भारतमेव वर्षं कालेन यावद्गतवान् प्रभासम् । तावच्छशास क्षितिमेकचक्रामेकातपत्रामजितेन पार्थः ॥ २० ॥ तत्राथ शुश्राव सुहृद्विनष्टिं वनं यथा वेणुजवह्निनाश्रयम् । संस्पर्धया दग्धमथानुशोचन् सरस्वतीं प्रत्यगियाय तूष्णीम् ॥ २१ ॥ अन्यानि चेह द्विजदेवदेवैः कृतानि नानायतनानि विष्णोः । प्रत्यङ्गमुख्याङ्कितमन्दिराणि यद्दर्शनात् कृष्णमनुस्मरन्ति ॥२३॥ कच्चित् पुराणौ पुरुषौ स्वनाभ्यपद्मानुवृत्त्येह कलावतीर्णौ । आसात उर्व्याः कुशलं विधाय कृतक्षणौ कुशलं शूरगेहे ॥२६॥ कच्चित् कुरूणां परमः सुहृन्नो भामः स आस्ते सुखमङ्ग शौरिः । यो वै स्वसॄणां पितृवद्ददाति वरान् वदान्यो वरतर्पणेन ॥ २७ ॥ कच्चित्सुखं सात्वत वृष्णिभोजदाशार्हकाणामधिपः स आस्ते । यमभ्यषिञ्चच्छतपत्रनेत्रो नृपासनाधि

[37]अघं व्यमुञ्चत् । पुनरपराधबुद्धिं हित्वाऽऽस्ते ॥ ३७ ॥ ‘[44]न देहयोगो हि जनिर्विष्णोर्व्यक्तिर्जनिः स्मृते’त्याग्नेये । ‘हरिः कर्ताप्यकर्तेति फलाभावेन भण्यत’इति च ॥ ४४ ॥ इति तृतीयतात्पर्ये प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः

[13]त्रिलोकस्याज्ञानं बत । ‘आनन्दरूपं दृष्ट्वाऽपि लोको भौतिकमेव तु । मन्यते विष्णुरूपं च अहो भ्रान्तिर्बहुस्थिते’ति स्कान्दे ॥ १३ ॥ ‘[19]असुरा अपि ये विष्णुं शङ्खचक्रगदाधरम् । भक्तिपूर्वमवेक्षन्ते ज्ञेया भागवता इति ॥ विद्विषन्ति तु ये विष्णुमृषिपुत्रा अपि स्फुटम् । असुरास्तेऽपि विज्ञेया गच्छन्ति च सदातमः ॥ जीवद्वयसमायोगाद्धिरण्यकमुखाः परे । भक्तिद्वेषयुताश्च स्युर्गतिस्तेषां यथा निजा । कंसपूतनिकाद्याश्च बान्धवादियुता यतः । जीवद्वयसमायोगाद्गतिद्वयजिगीषवः । सर्वथा भक्तितो मुक्तिर्द्वेषात्तम उदीरितम् । नियमस्त्वनयोर्नित्यं मोहायान्यवचो भवेदि’ति ब्राह्मे ॥ २४ ॥ इति तृतीयतात्पर्ये द्वितीयोऽध्यायः ॥ २ ॥

---

परिहृत्य दूरात् ॥ २९ ॥ किं वा कृताघेष्वघमत्यमर्षी भीमोऽहिवद्दीर्घतमं व्यमुञ्चत् । यस्याङ्घ्रिपातं रणभूर्न सेहे मार्गं गदायाश्चरतो विचित्रम् ॥ ॥३७॥ अजस्य जन्मोत्पथनाशनाय कर्माण्यकर्तुर्ग्रहणाय पुंसाम् । नत्वन्यथा कोऽर्हति देहयोगं परो गुणानामुत कर्मतन्त्रम् ॥ ४४ ॥

## द्वितीयोऽध्यायः

यद्धर्मसूनोर्बत राजसूये निरीक्ष्य दृक्स्वस्त्ययनं त्रिलोकः । कार्त्स्न्येन चात्रोपगतं विधातुरर्वाक्सृतौ कौशलमित्यमन्यत ॥ १३ ॥ मन्येऽसुरान् भागवतांस्त्र्यधीशे संरंभमार्गाभिनिविष्टचित्तान् । ये संयुगेऽचक्षत ताक्ष्यपुत्रस्यांसे सुनाभायुधमापतन्तम् ॥ २४ ॥



## तृतीयोऽध्यायः

[3]भीष्मककन्याया अर्थे सवर्णमात्रतया आहूताः । एषां श्रियो जिहीर्षयाऽऽह्वानबुद्धिर्भगवता कृता । ‘सुपर्णः सुपरानन्दात्काकुत्स्थो वाचि संस्थिते’रिति पाद्मे ॥ ३ ॥ ‘[9]उत्तमैः सर्वतः साम्यं किञ्चित्साम्यमुदीर्यत’इत्याग्नेये ॥ ९ ॥ ‘[19]केवलं भगवज्ज्ञानं साङ्ख्यमित्यभिधीयत’इत्यध्यात्मे ॥१९॥ ‘[22]सर्वदापि विरक्तः सन् भासयीत विरागिवत् । कादाचित्कः कुतस्तस्य लोकशिक्षार्थमिष्यत’इति पाद्मे ॥ तेनापि विरागः प्रदर्शितः ॥२२॥ [23]अतः कोऽन्यो विस्रम्भं कुर्यात् ॥ ॥ २३ ॥ ‘[25]एष्यच्च निश्चितं यत्तदतीतत्वेन भण्यते । चक्रवत्परिवृत्तेर्वा दुष्टानां मोहनाय वे’ति स्कान्दे ॥ २५-२८ ॥ इति तृतीयतात्पर्ये तृतीयोऽध्यायः ॥ ३ ॥

---

## तृतीयोऽध्यायः

समाहुता भीष्मककन्यया ये श्रियः सवर्णेन जिहीर्षयैषाम् । गान्धर्ववृत्त्या मिषतां स्वभागं जह्रे पदं मूर्ध्नि दधत्सुपर्णः ॥ ३ ॥ तास्वपत्यान्यजनयदात्मतुल्यानि सर्वतः । एकैकस्यां दश दश प्रकृतेर्विबुभूषया ॥९॥ भगवानपि विश्वात्मा लोकवेदपथानुगः । कामान् सिषेवे द्वार्वत्यामसक्तः साङ्ख्यमास्थितः ॥ १९ ॥ तस्येत्थं रममाणस्य संवत्सरगणान् बहून् । गृहमेधेषु योगेषु विरागः समजायत ॥२२॥ दैवाधीनेषु कामेषु दैवाधीनः स्वयं पुमान् । को विश्रम्भेत योगेन योगेश्वरमनुव्रतः ॥ २३ ॥ ततः कतिपयैर्मासैर्वृष्णिभोजान्धकादयः । ययुः प्रभासं संहृष्टा रथैर्देवविमोहिताः ॥ २५ ॥ तत्र स्नात्वा पितॄन्देवान् ऋषींश्चैव तदम्भसा । तर्पयित्वाथ विप्रेभ्यो गावो बहुगुणा ददुः ॥ २६ ॥ हिरण्यं रजतं शय्यां वासांस्यजिनकम्बलान् । हयान् रथनिभान् कन्यां धरां वृत्तिकरीमपि ॥ ॥ २७ ॥ अन्नं चोरुरसं तेभ्यो दत्वा भगवदर्पणम् । गोविप्रार्थासवः शूराः प्रणेमुर्भुवि मूर्धभिः ॥ २८ ॥

## चतुर्थोऽध्यायः

[3-4]आत्ममायायाः आत्मसामर्थ्यस्य गतिं पूर्वमेवावलोक्य । 'ज्ञात्वा कतिपयैर्वर्षैः पूर्वमेव जनार्दनः । मौसलं ज्ञानसन्तत्या उद्धवं बदरीं नयत् । स ज्ञानं तत्र विस्तीर्य पुनर्द्वारवतीं ययौ ॥ ३, ४ ॥ [5]पूर्वमेवोपदिष्टोऽपि हरिणा ज्ञानमुद्धवः । स्वर्गारोहणकाले तु पुनः पप्रच्छ केशवम् । पुनः श्रुत्वा बदर्यां तु वर्षत्रयमुवास ह । ज्ञानं संस्थाप्य पश्चाच्च स्वेच्छया स्वर्गतः प्रभुरि'ति गारुडे ॥ ५-९ ॥ [28]आकृतिं पृथिवीम् । 'शरीरमाकृतिर्देहः कुः पृथ्वी च मही तथे'त्यभिधानम् ॥ २८ ॥ 'पृथिवीलोकसन्त्यागो देहत्यागो हरेः स्मृतः । नित्यानन्दस्वरूपत्वादन्यन्नैवोपलभ्यते ॥ दर्शयेज्जनमोहाय सदृशीं

---

### चतुर्थोऽध्यायः

उद्धव उवाच—अथ ते तदनुज्ञाता भुक्त्वा पीत्वा च वारुणीम् । तया विभ्रंसितज्ञाना दुरुक्तैर्मर्म पस्पृशुः ॥ १ ॥ तेषां मैरेयदोषेण विषमीकृतचेतसाम् । निम्लोचति रवावासीद्वेणूनामिव मर्दनम् ॥ २ ॥ भगवानात्ममायाया गतिं तामवलोक्य सः । सरस्वतीमुपस्पृश्य वृक्षमूलमुपाविशत् ॥ ३ ॥ अहं चोक्तो भगवता प्रपन्नार्तिहरेण ह । बदरीं त्वं प्रयाहीति स्वकुलं सञ्जिहीर्षुणा ॥ ४ ॥ अथापि तदभिप्रेतं जानन्नहमरिन्दम । पृष्ठतोऽन्वगमं भर्तुः पादविश्लेषणाक्षमः ॥ ५ ॥ अद्राक्षमेकमासीनं विचिन्वन् दयितं पतिम् । श्रीनिकेतं सरस्वत्यां कृतकेतमकेतनम् ॥६॥ श्यामावदातं विरजं प्रशान्तारुणलोचनम् । दोर्भिश्चतुर्भिर्विदितं पीतकौशाम्बरेण च ॥ ७ ॥ वाम ऊरावधिश्रित्य दक्षिणाङ्घ्रिसरोरुहम् । अपाश्रितार्भकाश्वत्थमकृशं त्यक्तपिप्पलम् ॥ ८ ॥ तस्मिन् महाभागवतो द्वैपायनसुहृत्सखा । लोकाननुचरन् सिद्ध आससाद यदृच्छया ॥९॥ राजोवाच—निधनमुपगतेषु वृष्णिभोजेष्वधिरथयूथपयूथपेषु मुख्यः । स तु कथमवशिष्ट उद्धवो यद्धरिरपि तत्यज आकृतिं त्र्यधीशः ॥ २८ ॥ श्री शुक उवाच—ब्रह्मशापापदेशेन कालेनामोघ-



मृतकाकृतिम् । नटवद्भगवान्विष्णुः परज्ञानाकृतिः स्वयमि'ति स्कान्दे ॥ 'राजन्परस्य तनुभृज्जननाप्ययेहा मायाविडम्बनमवैहि यथा नटस्ये'ति च ॥ २९ ॥ '[31]उत्तमैरधिकत्वं वा साम्यं वा विजयोऽपि वा । उच्यतेऽपि तु नीचानां मोहार्थं वाप्युपेक्षया । मूढदृष्ट्यनुसाराद्वा किञ्चित्साम्येन वा क्वचिदि'ति ब्रह्मतर्के ॥ ३१ ॥ इति तृतीयतात्पर्ये चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः

[10]ऋते अवगमे । ऋ गताविति धातोः । तेषां तात्पर्यावगमे कृष्णकथामृतौघ एवासौ यतः ॥ १० ॥ [12]यस्मिन् भारते हरेः कथायां ग्राम्यसुखानुवादैर्मतिर्न गृहीता । 'भारतान्नाधिकं विष्णोर्महिमावाचकं क्वचित् । भारतान्न विरागाय भारतान्न विमुक्तय'इति पाद्मे ॥ १२ ॥ [13]सा ग्राम्यसुखानुवादैर्न गृहीता हरेः कथायां विवर्धमाना मतिः ॥१३॥ इति तृतीयतात्पर्ये पञ्चमोऽध्यायः ॥ ५ ॥

---

वाञ्छितः । संहृत्य स्वकुलं नूनं त्यक्ष्यन् देहमचिन्तयत् ॥ २९ ॥ नोद्धवोऽण्वपि मन्न्यूनो यद्गुणैर्निर्जितः प्रभुः । अतो मद्वयुनं लोकं ग्राहयन्निह तिष्ठतु ॥ ३१ ॥

### पञ्चमोऽध्यायः

परावरेषां भगवन् व्रतानि श्रुतानि मे व्यासमुखादभीक्ष्णम् । न तृप्नुमः कर्णसुखावहानां तेषामृते कृष्णकथामृतौघात् ॥१०॥ मुनिर्विवक्षुर्भगवद्गुणानां सखापि ते भारतमाह कृष्णः । यस्मिन्नृणां ग्राम्यसुखानुवादैर्मतिर्गृहीता नु हरेः कथायाम् ॥ १२ ॥ सा श्रद्दधानस्य विवर्धमाना विरक्तिमन्यत्र करोति पुंसः । हरेः सदानुस्मृतिनिर्वृतस्य समस्तदुःखात्ययमाशु धत्ते ॥ १३ ॥

## षष्ठोऽध्यायः

[1]आत्मनां विभुर्जीवाधिपतिः ॥ १ ॥ ‘[2]परमात्मा यतो जीवं मेनेऽसन्तमशक्तितः । असन्नसावतो नित्यं सत्यज्ञानो यतो हरि’-रित्याग्नेये ॥ ‘शक्यत्वाच्छक्तयो भार्याः शक्तिः सामर्थ्यमुच्यत’इति ब्रह्मतर्के ॥ ‘सुप्तिस्तु प्रकृतेः प्रोक्ता अतीव भगवद्रतिः । अनास्थाऽन्यत्र च प्रोक्ता विष्णोश्चक्षुर्निमीलनमि’ति व्योमसंहितायाम् ॥ २ ॥ [6]अंशो जीवः । ‘कालजीवगुणादीनामभिमानी चतुर्मुखः । सर्वजीवाभिमानि-त्वादंश इत्येव चोच्यत’इति ब्राह्मे ॥ ६ ॥ [11-14]कालमायांशयोगतः । कालात्परिणामात् । प्रकृतेर्हिरण्यगर्भाच्च ॥ ११-१४ ॥ [16]कालमायांश-लिङ्गिनः । तन्निमित्तशरीराः । हिरण्यगर्भस्यैव कालाभिमानी जीवाभि-मानीति द्विविधं रूपम् । ‘कालजीवाभिमानेन रूपद्वन्द्वी चतुर्मुख’इति पाद्मे ॥१६॥ [18]ब्रह्मविद्या हरेश्छाया तदंशो हि सुरेष्वपि । सर्वविद्याः

---

### षष्ठोऽध्यायः

मैत्रेय उवाच—भगवानेक आसेदमग्र आत्माऽऽत्मनां विभुः । आत्मेच्छानुगतो ह्यात्मा नानाशक्त्युपलक्षितः ॥ १ ॥ स वा एष तदा द्रष्टा नापश्यद्विश्वमेकराट् । मेनेऽसन्तमिवात्मानं सुप्तशक्तिरसुप्तदृक् ॥ ॥ २ ॥ सोऽप्यंशगुणकालात्मा भगद्दृष्टिगोचरः । आत्मानं व्यकरोदात्मा विश्वस्यास्य सिसृक्षया ॥ ६ ॥ कालमायांशयोगेन भगवद्वीक्षितं नभः । तामसानुसृतं स्पर्शं विकुर्वन्निर्ममेऽनिलम् ॥११॥ अनिलोऽपि विकुर्वाणो नभसोरुबलान्वितः । ससर्ज रूपतन्मात्रां ज्योतिर्लोकस्य लोचनम् ॥१२॥ अनिलेनान्वितं ज्योतिर्विकुर्वत् परवीक्षितम् । आधत्ताम्भो रसमयं काल-मायांशयोगतः ॥१३॥ ज्योतिषाम्भोऽनु संसृष्टं विकुर्वत् परवीक्षितम् । महीं गन्धगुणामाधात् कालमायांशयोगतः ॥ १४ ॥ एते देवाः कला विष्णोः कालमायांशलिङ्गिनः । नानात्वात् स्वक्रियानीशाः प्रोचुः प्राञ्जलयो विभुम् ॥ १६ ॥ ऋते यदस्मिन् भव ईश जीवस्तापत्रयेणाभि-



श्रियः प्रोक्ताः प्रधानांशश्चतुर्मुख’इति ब्राह्मे ॥ १८ ॥ [19]द्युसरितो धरायाश्च ॥ १९ ॥ ‘[25]वायोश्च प्रकृतेर्विष्णोर्जयो भक्त्यैव नान्यथे’ति दत्तात्रेययोगे ॥ २५ ॥ [26]त्रिभिरात्मभिः कालमायांशैः ॥ २६ ॥ [29]सत्प्रमुखा महदादयः ॥ २९ ॥ इति तृतीयतात्पर्ये षष्ठोऽध्यायः ॥ ॥ ६ ॥

## सप्तमोऽध्यायः

‘[2]शक्तत्वाच्छक्तयो विष्णोर्महदाद्या रमा तथा । स्वरूपशक्तिः शक्तित्वान्मुख्यशक्तिर्हि सा यत’इति ब्रह्मतर्के ॥ समेत्यासतीनां असमेतानां प्रसुप्तलोकतन्त्राणां अनाविर्भूतलोकसृष्टिशक्तीनाम् । ‘तनुते येन कार्यं यत्तन्त्रं साधनमुच्यते । कारणानां स्वशक्तिर्वा प्रधानं साधनं यत’इति ब्रह्मतर्के ॥ १ ॥ ‘[2]शब्दाद्या नभ आद्याश्च मनोयुक्तेन्द्रियाणि च । अहङ्कारो महांश्चैव त्रयोविंशतिको गणः ॥ देवतेन्द्रिययो-रैक्यान्न पृथग्गणनं तयोः । प्रकृतिस्तु चतुर्विंशा पञ्चविंशो हरिः स्वयम् ॥ यदा जडांशस्वीकारो जीवस्तत्पञ्चविंशकः । षड्विंशको

---

हता न शर्म । आत्मन् लभन्ते भगवंस्तवाङ्घ्रिच्छायांशविद्यामत आश्र-येम ॥ १८ ॥ मार्गन्ति यत्ते मुखपद्मनीडैश्छन्दः सुपर्णैर्ऋषयो विविक्ते । यस्याघमर्षो द्युसरिद्धरायाः परं पदं तीर्थपदः प्रपन्नाः ॥ १९ ॥ तथाऽपरे चात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम् । त्वामेव धीराः पुरुषं विशन्ति तेषां श्रमः स्यान्न तु सेवया ते ॥ २५ ॥ तत्ते वयं लोकसिसृक्ष-याऽद्य त्वया विसृष्टास्त्रिभिरात्मभिर्यैः । सर्वे वियुक्ताः स्वविहारतन्त्रं न शक्नुमस्तत्प्रतिकर्तवे ते ॥२६॥ ततो वयं सत्प्रमुखा यदर्थे बभूविमात्मन् करवाम किं ते । त्वं नः स चक्षुः परिदेहि शक्त्या देव क्रियार्थे यदनुग्रहेण ॥ २९ ॥

### सप्तमोऽध्यायः

ऋषिरुवाच—इति तासां स्वशक्तीनामसतीनां समेत्य सः । प्रसुप्त लोकतन्त्राणां निशम्य गिरमीश्वरः ॥ १ ॥ कालसंज्ञां यदा देवीं बिभ्र-

महाविष्णुः श्रिया वा सप्तविंशक'इति तत्त्वनिर्णये ॥ 'त्रयोविंशति तत्त्वानि प्राविशद्रमया सह । कालाख्यया स्वयं विष्णुः शक्यत्वाच्छक्तिरूपया ॥ २ ॥ [3]सर्वचेष्टकरूपेण स्वसामर्थ्येन केशवः । तानि भिन्नानि तत्त्वानि योजयामास चांशत'इति च ॥ ३ ॥ [4]मात्राभिरंशैः 'ईश्वरो दैवमुद्दिष्टं सर्वस्यापि प्रभुत्वत'इति च ॥ ४ ॥ [7]आत्मशक्तिः प्रकृतिः ॥ ७ ॥ [8]पुरुषेणात्मभूतेनेति योऽण्डमसृजत्स एष इत्युक्तः । 'आद्योऽवतारो विष्णोस्तु पुरुषो नाम कीर्तितः । असृजत्स महत्तत्त्वं स एवाण्डं समाविशत् ॥ ८ ॥ [9]स ब्रह्मणो हृदिस्थत्वाद्धृदयं चेति कीर्त्यत'इति च । 'प्राणादिपञ्चकं चैव तथा नागादिपञ्चकम् । सनागकूर्मकृकलदेवदत्तधनञ्जयाः । एवं तु दशधा प्राण अध्यात्मादित्रिधाखिला' इति च व्योमसंहितायाम् ॥ 'प्राणः प्रथमजो यस्तु प्रधानो वायुरीरितः । त्वगात्माद्यास्तु तत्पुत्रा द्विधाभूतमुदाहृतमि'ति तत्त्वनिर्णये ॥ ९ ॥ '[26]अहं सत्वमि'ति द्वेधा ब्रह्मनाड्या अवान्तरम् । कर्तृनामा ह्यहङ्कारस्त्वहंनाड्यां व्यवस्थितः । तत्त्वनाड्यास्तथा चित्तमभिमानो हरस्तथा । अहंनाड्यां सत्वनाड्यां ब्रह्मा चैव व्यवस्थितः ॥ ॥२६॥ '[24]आत्मनाड्यां तथा बुद्धिस्तत्रस्थश्च बृहस्पति'रिति च ॥२४॥

---

च्छक्तिमुरुक्रमः । त्रयोविंशतितत्वानां गणं युगपदाविशत् ॥ २ ॥ सोऽनुप्रविष्टो भगवान् चेष्टारूपेण तं गणम् । भिन्नं संयोजयामास सुप्तं कर्म प्रबोधयन् ॥३॥ प्रबुद्धकर्मा दैवेन त्रयोविंशतिको गणः । प्रेरितोऽजनयत्स्वाभिर्मात्राभिरपि पूरुषम् ॥४॥ स वै विश्वसृजां गर्भो दैवकर्मात्मशक्तिमान् । विबभाजात्मनात्मानमेकधा दशधा त्रिधा ॥७॥ एष ह्यशेषसत्वानामात्मांशः परमात्मनः । आद्योवतारो यत्रासौ भूतग्रामो विभाव्यते ॥८॥ साध्यात्मं साधिदैवं च साधिभूतमिति त्रिधा । विराट् प्राणो दशविध एकधा हृदयेन च ॥९॥ आत्मानं चास्य निर्भिन्नं वाचस्पतिरुपाविशत् । बुद्ध्या स्वांशेन येनासौ निश्चयं प्रतिपद्यते ॥२४॥ अहं चास्य विनिर्भिन्नमभिमानोऽविशत्पदम् । कर्त्रा स्वांशेन येनासौ कर्तव्यं प्रतिपद्यते ॥२५॥ सत्वं चास्य विनिर्भिन्नं महान् धिष्ण्यमुपाविशत् । चित्ते-



'[30]ब्रह्माभिमानी तु भृगुरजनि ब्रह्मणो मुखात् ॥३०॥ [31]क्षत्राभिमानी तु मनुर्ब्रह्मबाह्वोरजायत ॥३१॥ [32]ऊर्वोर्विडभिमानी च वास्तुः ॥३२॥ [33]पादात्कृतिस्थता । एते पूर्वं हरेर्जाता ब्रह्मणस्तदनन्तरम् । एवं रुद्राच्च वायोश्च तदन्तस्थहरेर्यत'इति पाद्मण्ये ॥ ३३ ॥ '[35]अधिकत्वाद्देवशब्दो दैवतेष्वधिको यतः । दैवं हरिः कर्ममूलं कृतिरित्येव भण्यते । व्याप्तत्वादात्मशब्दश्च श्रीपतित्वाच्च माधव'इति च ॥ ३५ ॥ '[39-40]आत्मा ब्रह्मा न वेद । अहं रुद्रः । 'गुणपूर्तेरात्मशब्दो ब्रह्मा हीनत्वतो हरः । अहं शब्दस्तथाप्येतौ न जानीतो हरिं परमि'ति ब्राह्मे । भगवतो मायां भगवतो महिमानम् । 'माया तु महिमा प्रोक्ता प्राचुर्ये तु मयड्यत'इति पाद्मे । आत्मवर्त्मा परमात्मगतिः ॥ ३९, ४० ॥ इति तृतीयतात्पर्ये सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः

[3]क्रीडाया मुत् । अर्हस्यापूर्णसुखस्य । अन्यतः अरतेः ॥ ३ ॥

---

नांशेन येनासौ विज्ञानं प्रतिपद्यते ॥ २६ ॥ मुखतोऽवर्तत ब्रह्म पुरुषस्य कुरूद्वह । यत्रोन्मुखत्वाद्वर्णानां मुख्योऽभूद्ब्राह्मणो गुरुः ॥३०॥ बाहुभ्योऽवर्तत क्षत्रं क्षत्रियस्तदनुव्रतः । यो जातस्त्रायते वर्णान् पौरुषात्कण्टकक्षतात् ॥ ३१ ॥ विशोऽवर्तन्त तस्योर्वोर्लोकवृत्तिकरीर्विभोः । वैश्यस्तदुद्भवो वार्तां नृणां यस्समवर्तयत् ॥ ३२ ॥ पद्भ्यां भगवतो जज्ञे शुश्रूषाकर्मसिद्धये । तस्यां जातः पुरा शूद्रो यद्वृत्त्या तुष्यते हरिः ॥३३॥ एतत् क्षत्तर्भगवतो दैवकर्मात्मरूपिणः । कः श्रद्दध्यादुदाहर्तुं योगमायाबलोदयम् ॥ ३५ ॥ अतो भगवतो माया मायिनामपि मोहिनी । यत्स्वयं चात्मवर्त्माऽऽत्मा न वेद किमुतापरे ॥ ३९ ॥ यतोऽप्राप्य निवर्तन्ते वाचश्च मनसा सह । अहं चान्य इमे देवास्तस्मै भगवते नमः ॥ ४० ॥

## अष्टमोऽध्यायः

क्रीडायामुद्यतोऽर्हस्य कामं चिक्रीडिषान्यतः । स्वतस्तृप्तस्य तु कथं

[6]दुर्भगक्लेशशरीरस्थत्वात्तस्यापि भाव्यम् । न च तद्युज्यते ॥ ६ ॥ [9]सेयं भगवतो माया । अयं हि भगवन्महिमा । तस्य कार्पण्यं बन्धनादि न युज्यत इति यदुक्तं तन्न्याय्यमेव । दुर्भगादिशरीरस्थस्यापि तद्दोषास्पर्श एव तन्महिमेत्यर्थः । 'कथं देहपरो देवो न लिप्येत हि बन्धनैः । कथं न दुःखी स भवेद्दुःखी चेदीश्वरः कुतः । महिमा परमस्यैष यद्देहस्थो न बाध्यते । यददुःखी स ईशानो मायेति महिमोच्यते । प्रधानं मय इत्याहुः प्राधान्यान्मयता भवेत् । अतो मायामयं प्राहुर्महामायमनामयमि'ति भाल्लवेयश्रुतिः ॥ 'अलुप्तबोधरूपत्वान्नासौ प्राकृतदेहवान् । न च सृष्ट्यादिकं भ्रान्तिर्भ्रान्तिवादा हि दानवाः । अतो भ्रान्त्यादिसम्बन्धो नास्य क्वचन युज्यते ॥ ९ ॥ '[10-12]भ्रान्त्या जीवस्य संसार ईशज्ञानाद्विलीयते । भ्रान्तिर्देहाद्यभिमतिरीशज्ञानाद्विनश्यती'ति ब्रह्माण्डे ॥ १०-१२ ॥ [13]इन्द्रियोपरामाख्यः पुरुषार्थो मुक्तिः ॥१३॥ [15-18]स्वरूपसामर्थ्याश्रयम् । यद्व्याहृतम् । अपार्थं निर्मूलं च देहसम्बन्धित्वाद्याभाति । विश्वमूलं ब्रह्म च यन्ममज्ञानाद्बहिर्न भवति । तस्मादुभयत्र धावति । तस्मादन्तरितोऽस्मि । तथापि तां प्रतीतिं

---

निर्वृतस्य सदात्मनः ॥ ३ ॥ देशतः कालतो योऽसाववस्थातः स्वतोऽन्यतः । अविलुप्तावबोधात्मा संयुज्येताजया कथम् ॥ ५ ॥ भगवानेष एवैकः सर्वक्षेत्रेष्ववस्थितः । अमुष्य दुर्भगत्वं वा क्लेशो वा कर्मभिः कुतः ॥ ६ ॥ सेयं भगवतो माया न्याय्यं येन विरुध्यते । ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनम् ॥९॥ यथार्थेन विनाऽमुष्य पुंस आत्मविपर्ययः । प्रतीयत उपद्रष्टुः स्वशरीरश्छेदनादिकः ॥ १० ॥ यथा जले चन्द्रमसः कम्पादिस्तत्कृतो गुणः । दृश्यते सन्नपि द्रष्टुरात्मनोऽनात्मनो गुणः ॥११॥ स वै निवृत्तिधर्मेण वासुदेवानुकम्पया । भगवद्भक्तियोगेन तिरोधत्ते शनैरिह ॥ १२ ॥ यदेन्द्रियोपरामार्थो द्रष्टात्मनि परे हरौ । विलीयन्ते तदा क्लेशाः संसुप्तस्येव कृत्स्नशः ॥ १३ ॥ विदुर उवाच— सञ्छिन्नः संशयो मह्यं तव सूक्तासिना विभो । उभयत्रापि भगवन् मनो मे सम्प्रधावति ॥ १५ ॥ साधु तद्व्याहृतं विद्वन्नात्ममायायनं हरेः ।



पराणुदे । 'आत्मनस्तु गुणाभावं वदतो नत्वसत्यता । अपृष्टस्य दमार्थं च गुणायैव भवत्यपी'ति व्यासस्मृतेः । विद्यमानमप्यनुभवमन्यथा वदति विदुरः । 'द्रोणद्रौणिकृपाः पार्था भीष्मो विदुरसञ्जयौ । ये चान्ये तत्र देवांशाः सम्यक्तत्त्वापरोक्षिण'इति स्कान्दे ॥ १५-१८ ॥ [21-24]विराजं ब्रह्माणम् । 'ब्रह्माणं प्राविशद्विष्णुः सहस्राक्षः सहस्रपादि'ति ब्राह्मे ॥ 'अनुप्रविश्य ब्रह्माणं प्राणं दशविधं तथा । इन्द्रियाणीन्द्रियार्थांश्च वर्णांश्चैवासृजद्धरिरि'ति गारुडे ॥ २१-२४ ॥ [29]विकर्षणं विभागः ॥ २९ ॥ इति तृतीयतात्पर्ये अष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः

'[4]आधार आश्रयो धिष्ण्यं निधानं चाभिधीयत'इत्यभिधानम् ॥ ॥ ४ ॥ '[13]उदकं वायुना शुष्कं भिन्नं पद्ममभूद्धरेरि'ति पाद्मे ॥१३॥ [14]आत्मा विष्णुरस्य योनिः ॥ १४ ॥ '[15]पद्मसंस्थाद्धरेस्तत्र ब्रह्माऽजनि

---

आभात्यपार्थं निर्मूलं विश्वमूलं न यद्बहिः ॥ १६ ॥ यश्च मूढतमो लोके यश्च बुद्धेः परं गतः । तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः ॥ १७ ॥ अर्थाभावं विनिश्चित्य प्रतीतस्याप्यनात्मनः । तां चापि युष्मच्चरणसेवयाऽहं पराणुदे ॥१८॥ सृष्ट्वाग्रे महदादीनि सविकाराण्यनुक्रमात् । तेभ्यो विराजमुद्धृत्य तमनुप्राविशद्विभुः ॥२१॥ वर्णाश्रमविभागांश्च रूपशीलस्वभावतः । ऋषीणां जन्म कर्माणि वेदस्य च विकर्षणम् । यज्ञस्य च वितानानि योगस्य च पथः प्रभो ॥ २९ ॥

नवमोऽध्यायः

स्वमेव धिष्ण्यं बहुमानयन्तं यं वासुदेवाभिधमामनन्ति । प्रत्यग्भूताक्षाम्बुजकोशमीषदुन्मीलयन्तं विबुधोदयाय ॥ ४ ॥ तस्यात्मसूक्ष्माभिनिविष्टदृष्टेरन्तर्गतोऽर्थो रजसा तनीयान् । गुणेन कालानुगतेन विद्धः सूष्यंस्तदाभिद्यत नाभिदेशात् ॥१३॥ स पद्मकोशः सहसोदतिष्ठत्कालेन कर्मप्रतिबोधितेन । स्वरोचिषा तत्सलिलं विशालं विद्योतयन्नर्क इवात्मयोनिः ॥१४॥ तल्लोकपद्मं स उ एव विष्णुः प्रावीविशत्सर्वगुणावभासम् ।

चतुर्मुख'इति च। सर्वगुणावभासं पृथिव्यात्मकम्। पृथिव्यां
सर्वे शब्दादयो गुणा अवभासन्ते। 'तस्यासनविधानार्थं पृथिवी पद्म
मुच्यत'इति मोक्षधर्मे। 'प्रधानवाचकस्त्वेकश्चानन्यः केवलः स्वयमि'
ब्राह्मे ॥ १५ ॥ [18]सता ब्रह्मणा। 'स ब्रह्माऽचिन्तयत् कुतो नु प
ब्रह्मणः स्यादिती'ति मैत्रायणश्रुतिः ॥ १८ ॥ [26]भिन्नमन्येभ्यं
विलक्षणम् ॥ २६ ॥ '[29]तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तमे'
मोक्षधर्मे ॥ २९ ॥ [31]सूर्येन्दुवाय्वग्न्यादिभिस्त्रिधाम्नो विष्णोरगच्छद्भि
प्राधानिकैः। 'मुक्तवाय्वादिभिर्विष्णुं वृतं ब्रह्मा ददर्श ह। तदन्या
भावतो नान्यदतस्तत्स्त्रष्टुमैच्छते'ति ब्रह्माण्डे ॥ ३१ ॥ इति तृतीय
तात्पर्ये नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः

[1]स्वतो नास्ति तदधीनविद्यमानमप्यशुद्धम्। यच्च स्वनानात
तदपि स्थानभेदादसदेव भाति। 'एकोऽपि स्थाननानात्वान्नाने

---

तस्मिन् स्वयं वेदमयो विधाता स्वयम्भुवं यं स्म वदन्ति सोऽभूत् ॥ १५
तस्यां स चाम्भोरुहकर्णिकायामवस्थितो लोकमपश्यमानः। परिक्रमन्
व्योम्नि विवृत्तनेत्रश्चत्वारि लेभेऽनुदिशं मुखानि ॥ १६ ॥ क ए
योसावहमब्ज पृष्ठ एतत्कुतो वाऽब्जमनन्यदप्सु। अस्तिह्यधस्तादि
किञ्चनैतदधिष्ठितं यत्र सतानुभाव्यम् ॥ १८ ॥ पुंसां स्वकामाय विविक्त
मार्गैरभ्यर्चतां कामदुधाङ्घ्रिपद्मम्। प्रदर्शयन्तं कृपया नखेन्दुमयूख
भिन्नाङ्गुलिचारुपत्रम् ॥ २६ ॥ परार्ध्य केयूर मणिप्रवेकपर्यस्तदोर्दण्ड
सहस्रशाखम्। अव्यक्तमूलं भुवनाङ्घ्रिपेन्द्र महीन्द्रभोगैरधिवीतवल्कम्
॥ २९ ॥ निवीतमाम्नायमधुव्रतश्रयस्वकीर्तिमय्या वनमालया हरिम्
सूर्येन्दुवाय्वाग्न्यगमत्रिधामभिः परिक्रमत्प्राधनिकैर्दुरासदम् ॥ ३१ ॥

दशमोऽध्यायः

ब्रह्मोवाच—ज्ञातोऽसि मेऽद्य सुचिरान्ननु देहभाजां न ज्ञायते



हरिरीयते। सर्वान्तर्यामिणस्तस्य न भेदो विद्यते क्वचिदि'ति ब्रह्म-
वैवर्ते ॥ १ ॥ [2-]यन्नाभिपद्मभवनादहमाविरासम्। यच्चेदं भगव-
स्वरूपमानन्दमात्रं पश्यामि। यच्चाश्रितोऽस्मि अतः परं नास्ति।
तो न ज्ञायत इति अवद्यमत्युत्तमापेक्षया। अनादि गृहीतमेव नेदानीं
गृह्यते। 'यत्तद्दिव्यं हरेरूपं क्षीरसागरमध्यगम्। ज्ञानानन्दैकमात्रं
च न ततः परमं क्वचित्। अनादिनित्यादव्यक्तात्तस्माज्जज्ञे चतुर्मुख'-
इत्यध्यात्मे। भूतेन्द्रियाणामात्मकम्। यच्चाप्नोतीत्यादेः ॥ २, ३ ॥
[5]हृदि व्यक्तं तु यद्रूपं हरेर्गन्धः स उच्यते। उत्तमानां तु पादेन
सर्वं रूपं तु भण्यते। गन्धगन्धवतोर्यस्मान्न भेदः क्वचनेष्यत'इति
ब्रह्मतर्के ॥ ५ ॥ [9]मायाबलं भगवदिच्छाबलम्। 'ज्ञेयत्वं दुर्घटस्यापि
घटनाधिकशक्तिता। अभेद ईश्वरेणापि सृष्ट्यादावन्तरङ्गता। उच्येत
यस्याः सा माया हरेरिच्छाऽथवा बलम्। भगवत्तन्त्रता यस्यास्तद्धार्यत्वं
गुरूपता। उच्येत माया सा तु श्रीर्दोषयुक्ता जडा स्मृता। परिणामिनी
च यस्यास्तु दोषाश्चेतनता तथा। शैवली नाम सा माया जगद्बन्धा-
त्मिका सदे'ति ब्रह्मतर्के। 'ध्याये मंस्ये तथा पश्ये शृणोमीति
विभक्तता। जीवस्य तु हरेरिच्छाबलादिन्द्रियभुक्तय' इति पाङ्गुण्ये।
इन्द्रियाणां भोगार्थम्। व्यर्थापि यज्ञादिक्रियार्था ॥ ९ ॥ [10]अर्थे-

---

भगवतो गतिरित्यवद्यम्। नान्यत्त्वदस्ति भगवन्नपि तन्न शुद्धं माया-
गुणव्यतिकराद्यदुरुर्विभासि ॥ १ ॥ रूपं यदेतदवबोधरसोदयेन शश्व-
न्निवृत्ततमसः सदनुग्रहाय। आदौ गृहीतमवतारशतैकबीजं यन्नाभि-
पद्मभवनादहमाविरासम् ॥ २ ॥ नातः परं परम यद्भवतः स्वरूपमानन्द-
मात्रमविकारमविद्धवर्चः। पश्यामि विश्वसृजमेकमविश्वमाद्यं भूतेन्द्रि-
यात्मकमदस्त उपाश्रितोऽस्मि ॥ ३ ॥ ये तु त्वदीयचरणाम्बुजकोशगन्धं
जिघ्रन्ति कर्णविवरैः श्रुतिवातनीतम्। भक्त्या गृहीतचरणः परया च
तेषां नापैषि नाथ हृदयाम्बुरुहात्स्वपुंसाम् ॥५॥ यावत्पृथक्त्वमयमात्मन
इन्द्रियार्थं मायाबलं भगवतो जन ईश पश्येत्। तावन्न संसृतिरसौ
प्रतिसङ्क्रमेत व्यर्थापि दुःखनिवहं वहती क्रियार्था ॥ ९ ॥ अध्याहृतार्थ-

रध्याहृतानि करणानि येषाम् । 'अज्ञानं तु निशा प्रोक्ता दिवा ज्ञान
मुदीर्यत'इति स्कान्दे ॥ १० ॥ [11]तत्तद्वपुस्तेषां प्रणयसे । 'यादृशं
भावितस्त्वीशस्तादृशो जीव आभवेदि'ति तन्त्रसारे। 'तं यथा यथोपासते
तदेव भवती'ति च ॥ ११ ॥ [12]सर्वभूतदयया सुरगणैर्हृद्याराधितस्त्व
बद्धकामैर्जनैरुपचितोपचारैर्नातिप्रसीदसि । 'आराधितो यो ब्रह्माद्यै
र्भक्तिज्ञानदयादिभिः । किं तस्य कामुकजनैः कृतया परिचर्ययेति
सत्यसंहितायाम् ॥ १२ ॥ '[14]ईशस्यापूर्णताज्ञानं विष्णोरन्यस्य चेशता
भेदस्तस्यावतारेषु जीवस्येशत्वमेव च । तथा जीवत्वमीशस्य जडाभेद
स्तयोरपि । भेदमोह इति प्रोक्तः स सदा न हरौ क्वचित् । अन्येपा
तत्प्रसादेन शनैर्याति सतामपी'ति स्कान्दे ॥ १४ ॥ [15]भक्तिविवशाः
'ये भक्त्या विवशा विष्णोर्नाममात्रैकजल्पकाः । तेऽपि मुक्तिं व्रजन्त्याशु
किमु तद्ध्यायिनः सदे'ति व्योमसंहितायाम् ॥ १५ ॥ '[16]ब्रह्मादिभावो
विष्णोस्तु तन्नियामकता भवेत् । मत्स्यादिता तत्स्वभावो नान्यथा
क्वचिदिष्यत'इति वामने । 'अनन्तासनवैकुण्ठक्षीराब्धिस्थो हरि
स्त्रिपादि'ति च ॥ १६ ॥ '[17]नित्यज्ञानदृशा नित्यं लवकालमपीश्वरः ।

---

करणा निशि निःशयाना नानामनोरथधियः क्षणभङ्गनिद्राः । दैवाहतार्थ
रचना ऋषयोऽपि देव युष्मत्प्रसङ्गविमुखा इह संसरन्ति ॥१०॥ त्वद्भाव-
योग परिभावितहृत्सरोजा ये सच्छ्रुतेक्षितपथा ननु नाथ पुंसाम् ।
यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे तदनुग्रहाय ॥११॥
नातिप्रसीदसि तथोपचितोपचारैराराधितः सुरगणैर्हृदिबद्धकामैः । यं
सर्वभूतदययाऽसदलभ्ययैको नानाजनेष्ववहितः सुहृदन्तरात्मा ॥ १२ ॥
शश्वत्स्वरूपमहसैव निपीतभेदमोहाय बोधधिषणाय नमः परस्मै ।
विश्वोदयस्थितिलयेषु निमित्तलीलाऽऽरामाय ते नम इदं चकृमेश्वराय ॥
॥ १४ ॥ यस्यावतारगुणकर्मविडम्बनानि नामानि येऽसुविगमे विवशा
गृणन्ति । ते नैकजन्मशमलं सहसैव हित्वा संयान्त्यपावृतमृतं तमजं
प्रपद्ये ॥ १५ ॥ यो वा अहं च गिरिशश्च विभुः स्वयं च स्थित्युद्भवप्रलय-
हेतव आत्ममूलाः । भूत्वा त्रिपाद्ववृध एक उरुप्ररोहस्तस्मै नमो भगवते
भुवनद्रुमाय ॥ १६ ॥ लोको विकर्मनिरतः कुशले प्रमत्तः कर्मण्ययं



पश्येत्तात्कालिकं चैव तस्मादनिमिषो हरिः । कालस्यानिमिषत्वं च
लवादेर्नित्यवीक्षणादि'ति तन्त्रसारे ॥ १७ ॥ [19]अनिरस्तरतिर्नित्य-
रतिः ॥ १९ ॥ '[23]स्वसामर्थ्यात्स्वकर्माणि रमया सह केशवः । कुरुते
स्वयमेवैष कानिचित्पुरुषोत्तम'इति नारदीये ॥ २३ ॥ '[22]आत्मशब्दस्य
मुख्यार्थो विष्णुरेकः सनातनः । सन्देहदेहमनसो बुद्धिजीवाः स्वयं
तथा । ब्रह्माप्यमुख्याः क्रमश उत्कर्षो ह्यात्मता भवेदि'ति प्रकाश-
संहितायाम् ॥ २२ ॥ [29]प्रार्थनमपि मत्प्रेरणमेव ॥ २९ ॥ '[30]तप
आलोचनं प्रोक्तं विद्या निष्ठा प्रकीर्तिते'ति कपिलसंहितायाम् ॥ ३० ॥
'[31]देहेदेहे हरिस्तस्मिंल्लोकाः सर्वे प्रतिष्ठिताः । अङ्गुष्ठमात्रेऽपि परे पर-
शक्तिर्यतो विभुरि'ति च । आत्मनि स्थिते मयि ॥३१॥ [33]स्वरूपेण
मयोपेतं हृदिस्थं जीवरूपं हि परमेश्वरसहितं भवति । 'त्यक्त्वा देहा-
द्यात्मभावं जीवरूपे हृदि स्थिते । दृष्ट्वात्मभावं तं चापि हरिपादाब्ज-
संस्थितम् । यदा पश्यत्यापरोक्ष्यात्तदा मुक्तिं व्रजत्यसावि'ति दत्तात्रेय-

---

त्वदुदिते भवदर्चने स्वे । यस्तावदस्य बलवानिह जीविताशां सद्य-
श्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै ॥ १७ ॥ तिर्यङ् मनुष्यविबुधादिषु
जीवयोनिष्वात्मेच्छयाऽऽत्मकृतसेतुपरिप्सया यः । रेमेऽनिरस्तरति-
रप्युपलब्धकाष्ठस्तस्मै नमो भगवते पुरुषोत्तमाय ॥१९॥ सोऽयं समस्त-
जगतां सुहृदेक आत्मा सत्वेन यन्मृडयते भगवान् भगेन । तेनैव मे
दृशमनुस्पृशताद्यथाऽहं स्रक्ष्यामि पूर्ववदिदं प्रणतप्रियोऽसौ ॥ २२ ॥
एष प्रसन्न वरदो रमयाऽऽत्मशक्त्या यद्यत्करिष्यति गृहीतगुणावतारः ।
तस्मिन् स्वविक्रम इदं सृजतोऽपि चेतो युञ्जीत कर्मशमलं च यथा
विजह्याम् ॥ २३ ॥ श्री भगवानुवाच—मा वेदगर्भ गास्तन्द्रीं सर्ग उद्यम-
मावह । तन्मया चोदितं ह्यग्रे यन्मां प्रार्थयते भवान् ॥ २९ ॥ भूयश्च
तप आतिष्ठ विद्यां चैव मदाश्रयाम् । ताभ्यामन्तर्हृदि ब्रह्मन् लोकान्
द्रक्ष्यस्यपावृतान् ॥ ३० ॥ तत आत्मनि योगेन भक्तियुक्तः समाहितः ।
द्रष्टाऽसि मां ततं ब्रह्मन् मयि लोकांस्त्वमात्मनि ॥ ३१ ॥ यदा रहित-
मात्मानं भूतेन्द्रियगुणाशयैः । स्वरूपेण मयोपेतं पश्यन् स्वाराज्य-

योगे ॥ ३३ ॥ ‘[36]भूतेन्द्रियमनोबुद्धित्रिगुणादिषु सर्वशः । युक्तं नियामकतया पश्यञ्जानाति केशवमि’ति च ॥ ३६ ॥ ‘[39]सार्वज्ञादिगुणैर्युक्तं सत्वादिगुणवर्जितम् । यो जानाति हरिं तस्य प्रीतो भवति केशव’इति व्योमसंहितायाम् ॥ ३९ ॥ ‘[40]आधिकारिकदेवानां स्वाधिकाराधिकामनम् । भवति प्रीतये विष्णोर्भक्त्याद्यैरपि यत्सदे’ति च ॥ ॥ ४० ॥ [41]निःश्रयेसं राज्यम् । मोक्षेऽपि रञ्जनीया मत्प्रीतिरेव । ‘मुक्तस्यापि हरेः प्रीतिः सर्वतोऽप्यनुरज्यत’इति वामने ॥ ४१ ॥ ‘[42]सर्वतोऽपि प्रियो ह्यात्मा तस्यापि प्रियतां हरिः । आपादयति यत्तस्मात्स्वात्मनोऽपि प्रियो हरिरि’ति ब्रह्मवैवर्ते ॥४२॥ इति तृतीयतात्पर्ये दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः

[4]आत्मनि परमेश्वरे मन आवेश्य ॥ ४ ॥ [9]अनिमित्तस्य ब्रह्मार्पणबुद्ध्या कृतस्य । ‘अ इति ब्रह्मे’ति श्रुतेः ॥ ९ ॥ [10]लक्षणं लक्ष्यमात्मा च स्वरूपमिति कथ्यत’ इत्यभिधानम् ॥ १० ॥ [11]गुण-

---

मृच्छति ॥३३॥ ज्ञातोऽहं भवता त्वद्य दुर्विज्ञेयोऽपि देहिनाम् । यन्मां त्वं मन्यसे युक्तं भूतेन्द्रियगुणात्मभिः ॥ ३६ ॥ प्रीतोऽहमस्तु भद्रं ते लोकानां विजयेच्छया । यदस्तौषीद्गुणमयं निर्गुणं माऽनुवर्णयन् ॥३९॥ य एतेन पुमान्नित्यं स्तुत्वा स्तोत्रेण मां भजेत् । तस्याहं सम्प्रसीदेयं सर्वकामवरेश्वरः ॥४०॥ पूर्तेन तपसा यज्ञैर्दानैर्योगैः समाधिना । राज्यं निःश्रेयसं पुंसां मत्प्रीतिस्तत्वविन्मतम् ॥४१॥ अहमात्माऽऽत्मनां धातः प्रेष्ठः सन् प्रेयसामपि । अतो मयि रतिं कुर्याद्देहादिर्यत्कृते प्रियः ॥४२॥

### एकादशोऽध्यायः

मैत्रेय उवाच—विरिञ्चोऽपि तथा चक्रे दिव्यं वर्षशतं तपः । आत्मन्यात्मानमावेश्य यथाऽऽह भगवानजः ॥४॥ एतावान् जीवलोकस्य संस्थाभेदः समासतः । धर्मस्य ह्यनिमित्तस्य विपाकः परमेष्ठिनः ॥९॥ विदुर उवाच—यदात्थ बहुरूपस्य हरेरद्भुतकर्मणः । कालाख्यं लक्षणं ब्रह्मन् यथा वर्णय नः प्रभो ॥ १० ॥ मैत्रेय उवाच—गुणव्यतिकराकारो निर्विशेषोऽप्रति-



व्यतिकरमाकरोति तद्द्रष्टा । अप्रतिष्ठितोऽन्यत्र । ‘स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नी’ति श्रुतिः । तदुपादानम् । गुणव्यतिकरोपादानकर्तारम् ॥११॥ [12]सृष्ट्याद्यर्थत्वेन तस्य पुरुषस्य । ब्रह्मविष्णुमहेश्वरइति त्रीणि रूपाण्यात्मना सृष्टानि । ब्रह्म निर्मातृकम् । मायया सामर्थ्येन । तत्र यत्संहर्त्रीश्वराख्यं रूपं तत्कालाख्यम् । कल छेदन इति धातोः । ‘अथ त्रयी वाव प्रकृतिः सत्वं रजस्तम इति तां नारायणः पर्यपश्यदनन्यप्रतिष्ठः तं वा एतमाहुः पुरुष इति पूर्णो ह्येष भवति स त्रेधा बभूवैषां गुणानामुपादानाय विष्णुर्वाव सत्वस्य रजसो ब्रह्मेशो नाम तमसः स आविवेश । ब्रह्मा ब्रह्माणं नाम चतुर्मुखं ईश ईशानं नाम पञ्चमुखं यो वा ईश ईशानमाविवेश तं वा एनं काल इत्याचक्षते काल इत्याचक्षत’ इति सौकरायणश्रुतिः ॥ १२ ॥ [13]सृष्टिश्च प्रलयश्चैव संसारो मुक्तिरेव च । देवऋषिप्रभृतयो लोका भूरादयस्तथा । अनाद्यनन्तकालीनाः सर्वदैकप्रकारतः । जगत्प्रवाहः सत्योऽयं नैव मिथ्या कथञ्चन । ये त्वेतदन्यथा ब्रूयुः सर्वहन्तार एव ते । देवैर्ब्रह्मादिभिः प्रोक्ता ऋषिभिर्मानुषादिभिः । सेतिहासैस्तथा वेदैः सर्वे यान्त्यधरं तमः । सर्वब्रह्मत्ववेत्तारो जीवब्रह्मत्ववेदिनः । अन्यसाम्यविदो विष्णोर्विष्णुद्वेष्टार एव च । सर्वे यान्ति तमो घोरं न चैषामुत्थितिः क्वचिदि’ति स्कान्दे ॥ १३ ॥ ‘[14]तामसस्य पदार्थस्य सत्वं हि लयकारणम् । सात्विकस्य तमश्चैव तयोरपि रजः क्वचित् । गुणतोऽयं लयः प्रोक्तो द्रव्यतस्तु विरोधिना । कालतः कालसङ्ख्याको लयः सर्वस्य वस्तुन’-

---

ष्ठितः । पुरुषस्तदुपादानमात्मानं लीलयाऽसृजत् ॥११॥ विश्वं वै ब्रह्म तन्मात्रं संस्थितं विष्णुमायया । ईश्वरेण परिच्छिन्नं कालेनाव्यक्तमूर्तिना ॥ ॥१२॥ यथेदानीं तथा चाग्रे पश्चादप्येतदीदृशम् । सर्गो नवविधस्तस्य प्राकृतो वैकृतश्च यः ॥ १३ ॥ कालद्रव्यगुणैरस्य त्रिविधः प्रतिसङ्क्रमः । आद्यस्तु महतः सर्गो गुणवैषम्यमात्मनः ॥ १४ ॥ द्वितीय-

इति ब्रह्मतर्के । तमसो रजस्तु द्विगुणं रजसः सत्वमेव च । परिमाणत एवं स्युस्त्रयः प्रकृतिजा गुणाः । तत्र सत्वं केवलं स्याद्रजस्यपि शताधिकम् । सत्वं रजःशतांशं तु तमस्तत्र प्रकीर्तितम् । तमस्यपि तथा सत्वं तमसस्तु दशोत्तरम् । तद्दशांशेन तु रजो मूलजं यद्रजस्तु तत् । विलये दशांशतः सत्व एकांशेन तमस्यपि । मिश्रितं भवति ह्येतां साम्यावस्थां विदुर्बुधाः । यदा तु तद्रजः सर्वं तमसा सह सङ्गतम् । तदा त्वाहुर्महत्तत्त्वं तच्चतुर्भागसम्भवम् । तत्र त्रिभागो रजस एकोंऽश-स्तमसस्तथा । तदाहुर्ब्रह्मणो रूपं गुणवैषम्यनामकम् । तदेव केवलं सत्वमितरापेक्षया भवेत् । श्रीर्मूलसत्वं विज्ञेया भूर्मूलं रज उच्यते । मूलं तमस्तथा दुर्गा महालक्ष्मीस्त्रिमूलिका । गुणेभ्यो गुणमूलाच्च योऽतीतः स जनार्दनः ॥ १४ ॥ [15]यद्रजो मूलरजसि मूले तमसि यद्रजः । तमश्च मूले तमसि महत्तत्त्वं तदात्मकम् । दशांशास्तत्र सत्वं स्युरेकांशो रज एव तु । तद्दशांशं तमो ज्ञेयमहङ्कारस्तदात्मकः । स रुद्रस्तामसो ज्ञेयो विरिञ्चापेक्षयैव तु । इतरापेक्षया सत्वं सत्वाद्या-स्तद्वदस्य च । तत्तमोंऽशात्सात्विकांशो मन आद्याः प्रकीर्तिताः । रजसोंशस्त्विन्द्रियाणि तमसोंऽशश्च खादय'इत्यादि तत्त्वविवेके ॥१५॥ [15-16]भूतानि द्रव्यशक्तीनि भूतेषु द्रवणं यतः । तथा तन्मात्रशक्तीनि शब्दाद्यात्मकता यतः । क्रियाशक्तीनि वागाद्यानीन्द्रियाणीतराणि तु । ज्ञानशक्तीनि मनसा देवाश्च ज्ञानशक्तयः । एतेषां मूलभूतत्वादहङ्कार-स्त्रिशक्तिमान् । मानुषापेक्षया देवाः सात्विकाः परिकीर्तिताः । तत्रापि सात्विकाः प्रोक्तास्तात्विका यास्तु देवताः । तत्रापि सात्विको रुद्र-स्तत्रापि तु चतुर्मुखः । अविकारौ ब्रह्मरुद्रौ देहभेदादिसम्भवे । विकारवन्त इन्द्राद्यास्तस्माद्वैकारिका मताः । त एवेन्द्रियरूपेण यत-

---

स्त्वहमस्तत्र द्रव्यज्ञानक्रियादयः । भूतसर्गस्तृतीयस्तु तन्मात्रद्रव्य-शक्तिमान् ॥ १५ ॥ चतुर्थ ऐन्द्रियः सर्गो यस्तुज्ञानक्रियात्मकः ।



स्त्वतिविकारिणः । ज्ञानमात्रगुणोद्रिक्तास्तस्मात्तैजसनामकाः । अविकारि-त्वयोग्यत्वं निवृत्तं हीन्द्रियेषु तु । वैकारिकत्वनामापि ततस्तेषां न विद्यते । यथा विप्रकुले मूर्खो मूर्ख इत्यभिधीयते । विद्यायोग्यत्वतः शूद्रो न मूर्खो मूर्ख एव सन् । तामसानि हि भूतानि किञ्चिद्व्यवहित-त्वतः । ज्ञानस्य सुष्टुज्ञत्वेऽपि पूर्णज्ञानो हरिः स्वयमि'ति च ॥१६॥ [17]अबुद्धिपूर्वमिव तु ब्रह्मणो हरिबुद्धितः । अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः । तामसानां तु भूतानां सहस्रं सत्वभागिनाम् । शतांश-रजसामेकतमसां सर्ववेदिनाम् । केवलस्तामसो योंऽशः साऽविद्या पञ्च-पर्विका । जाताऽतिकृष्णा तद्देहाद्दैत्यरक्षःपिशाचकाः ॥१७॥ [25]यद्रजो भौतिकं तेन मानुषाणां सदा जनिः । तमोगूढेन रजसा त्वितरस्यास्तु-चारिणाम् ॥ २५ ॥ [27-28]भौतिकेन तु सत्वेन गूढं ब्रह्मण आण्डजम् ।

---

वैकारिको देवसर्गः पञ्चमो यन्मयं मनः ॥ १६ ॥ षष्ठस्तु तमसः सर्गो यस्त्वबुद्धिकृतः प्रभोः । षडिमे प्राकृताः सर्गा वैकृतानपि मे शृणु ॥१७॥ रजोभाजो भगवतो लीलेयं हरिमेधसः । सप्तमो मुख्यसर्गस्तु षड्विध-स्तस्थुषां च यः ॥ १८ ॥ वनस्पत्योषधिलता त्वक्सारा वीरुधो द्रुमाः । उत्स्रोतसस्तमःप्राया अन्तःस्पर्शा विशोषिणः ॥ १९ ॥ तिरश्चामष्टमः सर्गः सोऽष्टाविंशद्विधो मतः । अविदो भूरितमसो घ्राणज्ञा हृदिवेदिनः ॥ ॥२०॥ गौरजो महिषः कृष्णः सूकरो गवयो रुरुः । द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सत्तम ॥२१॥ खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा । एते चैकशफाः क्षत्तः शृणु पञ्चनखान् पशून् ॥२२॥ श्वा सृगालो वृको व्याघ्रो मार्जारः शशशल्यकौ । सिंहः कपिर्गजः कूर्मो गोधा च मकरादयः ॥ २३ ॥ कङ्कगृध्रबकश्येनभासभल्लूकबर्हिणः । हंससारस चक्राह्वकाकोलूकादयः खगाः ॥ २४ ॥ अर्वाक् स्रोतस्तु नवमः क्षत्तरेक-विधो नृणाम् । रजोऽधिकाः कर्मपरा दुःखे च सुखमानिनः ॥२५॥ वैकृतास्त्रय एवैते देवसर्गश्च सत्तम । वैकारिकस्तु यः प्रोक्तः कौमार-स्तूभयात्मकः ॥ २६ ॥ देवसर्गश्चाष्टविधो विबुधाः पितरोऽसुराः । गन्धर्वाप्सरसः सिद्धा यक्षरक्षांसि चारणाः ॥ २७ ॥ भूतप्रेतपिशाचाश्च विद्याध्राः किन्नरादयः । दशैते विदुराख्याताः सर्गास्ते विश्वसृक्कृताः ॥

रूपं तत्रापि तु तमः शतांशेन प्रकीर्तितम्। तज्ञो रुद्रस्ततस्त्वेव मिन्द्रादीनां पुनर्जनिः। गूहितं भूतरजसा तत्सत्वं मानुषा यदा देवा एवंगुणास्त्वेते सर्वं व्याप्य व्यवस्थिताः। गुणातीतं च यद्रू ब्रह्मादीनां सुखात्मकम्। चिद्रूपं तच्च सत्वस्यैवोत्कर्षो यत्र विद्यते तच्चोत्कृष्टं तमो यत्र हीनं तत्र स्वभावतः। उपगूहने तु नैवास्ति विशेषो नित्यचिन्मये। प्रकृतेर्गुणरूपाया मूलिकायाश्च न कचित्। विशेष परमे तत्त्वे वासुदेवे कुतः पुनरि'ति च॥ २७, २८॥ [13]अव्यक्ताद्याः पृथिव्यन्ताः सर्वाः प्रकृतयः स्मृताः। तदुपादानकः सर्गः प्राकृतः परिपठ्यते। अण्डं तु विकृतं ज्ञेयं तज्ञो वैकृत उच्यते॥ १३॥ [17]पञ्चपर्वा त्वविद्या तु भूतेभ्यो हरिणा पुरा। उद्धृत्य ब्रह्मणि क्षिप्ता सा पुनस्तेन निःसृता। तत्स्रष्टृत्वज्ञापनाय तस्मात्सा प्राकृता मते'ति च॥१७॥ [18]एते गुणा हरेः सम्यक्स्वातन्त्र्यविषयाः सदा। स्वतन्त्राः प्रकृतेश्चापि ब्रह्मणोऽन्येषु तु क्रमात्। देवेष्वेव तदन्येषु परतन्त्रा हि ते मता' इति च। स्थास्नुभिर्नियमान्मुख्या स्थितेर्गतिरवाप्यते। प्रायः परोपकर्तृत्वात्ते मुख्यस्रोतसः स्मृताः॥ १८॥ [20]नाधो नोर्ध्वं तिरश्चां तु पुनस्तत्रैव यज्जनिः। यज्ञोपयोगं च सतामुपकारं विनापि च। तिर्यक्स्रोतस इत्येव प्रोच्यन्ते ज्ञानिभिस्ततः॥२०॥ [25]प्रायोऽधोगमनं यस्मात्प्रयत्नेन विना भवेत्। अर्वाक्स्रोतस इत्येव मानुषाः परिकीर्तिताः॥ २५॥ [19]नियमादूर्ध्वगन्तारो देवा मोक्षैकभागिनः। ऊर्ध्वस्रोतस इत्येव तस्मात्ते परिकीर्तिता'इति ब्राह्मे॥ १९॥ [25]तिरश्चां स्थावराणां च बुद्धिपूर्वप्रवर्तिनाम्। असुराणां रक्षसां वापि पिशाचानां तथैव च। अर्वाक्स्रोतस्त्वमुद्दिष्टं नियमादसुरादिनामि'ति च॥२५॥ [19]मुख्यस्रोतस इत्यस्यार्थ उत्स्रोतस इति। 'ऊर्ध्व इत्येव यैस्तूच्चतम एवाभिधीयते। ऊर्ध्वस्रोतस एतस्माद्देवा एव न तत्परे। उच्छब्द उच्चमात्रेऽपि तस्मात्स्थास्नुषु भण्यत इति' च॥ १९॥ [20]तिरश्चीनाः



...वराश्च अन्तःस्पर्शा इतीरिताः। यत्प्रत्यक्षानुमानाभ्यां हृद्गज्ञानं न ...त'इति पाद्मे। यदप्रयत्नाद्धृदयङ्गमं तदेव जानन्ति नो शास्त्र...क्तिभ्यामित्यर्थः॥ अष्टाविंशद्विशेषेण यज्ञेषूपकृतं यतः। तिरश्चां ...वदेतस्माद्गण्यन्ते शास्त्रवेदिभिः॥ २०॥ [21-24]गौरजो महिषः कृष्णः ...करो गवयो रुरुः। अव्युष्ट्रौ च खराश्वौ च तथैवाश्वतरोऽपरः। गौरश्च ...रभश्चैव चमरी श्वसृगालकौ। वृको व्याघ्रश्च मार्जारो हरिश्च ...शशल्यकौ। कपिर्गजश्च गोधाद्या जलजाः पक्षिणस्तथे'ति ब्रह्माण्डे। ...र्मो जलजत्वेनाष्टाविंशत्स्वन्तर्भूतोऽपि पञ्चनखत्वप्रदर्शनार्थं पृथगुक्तः। 'तत्तदाकारसंयुक्तान्सृज्यान्स्रष्टारमेव च। यः सदा संस्मरेद्योगी न स ...योऽभिजायत' इति स्कान्दवचनात्प्रसिद्धानामपि द्विशफादीनां स्मरण...विधानार्थमुक्तिः। 'उच्यते सुप्रसिद्धं च स्मरणार्थं च कुत्रचित्। ...प्रसिद्धज्ञापनार्थं द्विधा शास्त्रवचः स्मृतमि'ति षाड्गुण्ये। 'वल्लूरो नृत्त...क्षी च सलल्लकश्च कथ्यत'इत्यभिधाने॥ २१-२४॥ '[20]अष्टाविंश...प्रधानास्तु तिरश्चां यास्तु जातयः। यो यस्य सदृशस्त्वन्यः स तत्रान्त...र्गतो भवेत्। जलजान्तर्गताः सर्पाः कीटाद्या याश्च जातयः। तेषां ...जलप्रधानत्वाच्छरीरस्य तु सर्वश'इति सत्यसंहितायाम्॥२०॥ [25]रजो...निष्ठास्तमोनिष्ठा द्वेधाऽर्वाक्स्रोतसः स्मृताः। असुराद्यास्तमोनिष्ठा ...मानुषास्तु रजोऽधिका' इति व्योमसंहितायाम्। दुःखे च सुखमानिनो...सुराः। 'सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी'ति वचनात्॥ '...सुखे सुखैकभावास्तु देवा नैवं तु दानवा'इति षाड्गुण्ये॥ २५॥ [26]...कुमारन्तीति कौमारो देवानामण्डजोद्भवः। वैकारिकाणां जनना...प्राकृतो वैकृतश्च सः। वैकारिकेष्वेवान्येषामीषद्योगित्वहेतुतः। ...उभयात्मकत्वं तेनैव प्रोच्यन्तेऽष्टगणा अपी'ति च॥ देवसर्गश्चेति ...चकारार्थ उभयात्मकइति वैकारिकस्तु देवसर्गः प्राकृतत्वेनोक्तः॥२६॥ '[27-28]प्रोक्ता अष्टविधा देवा विबुधाः सर्व एव तु। पितॄणां शतमेवात्र

असुरास्त्रिंशदेव च। गन्धर्वाप्सरसां चैव द्विशतं परिकीर्तितम्। सप्त-तिर्यक्षरक्षस्सु त्रिंशच्चारणजातिषु। शतं सिद्धास्तथान्यासु सप्ततिः सर्व-जातिषु। ऊर्ध्वस्रोतस एते वै अन्येऽर्वाक्स्रोतसः स्मृताः। वैकारिकेषु देवेषु एते वै मुख्यभोगिनः। अभोगिनस्तदन्ये तु देवा एते ततः स्मृताः। सर्वज्ञास्ते सहाराध्या भक्तास्तेष्वन्तरेव च। नृत्तगानादि-कर्तारो वाहनादिकृतस्तथा। सिद्धसिद्धेतिवक्तारश्चाराश्चैषां क्वचित्क्वचित्। सेनाकरा इति ह्येतैर्भेदैरष्टविधा मताः। अन्ये च ये तु सर्वज्ञा विबुधास्ते प्रकीर्तिताः। तथान्ये कर्मभिस्तैस्तैरष्टभेदान्तरं गता'इति तत्त्वविवेके। 'यदि देवादयो दोषाज्जायेरन्मानुषादिषु। तथापि देवा विज्ञेयाऽसुरा-द्यास्तु तथा ध्रुवमि'ति च ॥ २७, २८ ॥ [29]गुणाप्लुतो हरिर्नित्यं गुणानां मध्यगो यतः। अनहंवेदनात्तस्य गुणासंस्पर्श एव चे'ति च। 'सृष्ट्वा देवादिदेहान्स आत्मानं बहुधाऽकरोत्। तन्नियन्तृतयाऽऽत्मानं प्रकृतिं देहभेदत'इति नारदीये। 'कर्ता च करणं चैव कर्म चैव स्वयं हरिः। आत्मनो बहुधाभावे प्रकृतेस्तु स्वतन्त्रत'इत्याग्नेये ॥ २९ ॥ इति तृतीयतात्पर्ये एकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः

[1]कालपरिमाणं दर्शयितुं द्रव्यपरिमाणं दृष्टान्तत्वेन दर्शयति। 'मनुष्या देवलोकेऽपि विशेषेणैव दर्शने। अंशांशित्वविशेषं तु यस्य द्रष्टुं न शक्नुयुः। चरमो विशेष इति तं मुनयो ब्रूयुरञ्जसा। परमाणुः स विज्ञेयः कणादाद्या निरंशिनम्। अनन्तांशयुतत्वेऽपि यं ब्रूयुर्भ्रान्ति-दर्शनात्। ततोऽपि परमाणुत्वं तदंशानां तु यद्यपि। अनन्तत्वा-द्विवेकार्थमस्योक्ता परमाणुते'ति तत्त्वविवेके। अनेकांशैरा समन्ता-द्युतः ॥ १ ॥ [2]कालतो देशतो गुणतश्च परममहत्त्वं सतः परब्रह्मण एव। सच्छब्दोऽन्यत्राप्युपचारतो भवतीत्यतः पदार्थस्येति। सत्पदस्य यो मुख्याभिधेयस्तस्य। 'मुख्याभिधेयस्त्वर्थः स्याद्वाच्यमन्यच्च भण्यते। अमुख्ये स्वर्थशब्दस्तु नीचोपरिहितो भवेदि'ति ब्रह्मतर्के। यद्वेव समः प्लुषिणेत्यादिनाऽन्यत्र स्थितस्य तत्परिमाणत्वमप्यस्तीत्यतः स्वरूपाव-स्थितस्येति। जगदावरकस्य स्वरूपस्य ततः किञ्चिन्महत्वमित्यतः कैवल्यमिति। तत्रापि बहुविधानि रूपाणि तस्य सन्तीत्यविशेष इति। सर्वगते प्रादेशमात्रमपि विद्यत इत्यतो निरन्तर इति। परब्रह्मणो यः केवलभावः। अण्डाद्यन्तःप्रविष्टं तदावरकं तस्यैव परमपुरुषादिरूपान्तरं तदेकदेशं (प्रादेशः प्रादेशमात्रादिविशेषं) च विना यत्सर्वगतं रूपं तदेव परममहान्। 'कालकोटिविहीनत्वं कालानन्त्यं विदुर्बुधाः। देशकोटि-विहीनत्वं देशानन्त्यं तथैव च। गुणानामप्रमेयत्वं वस्त्वानन्त्यं विदो विदुः। आनन्त्यं त्रिविधं नित्यं हरेर्नान्यस्य कस्यचित्। तस्य सर्व-स्वरूपेष्वप्यानन्त्यं तु त्रिलक्षणम्। तथापि देशतस्तस्य परिच्छेदोऽपि विद्यते। परिच्छेदस्तथा व्याप्तिरेकरूपेऽपि युज्यते। तस्याचिन्त्या-द्भुतैश्वर्याद्व्यवहारार्थमेव च। गुणतः कालतश्चैव परिच्छेदो न कुत्रचित्। व्याप्तत्वं देशतोऽप्यस्ति सर्वरूपेषु यद्यपि। न च भेदः क्वचित्तेषा-मणुमात्रोऽपि विद्यते। तथापि विद्यतेऽणुत्वं यस्मादैश्वर्ययोगतः। तस्माद्बुद्ध्यवतारार्थमव्याप्तत्वं च भण्यते। यत्तस्य व्यापकं रूपं परं नारायणाभिधम्। शून्यं ब्रह्मेति तत्प्राहुर्द्वितीयं स्रष्टृ यत्ततः। परमः पुरुषो नाम मितं तद्देशतो विभोः। तृतीयं वासुदेवाख्यं जगदावरकं

---

॥ २८ ॥ अतः परं प्रवक्ष्यामि वंशान्मन्वन्तराणि च। एवं रजःप्लुतः स्रष्टा कल्पादिष्वात्मभूर्हरिः। सृजत्यमोघसङ्कल्प आत्मैवात्मानमात्मना ॥ ॥ २९ ॥

द्वादशोध्यायः

मैत्रेय उवाच—चरमस्तु विशेषाणामनेकासंयुतः सदा। परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः ॥१॥ सत एव पदार्थस्य स्वरूपावस्थितस्य

मितम्। देशतो जगदाविष्टं तुरीयं विष्णुनामकमि’ति ब्रह्मतर्के ॥ सर्वगतस्यापि ब्रह्मरूपस्य कालादिरूपया प्रकृत्या समव्याप्तावपि दार्ष्टान्तिकान्तर्भावात्तदन्यस्मिन्नवस्थानाच्च स्वरूपावस्थितस्येत्युक्तम्। ‘देव्यां कालादिरूपिण्यां स्थितं ब्रह्मापि सर्वगम्। उच्यतेऽनन्यगं यस्मादात्मवत्सा हरेर्विभोः। महदादिगतं यत्तु तदन्यगतमुच्यत’ इति ब्राह्मे ॥ २ ॥ [3-4]अनुमितः शास्त्रलोकानुसारेण ज्ञातः। ‘अनुमेति द्वयं प्राहुर्यथाज्ञानं च लिङ्गजमि’त्यभिधानम् ॥ ‘यावन्तं देवलोकस्थो मानुषस्त्ववधारयेत्। महाप्राज्ञो देवजूकः स कालः परमाणुकः। सर्गाद्यैरनवच्छिन्नस्तदनन्तर इत्यपि। तथैव परमाण्वादिविशेषात्मापि नो भवेत्। पूर्वापरादिभेदो न स कालः परमो महानि’ति ब्रह्मतर्के ॥ स्वरूपावस्थितस्य कैवल्यमविशेषो निरन्तर इत्येतानि विशेषणानि क्रमेण परममहतः कालस्याप्यत्रोक्तानि। ‘देशतः कालतश्चैव वस्तुतश्च त्रिधा हरेः। यथानन्त्यं न चान्यस्य प्रकृतेर्देशकालतः। तथा शब्दस्य कालस्य देशानन्त्यं न कालतः। कालशब्दात्मिका सैव तथापि तु हरेः सदा। नास्याः सामर्थ्यलेशोऽपि ज्ञानानन्दगुणेष्वपि। ज्ञेयस्तदवरो वायुः शेषवीन्द्रहरास्ततः। अवरास्तत इन्द्राद्या गुणैः सर्वैर्न संशय’इति ब्रह्मवैवर्ते ॥ ‘अण्वादिकालसंस्थानभोक्तृत्वात्परमेश्वरः। अण्वादिनामवाच्योऽसौ कालश्चेत्यभिधीयत’इति च ॥ सतो ब्रह्मणः अविशेषं स्वरूपं यः कालः कालान्तर्यामी तदेव ब्रह्म भुङ्क्ते। तदपि ब्रह्म परममहान्। तस्यापि त्रिधा परिच्छेदाभावात्। सर्वं सर्वत्र भोक्ताऽपि विशेषादेकभोक्तृवत्। स्थितो हरिरचिन्त्यात्मा निजैश्वर्यादजो विभुरि’ति ब्रह्मतर्के ॥ ३, ४ ॥ [5]अगात् दृष्टिविषयं प्राप्य ज्ञात इत्यर्थः ॥ ५ ॥

यत्। कैवल्यं परममहानविशेषो निरन्तरः ॥ २ ॥ एवं कालोप्यनुमितः सौक्ष्मे स्थौल्ये च सत्तम। संस्थानभुक्त्या भगवानव्यक्तो व्यक्तभुग्विभुः ॥ ३ ॥ स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम्। सतोऽविशेषभुग्यस्तु स कालः परमो महान् ॥४॥ अणुर्द्वौ परमाणूस्यात्त्रसरेणुस्त्रयः स्मृतः। जालार्करश्म्यवगतः खमेवानुपतन्नगात् ॥ ५ ॥ लघूनि



’राशिभेदात्। ऊनातिरेकात्सप्त वेति ॥ ८ ॥ ‘[9]काकणिकाचतुष्कं तु विंशांशेत्यभिधीयते। कृष्णलेत्यपि तं ब्रूयुस्तैश्चतुर्भिस्तु माषकम्। चतुरङ्गुलदीर्घे तु कृते माषचतुष्टये। यावत्स्यात्परिणाहेन तावद्द्वारं विधीयते। प्रस्थस्य नाडीपात्रस्य षट्दलस्य शुभे जले। भाराधिक्येतोदकेन क्षिप्रं पूर्तिर्भविष्यति। अतिशैत्ये कलङ्के च ना(मावे)द्येनैव तु पूरणम्। तस्माद्वसन्तकाले तु प्रयागस्थोदकेन तु। नाडीशुद्धिपरीक्षा स्यादन्यथा न समं भवेदि’ति पाद्मे ॥ निर्मलेन समोष्णेन नित्यसूर्यांशुवारिणा। प्रवाहगेन कार्या स्यात्कालशुद्धिः सदैव त्वि’ति ब्रह्माण्डे ॥ ९ ॥ [10]यत्रोभयोः स शब्दः स्यात्तत्र द्विवचनेऽप्युभ’ इत्यभिधानम् ॥ १० ॥ ‘[14]इडावत्सरनामाऽसौ नक्षत्रद्वादशे स्थितः। तिथीनां द्वादशावर्ते यो हरिः सोऽनुवत्सरः। वत्सरो यः स्थितस्त्वह्नां षष्ट्युत्तरशतत्रये। गुर्वावर्ते द्वादशांशे यः स्थः स परिवत्सरः। सौरद्वादशके मासे यः स्थः संवत्सरो हरिः। एवं स कालनामाऽपि कालस्थः परमेश्वर’इति ब्रह्मतर्के ॥ १४ ॥ ‘[13]सर्वदा दर्शनात्तस्यानिमिषत्वं विदुर्बुधाः। सततं गमनाद्वापि कालस्थस्य महात्मन’इति च ॥ १३ ॥ [15]अभ्रमाय भूतभेदकः। क्रतुभिः स्वप्रज्ञाभिः। ‘भूतानां ज्यैष्ठ्यकानिष्ठ्यज्ञप्त्यै यज्ञादिवृत्तये। बोधयन्सृज्यशक्तिं च कालस्थो वर्तते हरिरि’ति तन्त्रप्रकाशिकायाम् ॥ १५ ॥ [23]दिनस्थो

...समाम्नाता दश पञ्च च नाडिका। ते द्वे मुहूर्त प्रहरः षड्यामः सप्त वा ...णाम् ॥ ८ ॥ द्वादशार्धं पलोन्मानं चतुर्भिश्चतुरङ्गुलैः। स्वर्णमाषैः ...नच्छिद्रं यावत् प्रस्थं जलं पिबेत् ॥९॥ यामाश्चत्वारश्चत्वारो मर्त्यानामहनी उभे। पक्ष पञ्चदशाहानि शुक्लः कृष्णश्च मानद ॥ १० ॥ ग्रहर्क्ष...चक्रस्थः परमाण्वादिना जगत्। संवत्सरावसानेन पर्येत्यनिमिषो ...भुः ॥ १३ ॥ संवत्सरः परिवत्सर इडावत्सर एव च। अनुवत्सरो ...सरश्च विदुरेवं प्रभाष्यते ॥ १४ ॥ यः सृज्यशक्तिमुरुधोच्छ्वसयन् ...त्या पुंसोऽभ्रमाय दिवि धावति भूतभेदः। कालाख्यया गुणमयीं ...तुभिर्वितन्वन् तस्मै बलिं हरत वत्सरपञ्चकाय ॥ १५ ॥ निशावसान

भगवान्भोक्ता ॥ २३ ॥ ‘[24]युगैकसप्ततेरूर्ध्वं सार्धाष्टादशलक्षकम् । वत्सराणां मनोर्भुक्तिः सहस्रंचतुरुत्तरम् । शतानां प्रलयश्चैव पञ्चोत्तरमथापि च । आद्येषु षट्सु प्रथमे द्विसहस्रं प्रकीर्तितम् । वत्सराणां मनोरन्तरेवमिन्द्रादीनां भवेदि’ति महावाराहे ॥ २४ ॥ ‘[27]ब्रह्मणा कालनाम्ना तु सह शेते हरिर्निशी’ति ब्राह्मे ॥ २७ ॥ [32]अस्य ब्रह्मणः । ब्रह्मणो दिनमित्युक्तत्वात् । ‘नायुर्मानं भगवतः कस्मिन्रूपेऽपि विद्यते । अनादित्वादमध्यत्वादनन्तत्वाच्च सोऽव्यय’इति हरिवंशेषु ॥ ३२ ॥ ‘[38]यमः कालो मानुषाणां तस्य कालः सुदर्शनः । तस्यापि रुद्रस्तत्कालो ब्रह्मा दुर्गाऽपि तस्य तु । सा ब्रह्मप्रलये देवी वर्तते चक्ररूपिणी । संहरन्ती सदा लोकान्सैव ब्रह्मादिषु स्थिता । तस्या नियामको विष्णुः परः कालः स उच्यते । कालाभिमानिनी सैव प्रभुर्न जगदीशितुः । तस्याः प्रभुः स एवेशो विष्णुः सर्वेश्वरेश्वर’इति च ॥ ३८ ॥ ‘[39-41]दशेन्द्रियाणि च मनो भूतान्यण्डगतानि तु । विकारा इति विज्ञेया भूताहंमहतः पर’इति च ॥ ‘पृथिवीं विशेष इत्याहुः शब्दादीनां बहुत्वतः । सा सूक्ष्मत्वाद्वृणोत्यण्डं द्विगुणा तु दशोत्तराः । अबादयः प्रकृत्यन्ता अष्टप्रकृतयः स्मृता’इति च । अन्तर्गताः शरीराणि । शरीराणां बहुत्वेन अतीतानागतैस्तथा । अस्येव देवकायेषु प्रतिप्रति च दर्शनात् । विष्णुसामर्थ्यतोऽण्डानां बहुत्वं नान्यथा भवेदि’ति ब्रह्मतर्के ॥ ‘एकमण्डं बहुत्वेन प्रत्येकं रोमकूपगम् । ब्रह्माऽपश्यत्तथाऽऽत्मानं हरेस्तेषु पृथक्पृथगि’ति ब्रह्माण्डे ॥ ‘बृहदण्डमभूदेकमि’ति च भारते ॥ ॥ ३९, ४० ॥ [41]धाम गृहमण्डराशयः ॥ ४१ ॥ इति तृतीयतात्पर्ये द्वादशोऽध्यायः ॥ १२ ॥

---

आरब्धो लोककल्पोऽनुवर्तते । यावद्दिनं भगवतो मनून् भुञ्जंश्चतुर्दश ॥ ॥ २३ ॥ स्वं स्वं कालं मनुर्भुङ्क्ते साहीकामेकसप्ततिम् । मन्वन्तरेषु मनवस्तद्वंश्या ऋषयः सुराः । भवन्ति चैते युगपत्सुरेशाश्चानु ये च तान् ॥ २४ ॥ तमो मात्रामुपादाय प्रतिसंरुद्धविक्रमः । कालेनानुगताशेष आस्ते तूष्णीं दिनात्यये ॥ २७ ॥ एवंविधैरहोरात्रैः कालगत्योपलक्षितैः । अपेक्षितमिवास्यापि परमायुर्वयः शतम् ॥ ३२ ॥ कालोऽयं द्विपरार्धाख्यो निमेष उपचर्यते । अव्याकृतस्यानन्तस्य ह्यनादेर्जगदात्मनः ॥ ३७ ॥ कालोऽयं परमाण्वादिद्विपरार्धान्त ईरितः । नैवेष्टे स प्रभुर्भूम्न ईश्वरो धाम मानिनाम् ॥ ३८ ॥ विकारैः षोडशभि(शै)र्युक्तो विशेषादिभिरावृतः । अण्डकोशो बहिरयं पञ्चाशत्कोटिविस्तृतः ॥३९॥ दशोत्तराधिकैर्यत्र प्रविष्टः परमाणुवत् । लक्ष्यतेऽन्तर्गताश्चान्ये कोटिशो ह्यण्डराशयः ॥ ४० ॥ यमाहुरक्षरं ब्रह्म सर्वकारणकारणम् । विष्णोर्धाम परं साक्षात्पुरुषस्य महात्मनः ॥ ४१ ॥



## त्रयोदशोऽध्यायः

‘[2]तमस्तु शार्वरं प्रोक्तं मोहश्चैव विपर्ययः । तदाग्रहो महामोहस्तामिस्रः क्रोध उच्यते । मरणं त्वन्धतामिस्रमविद्या पञ्चपर्विके’ति भारते ॥ तमोऽज्ञानं विपर्यासो मोहोऽन्ये तु तदाग्रहा’ इति हरिवंशेषु ॥ २ ॥ [4-23]कालतो बलतश्चैव ज्ञानानन्दादिकैरपि । सर्वैर्गुणैर्विष्णुरेव श्रेष्ठस्तदवमा रमा । अनन्तांशेन कालात्तु समा तस्याश्चतुर्मुखः । अवरो बहुलांशेन तत्समो वायुरुच्यते । नियमाद्वायुरेवैको ब्रह्मत्वं याति नापरः । तस्मात्समानता मुक्तौ वायुत्वे किञ्चिदूनता । दशवर्षं तु तत्पश्चाज्जननं तत्स्त्रियोरपि । आनन्दादिस्तद्दशांशः कालः संवत्सरात्परः । यावत्पश्चाज्जनिस्तावत्पूर्वं देहक्षयो भवेत् । ब्रह्मवाय्वोस्तु ये देव्यौ तद्दशांशः सुखादिकः । शेषस्य गरुडस्यापि कालो दिव्यसाहस्रकः । शेषरुद्रौ ब्रह्मवायू यथा तद्वत्परस्परम् । तद्देव्यस्तद्दशांशाः स्युस्ततस्त्विन्द्रादयो मताः । एवं मुक्तौ च पूर्वं च नान्यथा क्वचि-

---

## त्रयोदशोऽध्यायः

ससर्जाग्रेऽथ तामिस्रमन्धतामिस्रमादिकृत् । महामोहं च मोहं च तमश्चाज्ञानवृत्तयः ॥ २ ॥ सनकं च सनन्दं च सनातनमथात्मभूः ।

दिष्यते । अन्यथोक्तिर्यत्र च स्यात्तन्मोहार्थं भविष्यति । पूर्वापर-विपर्यासो बहुरूपत्वहेतुत' इति विष्णुक्रततत्त्वविवेके ॥ 'अथात आनन्दस्य मीमांसा' । 'देवासुरेभ्यो मघवान्प्रधान'इत्यादि च । 'इन्द्राद्याः सनकाद्याश्च दक्षाद्या येऽपि चापरे । ऋषयो मनवो देवा-स्तद्वशा ये च केचन । उमाया अवराः सर्वे गुणैः सर्वैर्न संशयः । तत्समो न भविष्यो वा न भूतोऽद्यतनोऽपि वा । ऋते हरिं ब्रह्मवायू शेषवीन्द्रान्सभार्यकान् । शङ्करं चेति वेत्तव्यमन्यन्मोहार्थमुच्यत'इति विष्णुक्रततत्त्वनिर्णये ॥ ४ ॥ '[33]यां तत्याज विभुर्ब्रह्मा मानुषी वाक्च सा स्मृता । सरस्वती निजा भार्या देवीं वाचं तु तां विदुरि'ति च ॥ ३३ ॥ '[35]अभिमानितः शब्दतश्च ब्रह्मा वेदान्ससर्ज ह । यज्ञादींश्चक्लृपे वाचा तथा सर्वाभिमानिनः ॥ ३५ ॥ '[38]इतिहासपुराणे तु श्रुत्वा हरिमुखात्स्वयम् । भारतादीन्विना पश्चाद्धरिणाऽन्यैश्च निर्मिता-नि'ति ॥ ३८ ॥ '[42]प्राजापत्यं ब्रह्मचर्यमेकभार्यर्तुगामिते'ति व्यास-स्मृतौ ॥ 'वार्ता यायावरं ज्ञेयमेकाहित्वमसञ्चय'इति च ॥ ४२ ॥ '[43]वैखानसा मूलभक्षाः फलभक्षा उदुम्बराः । वालखिल्याः सर्वभक्षाः फेनपा वत्सफेनपा'इति च ॥ ४३ ॥ '[44]आन्वीक्षिकी तन्त्रविद्या सा च वेदानुसारिणी । विष्णुप्रोक्ता शिवाद्युक्ता ज्ञेया वेदबहिष्कृता ।

---

सनत्कुमारं च मुनिं निष्क्रियानूर्ध्वरेतसः ॥ ४ ॥ स इत्थं गृणतः पुत्रान् पुरो दृष्ट्वा प्रजापतीन् । प्रजापतिपतिस्तन्वीं तत्याज व्रीडितस्तदा ॥३३॥ तां दिशो जगृहुर्घोरां नीहारं यद्विदुस्तमः । कदाचिद्ध्यायतः स्रष्टुर्वेदा आसंश्चतुर्मुखात् । कथं स्रक्ष्याम्यहं लोकान् समवेतान् यथा पुरा ॥३४॥ चातुर्होत्रं कर्मतन्त्रमुपवेदनयैः सह । धर्मस्य पादाश्चत्वारस्तथैवाश्रम-वृत्तयः ॥३५॥ आयुर्वेदं धनुर्वेदं गान्धर्वं वेदमात्मनः । स्थापत्यं चासृज-द्वेदं क्रमात् पूर्वादिभिर्मुखैः ॥ ३८ ॥ सावित्रं प्राजापत्यं च ब्राह्मं चाथ बृहत्तथा । वार्ताऽसञ्चयशालीनं शिलोञ्छ इति वै गृहे ॥४२॥ वैखानसा वालखिल्योदुम्बराः फेनपा वने । न्यासे कुटीचकः पूर्वं बहूदो हंस-निष्क्रियौ ॥ ४३ ॥ आन्वीक्षकी त्रयी वार्ता दण्डनीतिस्तथैव च । एवं



दण्डनीती राजधर्मस्त्रयी वेदाः प्रकीर्तिताः । वार्ता वाणिज्यकादिः स्यादेताभिर्यत्तु जीवनम् । तदान्वीक्षिक्यादिनाम ब्रह्मणा निर्मितं पुरे'ति च । प्रणवः पूर्ववक्त्रात् । 'प्रणवः पूर्ववक्त्रेण भूराद्याश्च मुखत्रयात् । प्रदक्षिणमवर्तन्त वेदाश्चैवाश्रमास्तथे'ति ब्राह्मे ॥ ४४ ॥ '[46]स्पर्शास्तस्या-भवञ्जीवात्स्वरा देहात्प्रजज्ञिरे । ऊष्माण इन्द्रियेभ्यश्च अन्तस्था बलतो विभोरि'ति च ॥ 'यस्माद्यज्जायते चाङ्गात्तत्तदङ्गाभिधं भवेदि'ति च ॥ ॥ ४६ ॥ '[47]शब्दब्रह्मात्मको ब्रह्मा सर्वशब्दाभिधो यतः । ऋते नारायणादीनि नाम्नां स विषयो यतः । व्यक्तं ब्रह्माण्डमुद्दिष्टमव्यक्तं महदादि च । तद्व्यापकत्वाद्ब्रह्मा तु व्यक्ताव्यक्तात्मकः स्मृत'इति च ॥ ॥ ४७ ॥ '[49]ऋषीणां भूरिवीर्याणामिति सिंहावलोकनम् । यत्र पश्चात्तनः श्रेष्ठस्तत्र सिंहावलोकनमि'ति ब्रह्मतर्के ॥ ४९ ॥ [51]केन व्याप्तत्वात्कायः ॥५१॥ इति तृतीयतात्पर्ये त्रयोदशोऽध्यायः ॥१३॥

## चतुर्दशोऽध्यायः

'[33-34]ब्रह्मजस्तु हिरण्याक्षः प्रथमं दंष्ट्रया हतः । स एव पार्षदाविष्टो द्वितीयः(यं) कर्णताडनात् । पूर्वं लयोदके मग्नां द्वितीयं तेन मज्जिताम् । भुवमुद्धरतैवासौ हरिणा क्रोडमूर्तिने'ति ब्रह्माण्डे ॥

---

व्याहृतयश्चासन् प्रणवेनास्पदं गताः ॥४४॥ स्पर्शास्तस्याभवन् जीवात्स्वरो देह उदाहृतः । ऊष्माण इन्द्रियाण्याहुरन्तस्था बलमात्मनः ॥४६॥ स्वराः सप्त विहारेण भवन्ति स्म प्रजापतेः । शब्दब्रह्मात्मनस्तात व्यक्ता-व्यक्तात्मनः प्रभोः ॥ ४७ ॥ ऋषीणां भूरिवीर्याणामपि सर्गमविस्तृतम् । ज्ञात्वा तद्धृदये भूयश्चिन्तयामास कौरव ॥४९॥ एवं युक्तिमतस्तस्य दैवं चावेक्षतस्तदा । कस्य रूपमभूद्द्वेधा यत्कायमभिचक्षते ॥ ५१ ॥

## चतुर्दशोऽध्यायः

स्वदंष्ट्रयोद्धृत्य महीं विलग्नां स उत्थितः संरुरुहे रसायाः । तत्रापि

'व्यत्यासेनापि चोच्यन्ते अविवेकेन कुत्रचित् । दुष्टानां मोहनार्था
तत्र तत्र कथाः क्वचिदि'ति स्कान्दे ॥ अविवेकेनेत्यस्य विविच्य
नोच्यत इत्यर्थः । न तु कर्तुरविवेकः । 'सर्वज्ञस्य कुतोऽज्ञानं व्यास
स्योदारकर्मणः । दुष्टानां मोहनार्थाये'ति च ॥ ३३, ३४ ॥ इति
तृतीयतात्पर्ये चतुर्दशोऽध्यायः ॥ १४ ॥

## पञ्चदशोऽध्यायः

'[28]पिशाचचर्यामचरद्रुद्रो विष्ण्वाज्ञयैव तु । गर्भिणीवधनोदार्थ
महो विष्णुर्विडम्बकृदि'ति वाराहे ॥ २८ ॥ '[41]विष्णुहस्तवधाल्लोको
भक्तस्यान्यस्य न क्वचित् । तथाप्यसुरमोहाय न विविक्तं क्वचित्क्वचि
दि'ति स्कान्दे ॥ 'हिरण्यकशिपुश्चापि भगवन्निन्दया तम'इति च
॥ ४३, ४४ ॥ '[45]स्वतः सद्गतियोग्यस्य पुत्रादेर्हेतुता भवेत् । योग्यता
ऽनादिभक्तिः स्यादयोग्यस्य कुतो गतिरि'ति ब्रह्मतर्के ॥ ४५ ॥ इति
तृतीयतात्पर्ये पञ्चदशोऽध्यायः ॥ १५ ॥

---

दैत्यं गदया पतन्तम् सुनाभसन्दीपिततीव्रमन्युः ॥ ३३ ॥ जघान रुन्धान
मसह्यविक्रमः सलीलयेभं मृगराडिवाम्भसि । तद्रक्तपङ्काङ्किततुण्डगण्डो
यथा गजेन्द्रो जगतीं विभिन्दन् ॥ ३४ ॥

## पञ्चदशोऽध्यायः

ब्रह्मादयो यत्कृतसेतुपाला यत्कारणं विश्वमिदं च मायया । आज्ञा
करी तस्य पिशाचचर्या अहो विभूम्नश्चरितं विडम्बनम् ॥ २८ ॥ कश्यप
उवाच—कृतशोकानुतापेन सद्यः प्रत्यवमर्शनात् । भगवत्युरुमाना
भवे मय्यपि चादरात् ॥४३॥ पुत्रस्यैव च पुत्राणां भवितैकः सतां मतः
गायन्ति यद्यशः शुद्धं भगवद्यशसा समम् ॥ ४४ ॥ योगैर्हेमेव दुर्वर्ण
भावयिष्यन्ति साधवः । निर्वैरादिभिरात्मानं यच्छीलमनुवर्तितुम् ॥४५॥
मैत्रेय उवाच—श्रुत्वा भागवतं पौत्रममोदत दितिर्भृशम् । पुत्रयोश्च वधं
कृष्णाद्विदित्वाऽऽसीन्महामनाः ॥ ५० ॥



## षोडशोऽध्यायः

[14]अनिमित्तेन विष्ण्वर्पणेन ॥ १४ ॥ '[17]मुक्ताश्चैवाधिकारस्था
द्विधा वैकुण्ठलोकगाः । अमुक्तानां श्रमः क्वापि न मुक्तानां क्वचिद्भवे-
दि'ति भविष्यत्पुराणे । 'कृष्णात्मनां न रज आदधुरि'ति च ॥१७॥
'[18]तिरश्चीनाः स्थावराश्च सर्वे ज्ञानाद्विकुण्ठगाः । अमुक्ता मुक्तिमायान्ति
नियमात्कर्मणः क्षय'इति च ॥ १८ ॥ [19]भक्तैरर्चिते सति भगवता
तुलसिकाभरणे कृते तस्या गन्धार्थं तपो बहु मानयन्ति ॥ १९ ॥
[23]अरचनानुवादाः ॥ २३ ॥ [24]ये नृगतिं ज्ञानादियोग्यां न प्रपन्नाः ।
ते मोहाद्भगवदाराधनं न कुर्वन्ति । धर्मज्ञानवर्जिता मानुषा एव न
भवन्तीत्यर्थः ॥ २४ ॥ [28]वक्रस्थया भ्रुवा सह निर्गतेन ॥ २८ ॥

---

## षोडशोऽध्यायः

वसन्ति यत्र पुरुषाः सर्वे वैकुण्ठमूर्तयः । ये नित्यमनिमित्तेन
धर्मेणाराधयन् हरिम् ॥१४॥ वैमानिकाः सललनाश्चरितानि यत्र गायन्ति
लोकशमलक्षपणानि भर्तुः । अन्तर्जले तु विकसन् मधुमाधवीनां गन्धेन
खण्डितधियोऽप्यनिलं क्षिपन्तः ॥१७॥ पारावतान्यभृत-सारस-चक्रवाक-
दात्यूह-हंस-शुक-तित्तिर-बर्हिभिस्तत् । कोलाहले विरचिते चिरमात्र-
मोच्चैर्भृङ्गाधिपे हरिकथामनुगायमाने ॥ १८ ॥ मन्दार-कुन्द-कुरवोत्पल-
चम्पकोर्ण-पुन्नाग-नाग-बकुलाम्बुज-पारिजाताः । गन्धेऽर्चिते तुलसिका-
भरणेन तस्या यस्मिंस्तपः सुमनसो बहु मानयन्ति ॥ १९ ॥ त(य)त्सङ्कुलं
हरिपदानतिमात्रदृष्टैर्वैदूर्य मारकतहेममयैर्विमानैः । येषां बृहत्कटितटाः
स्मितशोभिमुख्यः कृष्णात्मनां न रज आदधुरुत्स्मयाद्यैः ॥ २० ॥ यन्न
व्रजन्त्यघभिदोऽरचनानुवादाः शृण्वन्ति येऽन्यविषयाः कुकथा मतिघ्नीः ।
यास्तु श्रुता हतभगैर्नृभिरात्तवीर्यास्तास्तान् क्षिपन्त्यशरणेषु तमस्सु
हन्त ॥ २३ ॥ येऽभ्यर्थितामपि च नो नृगतिं प्रपन्ना ज्ञानं च तत्त्व
विषयं सहधर्म यत्र । नाराधनं भगवतो वितरन्त्यमुष्य सम्मोहिता
विततया ननु मायया ते ॥ २४ ॥ मत्तद्विरेफवनमालिकया निवीतौ
विन्यस्तयाऽसित चतुष्टयबाहुमध्ये । वक्रभ्रुवा कुटिलया स्फुटनिर्गतेन

‘[30]जयस्य विजयस्यापि कदाचिद्ब्रह्मशापतः । कृष्णावतारपर्यन्तं प्रातिकूल्यं च जायत’इति नारदीये ॥ ३० ॥ [32]युवयोर्यथा विरुद्धस्वभावत्वं तद्वद्भगवद्विषय इह शङ्कनीयः कः ? तस्मान्निषेधो व्यर्थ इत्यर्थः ॥३२॥ [33]समस्तकुक्षौ स्थिते भगवति नहि भेदः । अस्मिंल्लोके । अन्तस्थभगवद्रूपं बहिष्ठैक्येन पश्यन्ति नभो नभसीव । तत्र प्रत्युदरभेदनिमित्तं भयं युवाभ्यां व्युत्पादितं किम् सर्वान्तर्यामित्वेनाभयस्य भयमस्तीति भावः कृतः । अन्यथा किमिति निवारणम् । ‘सर्वोदरगतं ब्रह्म ये भेदेन विचक्षते । सर्वत्रापि भयं तेषां मृतानां तम एव चे’ति तत्त्वविवेके ॥ ३३ ॥ [34]त्रयो रिपवो देहत्रये ॥ ३४ ॥ [36]सुरहेलनस्यापि दण्डो भवति। अत्र स्थितयोः पुनः पूर्ववन्मोहो न स्यादंशिनोः ॥३६॥ [38]केसरा रश्मयः ॥ ३८ ॥ ‘[39]कौस्तुभो ब्रह्मणो रूपं प्राणश्चूडामणिस्तथे’ति च ॥ ३९ ॥ ‘[42]अविद्यमानकरणं विद्यमानस्मृतिस्तथा ।

---

रक्तेक्षणेन च मनाग्रभसं दधाना ॥ २८ ॥ तान् वीक्ष्य वातरसनाश्चतुरः कुमरान् वृद्धान् दशार्धवयसो विदितात्मतत्वान् । वेत्रेण चास्खलयतामतदर्हपांस्तौ तेजो विहस्य भगवत्प्रतिकूलशीलौ ॥ ३० ॥ को वा इहैत्य भगवत्परिचर्ययोच्चैस्तद्धर्मिणामपि सतां विषमस्वभावः । तस्मिन् प्रशान्तपुरुषे गतविग्रहे वां कोवात्मवत्कुहकयोः परिशङ्कनीयः ॥ ३२ ॥ न ह्यन्तरं भगवतीह समस्तकुक्षावात्मानमात्मनि नभो नभसीव धीराः । पश्यन्ति यत्र युवयोः सुरलिङ्गिनोः किं व्युत्पादितं ह्युदरभेदि भयं यतोऽस्य ॥ ३३ ॥ तद्वा अमुष्य परमस्य विकुण्ठभर्तुः कर्तुं न युक्तमिति धीमहि मन्दधीभ्याम् । लोकानितो व्रजतमन्तरभावदृष्ट्या पापीयसस्त्रय इमे रिपवोऽस्य यत्र ॥ ३४ ॥ भूयानघाद्धि भगद्भिरकारि दण्डो यो नौ हरेत सुरहेलनमप्यशेषम् । मा वोऽनुतापकलया भगवत्स्मृतिघ्नो मोहो भवेदिह तु नौ व्रजतोरधोऽधः ॥ ३६ ॥ तं त्वागतं प्रतिहृतौपयिकं स्वपुम्भिस्तेऽचक्षताक्षविषयं स्वसमाधिगम्यम् । हंसश्रियोर्व्यजनयोः शिववायुलोलशुभ्रातपत्रशशिकेसरशीकराम्बुम् ॥ ३८ ॥ कृत्स्नप्रसादसुमुखं स्पृहणीयधाम स्नेहावलोककलया हृदि संस्पृशन्तम् । श्यामे पृथावुरसि शोभितया श्रिया स्वश्रीवामणिं सुभगयन्तमिवात्मधिष्ण्यम् ॥ ३९ ॥ अत्रोपसृष्टमिति चोत्स्मृतमिन्दिरायाः स्वानां धिया विरचितं



उभयं रचनं प्रोक्तं पूर्वसिद्धेषु तु स्मृतिरि’ति शब्दनिर्णये ॥ ४२ ॥ [43]अक्षरजुषामपि तद्रूपसेवाभ्यासिनामपि ॥ ४३ ॥ ‘[48]भक्तिज्ञानपरीपाकात्किञ्चित्पूर्वं च मुच्यते । दर्शनेन हरेस्तत्र नानन्दः पूर्णतां व्रजेदि’ति ब्रह्मतर्के ॥ अतोऽनपेक्षाणामानन्दोद्रेको मोक्षेच्छुभ्यः । तेषां परिपाकतः पूर्वं ब्रह्मदृष्ट्या मुक्तिप्राप्तेः । ‘मुमुक्षोः केवलो भक्तो मुक्तावपि सुखी भवेदि’ति च ॥ ४८ ॥ ‘[49]यावत्परमभक्तैस्तु भुज्यते दुःखमुल्बणम् । तावन्मुक्तौ सुखोद्रेकस्तत्र चेद्भक्तिवर्धनमि’ति च ॥ ॥ ४९ ॥ इति तृतीयतात्पर्ये षोडशोऽध्यायः ॥ १६ ॥

## सप्तदशोऽध्यायः

‘[6]सर्वोत्तमोऽपि भगवान्विप्रादेः पूजनाय तु । गुणलब्धिं ततो भूते नित्यपूर्णगुणोऽपि सन् । ब्रूयुश्चान्ये क्वचित्तत्तु तदुक्तेरनुसारतः । उपादत्ते वरांश्चापि लोकानां मोहनाय चे’ति कौर्मे ॥ ६ ॥ [7]विप्राणां

---

...सौष्ठवाढ्यम् । मह्यं भवस्य भवतां च भजन्तमङ्गं नेमुर्निरीक्ष्य न वितृप्तदृशो मुदा कैः ॥ ४२ ॥ तस्यारविन्दनयनस्य पदारविन्दकिञ्जल्कमिश्रतुलसीमकरन्दवायुः । अन्तर्गतः स्वविवरेण चकार तेषां संक्षोभमक्षरजुषामपि चित्ततन्वोः ॥ ४३ ॥ नात्यन्तिकं विगणयन्त्यपि ते प्रसादं किं चान्यदर्पितभयं भ्रुव उन्नयैस्ते । येऽङ्ग त्वदङ्घ्रिशरणा भवतः कथायाः कीर्तन्यतीर्थयशसः कुशला रसज्ञाः ॥ ४८ ॥ कामं व्रजेम वृजिनैर्निरयेषु नः ...तोऽलिवद्यदि नु ते पदयो रमेत । वाचश्च नस्तुलसिवद्यदि तेऽङ्घ्रिशोभाः पूर्येत ते गुणगणैर्यदि कर्णरन्ध्रः ॥ ४९ ॥

### अथ सप्तदशोऽध्यायः

तद्वः प्रसादयाम्यद्य ब्रह्म दैवं परं हि मे । तद्ध्येवात्मकृतं मन्ये ...स्वपुम्भिरसत्कृताः ॥ ४ ॥ यस्यामृतामलयशः श्रवणावगाहः सद्यः पुनाति जगदाश्वपचं विकुण्ठः । सोऽहं भवद्भ्य उपलब्धसुतीर्थकीर्तिश्छिन्द्यां स्वबाहुमपि वः प्रतिकूलवृत्तिम् ॥ ६ ॥ यत्सेवया चरणपद्म

चरणपद्मपवित्ररेणोः सेवया प्रतिलब्धशीलं श्रीर्न जहातीति यत् । अतश्छिन्द्याम् । 'अनुक्ताश्च गुणा विष्णोरुक्ता दोषा न तस्य तु । अज्ञानाद्दोषविज्ञानं गुणज्ञानं यथार्थत'इति पैङ्गिश्रुतिः ॥ 'विप्राणां चापि भक्तानामन्येषां च जनार्दनः । ब्रह्मणः शङ्कराद्वापि देवताभ्यस्तथैव च । आत्मनश्च श्रियश्चैव सकाशात्प्रियतामपि । पूज्यतामत्ययुक्तं च वदेत्क्वापि विमोहयन्नि'ति स्कान्दे ॥ ७ ॥ [13]देवीं द्योतमानाम् । ऋषिकुल्यां ऋषिकुलस्तुतिपराम् ॥ १३ ॥ '[15]तद्भ्रूविजृम्भः परमेष्ठिधिष्ण्यमि'त्युक्तम् ॥ १५ ॥ [18]धर्मस्यापि दुर्ज्ञेयः ॥ १८ ॥ [20]मधुव्रतपतेः सारग्राहिणां पतेः । अङ्घ्रिस्थतुलसीलोकं स्थानमुरसिस्थापि स्पर्धयेव कामयाना । 'लब्ध्वाऽपि वक्षसि पदमि'ति च ॥ २० ॥ [21]परमभागवतत्वेन तस्यामत्यादरः । न तु कामात् । 'हरिभक्तिर्हरेः प्रीतिर्ज्ञानानन्दादयो गुणाः । अधिकारे च मुक्तौ च ब्रह्मवाय्वोश्च तत्स्त्रियोः । शेषवीन्द्रहराणां च तत्स्त्रीणां वासवादिनाम् । यथाक्रमं तु विज्ञेया भूमौ कारणतोऽन्यथा । देहस्य लक्षणं चैव भूमावप्यन्यथा भवेत् । ब्रह्मादिषु क्रमेणैव नित्यं स्याद्देहलक्षणम् । श्रियोऽधिका गुणाः सर्वे सर्वेभ्यो नियमेन तु । उक्ताश्चैवाप्यनुक्ताश्च ततो विष्णोर्न संशय'इति तत्त्वनिर्णये ॥२१॥ '[22]धारणाद्भगवान्धर्मो यमनाद्यम उच्यत'इति शब्दनिर्णये । 'अनन्तासनवैकुण्ठक्षीरसागरगैस्त्रिभिः । रक्षां करोति भगवान्कपिलः सत्ववर्धनात् । असत्वोऽपि रजश्चैव तमश्चापि निरस्य त्वि'ति मूर्तिभेदे ॥ 'कपिलो वरदश्चैव विकलश्चे'ति कथ्यत'इति च । अतः सत्वस्य कारणत्वमात्रं कपिलो वरदा तनुः ॥ २२ ॥ [23]आत्मैव गोपो गोपको यस्य तदात्मगोपम् ॥ २३ ॥ '[24]असुरा अप्रियाश्चापि नित्यानन्दान्न लोकवत् । निषेध्यबुद्धिविषयमप्रियं हि हरेर्मतमि'ति च । तस्मादनभीष्टमिव ॥ २४ ॥ '[26]अन्तर्भक्ता बहिःक्रुद्धा हिरण्याद्या हरिं प्रति । सर्वक्रुद्धाः शम्बराद्या अन्तः क्रोधवशास्तथे'ति च ॥ २६ ॥ '[28]स्वरूपश्रीस्तथा भार्या द्वेधा श्रीस्तु हरेर्मते'ति च ॥२८॥ '[31]अन्तर्भक्ता बहिर्वैरा हिरण्याद्या हरेर्मताः । तत्र भक्त्याऽभवन्पूता द्वेष आवेशकान्गतः । ब्रह्मजा असुरा ये तु विष्णोः पार्षदतां गताः । कल्याद्याश्च हरेर्द्वेषमन्तः कृत्वा तमोगता' इति च ॥ तस्मात्संरम्भोऽल्पफलः कथ्यत एव । भक्तियोग एव ब्रह्महेलननिस्तारकः ॥ ३१ ॥ इति तृतीयतात्पर्ये सप्तदशोऽध्यायः ॥ १७ ॥

---

पवित्ररेणोः सद्यः क्षताखिलमलं प्रतिलब्धशीलम् । न श्रीर्विरक्तमपि मां विजहाति यस्याः प्रेक्षालवार्थमितरे नियमोऽहते मत् ॥ ७ ॥ ब्रह्मोवाच—अथ तस्योशतीं देवीमृषिकुल्यां सरस्वतीम् । आस्वाद्य मन्युदष्टानां तेषामात्माऽप्यतृप्यत ॥ १३ ॥ ते योगमाययाऽऽरब्धपारमेष्ठ्यमहोदयम् । प्रोचुः प्राञ्जलयो विप्राः प्रहृष्टाः क्षुभितत्वचः ॥ १५ ॥ त्वत्तः सनातनो धर्मो रक्ष्यते तनुभिस्तव । धर्मस्य परमो गुह्यो निर्विकारो भवान् मतः ॥ १८ ॥ यं वै विभूतिरुपयात्यनुवेलमन्यैरर्थार्थिभिः स्वशिरसा धृतपादरेणुः । धन्यार्पिताङ्घ्रितुलसीनवदामधाम्नो लोकं मधुव्रतपतेरिव कामयाना ॥ २० ॥ यस्तां विविक्तचरितैरनुवर्तमानां नात्याद्रियत्परमभागवतप्रसङ्गः । स त्वं द्विजानुपथपुण्यरजःपुनीतिः श्रीवत्सलक्ष्म किमगा भगभाजनत्वम् ॥ २१ ॥ धर्मस्य ते भगवतस्त्रियुग त्रिभिः स्वैः पद्भिश्चराचरमिदं द्विजदेवतार्थम् । नूनं भृतं तदभिघाति रजस्तमश्च सत्त्वेन नो वरदया तनुवा निरस्य ॥२२॥ न त्वं द्विजोत्तमकुलं यदिहात्मगोपं गोप्ता वृष स्वर्हणेन ससूनृतेन । तर्ह्येव नंक्ष्यति शिवस्तव देव पन्था लोकोऽग्रहीष्यदृषभस्य हि यत्प्रमाणम् ॥ २३ ॥ तत्तेऽनभीष्टमिव सत्त्वनिधेर्विधित्सोः क्षेमं जनाय निजशक्तिभिरुद्धृतारेः । नैतावता त्र्यधिपतेर्बत विश्वभर्तुस्तेजः क्षतिस्त्ववनतस्य स ते विनोदः ॥ २४ ॥ श्रीभगवानुवाच—एतौ सुरेतरगतिं प्रतिपद्य सद्यः संरम्भसंभृतसमाध्यनुबद्धयोगौ । भूयः सकाशमुपयास्यत आशु यो वः शापो मयैव विहितस्तदवेत विप्राः ॥ २६ ॥ भगवन्तं परिक्रम्य प्रणिपत्यानुमान्य च । प्रतिजग्मुः प्रमुदिताः शंसन्तो वैष्णवीं श्रियम् ॥ २८ ॥ मयि संरम्भयोगेन निस्तीर्य ब्रह्महेलनम् । प्रत्येष्यतं सकाशं मे कालेनाल्पीयसा पुनः ॥ ३१ ॥

## अष्टादशोऽध्यायः

‘[5]फट्कारश्चैव फूत्कारस्तथा किलकिलादयः। अनुकारशब्द
विज्ञेया ये चान्ये तादृशा मता’इत्यभिधानम् ॥ ५ ॥ [9]टङ्कारोऽप्यनु
कारशब्दः। ‘नाशस्तत्र सृगालानां शिवानां चान्यथास्वर’इत्याग्नेये।
॥९॥ [11]खात्कारोऽप्यनुकारशब्दः ॥ ११ ॥ ‘[31]न देवानां प्रजापान
विजेता वरतो विना। बलेन विद्यया वापि न समस्तत्पतीन्विना
वरोऽपि तादृशो यावच्छरीरं नान्यदेहग’इति तत्त्वनिर्णये ॥२२, ३१
इति तृतीयतात्पर्ये अष्टादशोऽध्यायः ॥ १८ ॥

## एकोनविंशोऽध्यायः

[21]अनेककल्पजननेतृत्वात्सहस्रणीः ॥ २१ ॥ ‘[25]अक्षतः क्षतव

---

### अष्टादशोऽध्यायः

ववौ वायुः सुदुःस्पर्शः फट्काररववान् मुहुः। उन्मूलयन्नगपतीन्
वात्यानीको रजोध्वजः ॥ ५ ॥ अन्तर्ग्रामेषु मुखतो वमन्त्यो वह्निमुल्
णम्। सृगाला अपि टङ्कारैः प्रणेदुरशिवाः शिवाः ॥ ९ ॥ खरोष्ट्रा
कर्कशैः क्षत्तः खुरैर्घ्नन्तो धरातलम्। खात्काररभसा मत्ताः पर्यधावन्
वरूथशः ॥ ११ ॥ मनोवीर्यमदोत्सिक्तमधृष्यमकुतोभयम्। भीत
निलिल्यिरे देवास्तार्क्ष्यत्रस्ता इवाहयः ॥ २२ ॥ तं वीरमारादभिपद्
विस्मयः शयिष्यसे वीरशयेश्वभिर्वृतः। यस्त्वद्विधानामसतां प्रशान्तये
रूपाणि धत्ते सदनुग्रहेच्छया ॥ ३१ ॥

### एकोनविंशोऽध्यायः

तयोः स्पृधोः स्त्रिग्धगदाहताङ्गयोः क्षतस्रवाघ्राणविवृद्धयुद्धयोः
विचित्रमार्गांश्चरतोर्जिगीषया व्यभादिलायामिव शुष्मिणोर्मृधः ॥ १९ ॥
दैत्यस्य यज्ञावयवस्य मायया गृहीतवाराहतनोर्महात्मनः। कौरव्य मह्यां
द्विषतोर्विमर्दनं दिदृक्षुरागादृषिभिर्वृतः स्वराट् ॥ २० ॥ आसन्न
शौण्डीरमपेतसाध्वसं कृतप्रतीकारमहार्यविक्रमम्। विलक्ष्य दैत्यं
भगवान् सहस्रणीर्जगाद नारायणमादिसूकरम् ॥ २१ ॥ न यावदेष वर्धेत



विष्णुरसमः समवत्तथा। अजितो जितवच्चैव ज्ञोऽज्ञवच्च प्रकाशयेत्।
सर्वरूपेष्वनन्तोऽपि ब्रह्माद्याश्चैव तन्मतेः। अनुसारितया ब्रूयुः कुर्युश्च
॥ न दुःखभागि’ति ब्रह्माण्डे ॥ २५ ॥ ‘[26]आदरं तु मुखं विन्द्या-
च्छम्बट्कारं तु भक्षणमि’त्यभिधानम् ॥ २६ ॥ ‘[27]मध्याह्नस्त्वभि-
जित्प्रोक्त आषाढोत्तर एव च। श्रवणस्यापि पूर्वार्धो विषुवं चाभिजि-
न्मुखमि’ति च ॥२८॥ इति तृतीयतात्पर्ये एकोनविंशोऽध्यायः ॥१९॥

## विंशोऽध्यायः

‘[5]धर्मः सत्य इति प्रोक्तो धर्मश्चापि हरेः प्रिय’ इति ब्राह्मे ॥५॥
‘[22]यथेच्छयैव सर्वं तु मनसा देहतोऽपि वा। कर्तुं शक्तोऽपि शस्त्राद्या
लीलैवानन्तशक्तित’इति वाराहे ॥ २२ ॥ इति तृतीयतात्पर्ये विंशोऽ-
ध्यायः ॥ २० ॥

## एकविंशोऽध्यायः

‘[1]सृष्टौ लये तारतम्यं देवानां ज्ञायते स्फुटम्। तारतम्यपरिज्ञाने
महातात्पर्यमिष्यते। अतस्तद्बहुशस्तू(शः सू)क्तमन्यच्चैतत्प्रकाशकमि’ति

---

स्वां वेलां प्राप्य दारुणः। स्वां देवमायामास्थाय तावज्जह्येनमच्युत ॥
॥२५॥ एषा घोरतमा सन्ध्या लोकशम्बट्करी प्रभो। उपसर्पति सर्वात्मन्
सुराणां जयमावह ॥२६॥ अधुनैवाभिजिन्नाम योगो मौहूर्तिकोऽभ्यगात्।
शिवाय नस्त्वं सुहृदामाशु निस्तर दुस्तरम् ॥ २७ ॥

### विंशोऽध्यायः

गदायामपविद्धायां हाहाकारे च निर्गते। मानयामास तं धर्मं
सुनाभं चास्मरद्विभुः ॥५॥ प्रादुष्कृतानां मायानां आसुरीणां विनाशनम्।
सुदर्शनास्त्रं भगवान् प्रायुङ्क्त च ततस्त्रिपात् ॥ २२ ॥

### एकविंशोऽध्यायः

महीं प्रतिष्ठामध्यास्य योऽसौ स्वायम्भुवो मनुः। कान्यध्यतिष्ठ-

वामने ॥ १ ॥ [12]महतो ब्रह्मवायू च तद्भार्ये चाभिमानिनः ॥ १२ ॥
'[13]अहमः शेषवीन्द्रौ च रुद्रेन्द्रौ कामतत्स्त्रियः । मनसस्त्वनिरुद्धश्च चन्द्र
श्चान्ये यथोदितम् । एवं क्रमो व्यत्ययस्तु सूक्ष्मस्थूलविभेदतः । सृष्टौ
गुणे च ज्ञानादौ मुक्तिस्थे वाप्ययं क्रमः । नियमेनान्यथोक्तिस्तु मोहा
यासुरजन्मनामि'ति वाराहे ॥१३॥ [15]निरात्मकः न व्यक्तस्तत्रात्मा ।
॥१५॥ [17]संस्थया स्वया भगवति स्थितसामर्थ्येन ॥१७॥ '[28]जानन्नपि
समर्थोऽपि क्वचिद्ब्रह्मा हरेः प्रियम् । ज्ञात्वा करोति कर्माणि ह्यज्ञ
चाप्यशक्तवदि'ति च ॥ २८ ॥ '[41]व्यसृजन्मलवद्देहं बाह्यं न तु नि
पुरा । ब्रह्मा तच्चाहरादित्वं प्राप देवादिदैवतमि'ति कौर्मे ॥ ४१ ॥
'[42]ऊर्जं साराम्नमुद्दिष्टं तदेव पितृभक्षणमि'ति ब्राह्मे ॥ ४२ ॥ [50]
पुरा सृष्टा देवाः । 'दृष्ट्वा तु पौरुषीं सृष्टिं देवाः सुकृतमूचिर'इति

---

द्वाराणि मार्गायावरजन्मनाम् ॥ १ ॥ ये मरीच्यादयो विप्रा यस्तु
स्वायम्भुवो मनुः । ते वै ब्रह्मण आदेशात्कथमेतदभावयन् ॥ १० ॥
सद्वितीयाः किमसृजन् स्वतन्त्रा उत कर्मभिः । आहोस्वित् संहताः सर्वे
इदं स्म समकल्पयन् ॥ ११ ॥ मैत्रेय उवाच—दैवेन दुर्वितर्क्येण परेणा
निमिषेण च । जातक्षोभाद्भगवतो महानासीद्गुणत्रयात् ॥ १२ ॥ रज
प्रधानान्महतस्त्रिलिङ्गो दैवचोदितात् । जातः ससर्ज भूतादिर्वियदादीनि
पञ्च च ॥ १३ ॥ सोऽशयिष्टाधिसलिल आण्डकोशो निरात्मकः । साग्रं
वै वर्षसाहस्रमन्ववात्सीत्तमीश्वरः ॥ १५ ॥ सोऽनुविष्टो भगवता य
शेते सलिलाशये । लोकसंस्थां यथा पूर्वं निर्ममे संस्थया स्वया ॥
॥१७॥ ततो हसन् स भगवानसुरैर्निरपत्रपैः । अन्वीयमानस्तरसा क्रुद्धो
भीतः परापतत् ॥ २४ ॥ सोऽवधार्यास्य कार्पण्यं विविक्ताध्यात्मदर्शनः
विमुञ्चात्मतनुं घोरामित्युक्तो विमुमोच ह ॥ २८ ॥ जगृहुस्तद्विसृष्टां ता
जृम्भणाख्यां तनुं प्रभोः । निद्रादीन्द्रियविक्लेदो यया भूतेषु दृश्यते
तयोच्छिष्टान् धर्षयन्ति तमुन्मादं प्रचक्षते ॥ ४१ ॥ ऊर्जस्वन्तं मन्यमा
आत्मानं भगवानजः । साध्यान् गणान् पितृगणान् परोक्षेणासृजत्प्रभु
॥ ४२ ॥ स आत्मानं मन्यमानः कृतकृत्यमिवात्मभूः । तदा मनू
ससर्जान्ते मनसा लोकभावनान् ॥ ४९ ॥ तेभ्यः स व्यसृजद्देहं पर
पुरुष आत्मनः । तां दृष्ट्वा ये पुरा सृष्टाः प्रशशंसुः प्रजापतिम् ॥ ५० ॥



च ॥ ५० ॥ '[52]यत्रापि तु हरेर्नाम तदन्यत्र प्रयुज्यते । तदान्तरहरे-
स्तत्र गृहीतिर्नान्यथा भवेत् ॥ स्वातन्त्र्यादवरत्वं च परस्यापि प्रयुज्यते ।
स्थितस्यापि यथा राज्ञः स्वानां जयपराजयावि'ति पाद्मे ॥ अतो
हृषीकेशो ब्रह्मान्तर्यामी ॥ ५२ ॥ इति तृतीयतात्पर्ये एकविंशोऽ-
ध्यायः ॥ २१ ॥

## द्वाविंशोऽध्यायः

[8]शब्दविषयं ब्रह्म ॥ ८ ॥ [18]अनन्तछि(च्छ)दि अनन्तावयवम् ।
'तृतीयोऽतिशय'इति महाव्याकरणे । 'मथनान्मिथिलो जात' इत्यादि-
वच ॥ १८ ॥ [50-51]स्वायम्भुवो मनुश्चैव पृथुश्चैवार्जुनावपि । ब्रह्म-
शेषविपा रुद्र इन्द्र ऋष्यादयस्तथा । विष्ण्वावेशयुताः सर्वे न तु विष्णु-
स्वरूपका'इति तत्त्वनिर्णये ॥ ५० ॥ इति तृतीयतात्पर्ये द्वाविंशो-
ऽध्यायः ॥ २२ ॥

## त्रयोविंशोऽध्यायः

[16]स्वया कान्त्याऽन्याः क्षिपन्ती श्रीर्यथा तद्वत्स्थिताम् ॥ १६ ॥

---

तपसा विद्यया युक्तो योगेन सुसमाधिना । आदावृषीन् हृषीकेशः
ससर्जाभिमताः प्रजाः ॥ ५२ ॥

### द्वाविंशोऽध्यायः

तावत्प्रसन्नो भगवान् पुष्कराक्षः कृते युगे । दर्शयामास तं क्षत्तः
शाब्दं ब्रह्म दधद्वपुः ॥ ८ ॥ न तेऽजराक्षभ्रमिरायुरेषां त्रयोदशारं त्रिशतं
षष्टिपर्व । षण्नेम्यनन्तच्छिदि यत्त्रिनाभि करालस्रोतो जगदाच्छिद्य-
धावत् ॥ १८ ॥ नूनं चङ्क्रमणं देव सतां संरक्षणाय ते । वधाय चासतां
यस्त्वं हरेः शक्तिर्हि पालिनी ॥ ५० ॥

### त्रयोविंशोऽध्यायः

कामः स भूयान्नरदेव तेऽस्याः पुत्र्याः समाम्नायविधौ प्रतीतः । क
एव ते तनयां नाद्रियेत स्वयैव कान्त्या क्षिपतीमिव श्रियम् ॥ १६ ॥

‘[29-30]ज्ञानानन्दस्वरूपेभ्यो रोमभ्योऽस्य कुशादयः । विधुन्वतः प्रयागे तु वराहवपुषोऽभवन् । रोमाणि तानि देवस्य रूपाण्यासन्सहस्रश’इति स्कान्दे । त एवासन् तेभ्य एवासन् । ‘सप्तसु प्रथमे’ति सूत्रात् ॥ ॥ २९, ३० ॥ ‘[35]गतसारं यातयामं यामः सार इहोच्यत’इति नारदीये ॥ ३५ ॥ [37]पर्यासे मानुषत्वेनावस्थानेऽपि ॥ ३७ ॥ इति तृतीयतात्पर्ये त्रयोविंशोऽध्यायः ॥ २३ ॥

## चतुर्विंशोऽध्यायः

[18]देहली द्वारबन्धः ॥ १८ ॥ [20]कृत्रिमान् शोभार्थं कृतान् ॥ ॥ २० ॥ [30]आदर्शे ददर्श ॥ ३० ॥ [38]उद्गुणपानवीच्यः उत्तमामृतवीचीयुक्तः । ‘प्राप्तषोडशवर्षः सन्नावीच्य इति कथ्यत’इत्यभिधानम् ॥ ॥ ३८ ॥ इति तृतीयतात्पर्ये चतुर्विंशोऽध्यायः ॥ २४ ॥

## पञ्चविंशोऽध्यायः

‘[1]मालिनी शालिनी माल्या चार्या भार्येति चोच्यत’इति च ॥ ॥१॥ ‘[6]नावतारेष्वपि हरेर्देहः शुक्लादिसम्भवः । तथापि शुक्लसंस्थः सन्मातृदेहं प्रविश्य च । विलाप्य शुक्लं तत्रैव केवलज्ञानरूपकः । उदेति भगवान्विष्णुः काले लोकं विमोहयन्नि’ति महावाराहे ॥ अग्निरिव दारुणीति व्यक्तिस्थानमात्रत्वे दृष्टान्तः ॥६॥ ‘[10]महागुणाभिपूर्णत्वं सत्वमित्युच्यते बुधैरि’ति वामने ॥१०॥ ‘[10-17]सम्यग्ज्ञानं तु साङ्ख्यं स्यात्तदर्थो योग उच्यत’इति कापिलेये ॥ १७ ॥ ‘[26]युगत्रयावतारेण त्रियुगश्चेति कथ्यत’इति पाद्मे ॥२६॥ [31]यानि यानि ब्रह्मादिरूपाणि रोचन्ते स्वजनानां तान्येव ते व्यक्त्यर्थमभिरूपाणि । ‘व्यक्तो भवेद्धरिस्तत्र यत्स्थानं रचितं सतामि’ति कौर्मे ॥ ३१ ॥ [33]वेदैर्वृतत्वाद्भगवां-

---

अतो भजिष्ये समयेन साध्वीं यावत्तेजो विभृयादात्मनो मे । अतो धर्मान् पारमहंस्यमुख्यान् शुक्लोपदिष्टान् बहुमन्येऽविहिंस्रान् ॥ १९ ॥ बर्हिष्मती नाम पुरी सर्वसम्पत्समन्विता । न्यपतन्यत्र रोमाणि यज्ञस्याङ्गं विधुन्वतः ॥ २९ ॥ कुशकाशास्त एवासन्शश्वद्धरित वर्चसः । ऋषयो यैः पराभाव्य यज्ञघ्नान्यज्ञमीजिरे ॥ ३० ॥ अयातयामास्तस्या सन् यामाः स्वान्तरयापनाः । शृण्वतो ध्यायतो विष्णोः कुर्वतो ब्रुवतः कथाः ॥३५॥ शारीरा मानसा दिव्याः पर्यासे ये च मानुषाः । भौतिकाश्च कथं क्लेशा बाधन्ते हरिसंश्रयम् ॥ ३७ ॥

### चतुर्विंशोऽध्यायः

द्वास्सु विद्रुमदेहल्या भातं वज्रकपाटिमत् । शिखरेष्विन्द्रनीलेषु हेमकुम्भैरधिष्ठितम् ॥ १८ ॥ हंसपारावतव्रातैस्तत्र तत्र निकूजितम् । कृत्रिमान् मन्यमानैः स्वानधिरुह्याधिरुह्य च ॥ २० ॥ अथादर्शे स्वमात्मानं स्रग्विणं विरजाम्बरम् । विरजं कृतस्वस्त्ययनं कन्याभिर्बहुमानितम् ॥ ३० ॥ दृष्ट्वा कृतशिरःस्नानं सर्वाभरणभूषितम् । निष्कग्रीवं वलयिनं कूजत्कांञ्चननूपुरम् ॥ ३१ ॥ तस्मिन्नलुप्तमहिमा प्रिययानुरक्तो विद्याधरीभिरुपचीर्णवपुर्विमाने । बभ्राज उत्कचक उद्गुणपानवीच्यस्ताराभिरावृत इवोडुपतिर्नभस्थः ॥ ३८ ॥ तस्मिन् विमान उत्कृष्टां शय्यां रतिकरीं श्रिता । न चाबुध्यत तं कालं पत्याऽपी(वी)च्येन सङ्गता ॥४५॥

### पञ्चविंशोऽध्यायः

मैत्रेय उवाच—निर्वेदवादिनीमेवं मनोर्दुहितरं मुनिः । दयालुः शालिनीमाह शुक्लाभिव्याहृतं स्मरन् ॥ १ ॥ तस्यां बहुतिथे काले भगवान् मधुसूदनः । कार्दमं वीर्यमापन्नो जज्ञेऽग्निरिव दारुणि ॥ ६ ॥ भगवन्तं परं ब्रह्म सत्वेनांशेन शत्रुहन् । तत्वसङ्ख्यानविज्ञप्त्यै जातं विद्वानजः स्वराट् ॥ १० ॥ ज्ञानविज्ञानयोगेन कर्मणामुद्धरंश्च यः । कालोपसृष्टं यत्साङ्ख्यं वक्ष्यत्यासुरये विभुः । हिरण्यकेशः पद्माक्षः पद्ममुद्रापदाम्बुजः ॥ १७ ॥ स चावतीर्णं त्रियुगमाज्ञाय विबुधर्षभम् । विविक्त उपसङ्गम्य प्रणम्य समभाषत ॥ २६ ॥ तान्येव तेऽभिरुपाणि रूपाणि भगवंस्तव । यानि यनीह रोचन्ते स्वजनानामरूपिणः ॥३१॥ परं प्रधानं पुरुषं महान्तं

त्रिवृदित्युच्यते बुधैरि'ति च ॥३३॥ [35]सत्यलौकिके यथार्थज्ञानविषये। आभासो ज्ञानमालोको लोकाभासश्च कथ्यत' इत्यभिधानम् ॥ ३५ ॥ [40]विश्वमेतदेतादृशं असारं यतः । अत ईश्वरं विज्ञाय । नाख्यात्युपप्लवः दुःखाज्ञानाद्युपद्रवो न ॥ ४० ॥ '[45-46]अनन्याधीनशक्तित्वाद्धरिः स्व इति चोच्यत'इति मात्स्ये । प्रत्यग्रः प्रत्यग्रतिः ॥ 'भूतगर्भश्च भूतस्थः पूर्ण एवंद्विरूपवान् । अत आत्मेति तं प्राहुः सदैवाप्तगुणो यत' इति च ॥ ४५, ४६ ॥ इति तृतीयतात्पर्ये पञ्चविंशोऽध्यायः ॥ ३५ ॥

## षड्विंशोऽध्यायः

[11]नारायणो ब्रह्मवायू वीन्द्रशेषौ हरस्तथा । कामः शक्रो गुरुर्दक्षो मन्वाद्या भास्करादयः। सर्वजीवाश्च क्रमशः पुरुषाख्याभिशब्दिताः । एतत्पत्न्यो बन्धशक्तिः स्त्रियः सर्वास्तथा जडम् । क्रमात्प्रकृतिशब्दोक्तास्तज्ज्ञानाद्विप्रमुच्यत' इति दत्तात्रेययोगे ॥ ११ ॥ '[13-14]परमात्मादिकं देहे यदध्यात्मं तदीरितमि'ति च । 'सुखं शरीर-

कालं कविं त्रिवृतं लोकपालम् । आत्मानुभूत्याऽनुगतप्रपञ्चं स्वच्छन्दशक्तिं कपिलं प्रपद्ये ॥ ३३ ॥ श्री भगवानुवाच—मया प्रोक्तं हि लोकस्य प्रमाणं सत्यलौकिके । अथाजनि मया तुभ्यं यदवोचमृतं मुने ॥ ३५ ॥ विश्वमेतद्धि शास्त्रेण विज्ञायात्मानमीश्वरम् । मुनिः शान्तमनोवाक्यस्तदा नाख्यात्युपप्लवः ॥ ४० ॥ निरहङ्कृतिर्निर्ममश्च निर्द्वन्द्वः समदृक्स्वदृक् । प्रत्यग्रः शान्तधीर्धीरः प्रशान्तोर्मिरिवोदधिः ॥ ४५ ॥ आत्मानं सर्वभूतेषु भगवन्तमवस्थितम् । अपश्यत् सर्वभूतानि भगवत्यपि चात्मनि ॥ ४६ ॥

## षड्विंशोध्यायः

तं त्वा गताऽहं शरणं शरण्यं स्वभृत्यसंसारतरोः कुठारम् । जिज्ञासया प्रकृतेः पूरुषस्य नमामि सद्धर्मविदां वरिष्ठम् ॥ ११ ॥ श्रीभगवानुवाच—योग आध्यात्मिकः पुंसाम्मतो निश्रेयसाय मे । अत्यन्तोपरतिर्यत्र दुःखस्य च सुखस्य वै ॥१३॥ तमिमं ते प्रवक्ष्यामि यमवोचं पुराऽनघे ।



[illegible]ग्यं तु दुःखं सर्वं तथैव च । मुक्तौ विलयमायाति नित्यानन्दस्तु [illegible]च्यत'इति च ॥ १३, १४ ॥ '[16-17]बाह्ये सुखे त्वनासक्तेरसुखं दुःख[illegible]नात् । अदुःखं हरिभक्त्यैव नित्यानन्दं यदा मनः । तदा तं [illegible]मात्मानं पश्यत्यात्मप्रसादत'इति कापिलेये । अभेदात्स्वावतारेषु [illegible]न्तर उदाहृतः । गुणदेहेन्द्रियाभेदात्केवलोऽसदृशत्वतः । अखण्ड[illegible]शक्तित्वादहमेकः सदा मत'इति च ॥ १६-१७ ॥ '[18]बन्धशक्तिः [illegible]कृत्याख्या विष्णुशक्त्या वियुज्यत' इति च ॥ १८ ॥ '[22]यादृशी मयि [illegible]क्तिः स्यात्तादृश्यन्यत्र नैव चेत् । अनन्यभक्तिरुद्रेकात्सा ययैव तरे[illegible]तिमि'ति च ॥ २२ ॥ '[23]एकः पूर्णो हरिर्नान्यस्तदन्ये तद्वशा [illegible]ाः । इति ज्ञानं स्थिरं यत्तदैकात्म्यज्ञानमुच्यत' इति ब्रह्माण्डे ॥२३॥ [illegible]न जनिरन्येषां हरेः स्वतनुवैव तु । नित्योदितज्ञानतनोः कुतः [illegible]कृतो जनिरि'ति गारुडे ॥ ३१ ॥ '[32-33]आनुश्राविककर्माऽसौ [illegible]युक्तं यो न लङ्घयेदि'ति भविष्यत्पर्वणि । 'सदा सर्वगुणाढ्यत्वा[illegible]ो विष्णुरुदीर्यत' इति कापिलेये । अपूर्णभक्तेर्मुक्तौ तु न सुखं [illegible]मिष्यति । अतस्तादृशमुक्तेश्च भक्तिः पूर्णा गरीयसी'ति च ॥

[illegible]र्णां श्रोतुकामानां योगमुर्वङ्गनैपुणम् ॥१४॥ अहं ममाभिमानोत्थैः काम[illegible]आदिभिर्मलैः । वीतं यदात्मनः शुद्धमदुःखमसुखं समम् ॥१६॥ तदा [illegible] आत्मानं कैवलं प्रकृतेः परम् । निरन्तरं स्वयञ्ज्योतिरणिमान[illegible]ण्डितम् ॥१७॥ ज्ञानवैराग्ययुक्तेन भक्तियोगेन चात्मना । परिपश्य[illegible]दासीनां प्रकृतिं च हतौजसम् ॥ १८ ॥ मय्यनन्येन भावेन भक्तिं [illegible]न्ति ये दृढाम् । मत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबान्धवाः ॥ २२ ॥ [illegible]श्रयाः कथा मृष्टाः शृण्वन्ति कथयन्ति च । तपन्ति विविधांस्तापा[illegible]गतचेतसः ॥२३॥ मैत्रेय उवाच—विदित्वार्थं कपिलो मातुरित्थं [illegible]स्नेहो यत्र तन्वाऽभिजातः । तत्वाम्नायं यत्प्रवदन्ति साङ्ख्यं प्रावोचद्वै [illegible]वितानयोगम् ॥ ३१ ॥ श्रीभगवानुवाच—देवानां गुणलिङ्गानामानु[illegible]विककर्मणाम् । सत्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ॥ ३२ ॥ [illegible]मित्ता भगवति भक्तिः सिद्धेर्गरीयसी । जरयत्याशु या कोशं

॥ ३२, ३३ ॥ '[34]नेच्छन्ति सायुज्यमपि फलत्वेन हरिर्यदि । ददाति भक्तिसन्तुष्ट आज्ञात्वेनैव गृह्णते । तादृशानां सुखाधिक्यं पुनर्मुक्तौ भविष्यती'ति च ॥ ३४ ॥ [41]आदानादिकर्तृत्वादात्मा ॥ ३८ ॥ इति तृतीयतात्पर्ये षड्विंशोऽध्यायः ॥ २६ ॥

## सप्तविंशोऽध्यायः

[4]स परमो न जायते न म्रियत इति प्रसिद्धं हि । देहाद्युपाधिभिरात्तधर्मो जीवोऽपि स्वप्नवद्भ्रान्त्या जायते म्रियते च । भ्रान्तित्वाद्देहात्मत्वस्य । किमु सर्वज्ञत्वस्वतन्त्रत्वादिवैलक्षण्ययुक्त ईश्वरः 'परस्य जन्ममृत्याद्याः स्युः स्वतन्त्रस्य किं पुनः । जीवस्यापि यतो भ्रान्त्या जन्ममृत्यादिसङ्गतिरि'ति महाकौर्मे ॥ ३, ४ ॥ [5]उपागता समीपस्थाम् ॥ ५ ॥ [6]मुमुहे मोहयामास । तदेतन्मे विजानीहि कृत्वा विवाहमित्यादिवत् । 'यत्र कारयितातीवस्वतन्त्रस्तत्र कर्तृता प्रोच्यते तु यथा ब्रह्म त्वज्ञं संसारभागिती'ति च । 'लये वाप्यथवा सृष्टौ त्वन्तरालेऽपि न क्वचित् । प्रकृत्या रहितं ब्रह्म कदाचिदपि तिष्ठती'ति कापिलेये ॥ ६ ॥ [7]एवं पराभिध्यानेन परमात्मेच्छया । प्रकृतेः कर्तृत्वं जीव आत्मनि मन्यते ॥७॥ '[8]विष्णोः सुराणां गुरूणां नित्यास्वतन्त्रता । यत्तु तस्यान्यतन्त्रत्वं तज्ज्ञानाद्विनिवर्तत'इति च ॥ अकर्तुरीशस्य सकाशात् । 'अक्लिष्टत्वादकर्तासावकार्यत्वादथापि वे'ति च । 'एष कर्ता न क्रियते कारणं च जगत्प्रभुरि'ति भारते ॥ ८ ॥ [9]ब्रह्मादिभिः सर्गकरी श्रीर्विष्णुबलसंश्रयात् । सुखदुःखप्रदो विष्णुः स्वयमेव सनातनः । कर्तृत्वं सुखदुःखानामन्येषां तु तदाज्ञया । भोक्तृत्वं सुखदुःखानां करोत्येको हरिः स्वयम् । भोक्तृत्वमात्रहेतुत्वं जीवे नान्यत्र कुत्रचिदि'ति भविष्यत्पर्वणि ॥ 'प्रकृतिं पुरुषं चैव विद्ध्यनादी' इति च ॥ ९ ॥ '[11]व्यक्ताव्यक्तात्मकं यत्तद्विद्यात्सदसदात्मकम् । असर्गा केवलाऽव्यक्ता सिसृक्षुरुभयात्मिका । व्यक्तैव कार्यरूपा तु प्रकृतिस्त्रिविधा मता । कार्यतः सा प्रधानत्वात्प्रधानमिति कीर्त्यते । अविशेषा ह्यकार्यत्वात्सा च श्रीर्विष्णुसंश्रये'ति हरिवंशेषु ॥ 'विशेषः कार्यमुद्दिष्टं विशेषादृश्यते यत'इति पाद्मे ॥ ११ ॥ '[15]बुद्धिरध्यवसानाय संशयं कुरुते मनः । अभिमानो ह्यहङ्कारश्चित्तं स्मरणकारणमि'ति स्कान्दे ॥ १५ ॥ '[16]हरिस्तु निर्गुणं ब्रह्म श्रीर्ब्रह्म सगुणं स्मृता । तदङ्गजानि तत्त्वानि तस्मात्तद्रूपमुच्यत'इति हरिवंशेषु । 'पुरुषो हृदिस्थः परमः कालः सर्वगतो हरिः । अथवा रुद्रदेहस्थो हरिः कालतीरित' इति ब्राह्मे ॥ पौरुषं प्रभावम् । पुरुषस्य प्रकर्षेण

---

निगीर्णमनलो यथा ॥ ३३ ॥ नैकात्म्यतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहाः । येऽन्योन्यतो भागवताः प्रसज्य संभाजयन्ते मम पौरुषाणि ॥३४॥ न कर्हिचिन्मत्पराः शान्तरूपा नंक्ष्यन्ति मे नोऽनिमिषो लेढि हेतिः । येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टम् ॥ ३८ ॥

### सप्तविंशोध्यायः

अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः । प्रत्यग्धामा स्वयंज्योतिर्विश्वं येन समन्वितम् ॥ ३ ॥ न जातो न म्रियेतात्मा स हि देहाद्युपाधिभिः । निमित्तैरात्तधर्मोऽयं यथा स्वप्ने तदीक्षिता ॥ ४ ॥ स एव प्रकृतिं सूक्ष्मां देवीं गुणमयीं विभुः । यदृच्छयैवोपगतामभ्यपद्यत लीलया ॥ ५ ॥ गुणैर्विचित्रां सृजतीं सरूपाः प्रकृतिं प्रजाः । विलोक्य मुमुहे सद्यः स इह ज्ञानगूहया ॥ ६ ॥ एवं पराभिध्यानेन कर्तृत्वं प्रकृतेः पुमान् । कर्मसु क्रियमाणेषु गुणैरात्मनि मन्यते ॥७॥ तदस्य संसृतिर्बन्धः पारतन्त्र्यं च तत्कृतम् । भवत्यकर्तुरीशस्य साक्षिणो निर्वृतात्मनः ॥८॥ कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः । भोक्तृत्वे सुखदुःखानां पुरुषं(ः) प्रकृतेः परम्(ः) ॥९॥ श्री भगवानुवाच—यत्र त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् । प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत् ॥ ॥ ११ ॥ मनोबुद्धिरहङ्कारश्चित्तमित्यन्तरात्मनः । चतुर्धा लक्ष्यते भेदो वृत्त्या लक्षणरूपया ॥ १५ ॥ एतावानेव सङ्ख्यातो ब्रह्मणः सगुणस्य हि । सन्निवेशो मया प्रोक्तो यः कालः पञ्चविंशकः ॥ १६ ॥ प्रभावं पौरुषं

भावं व्याप्तं रूपम् । एके सम्यग्ज्ञानिनः । अप्राकृताः
॥ १७ ॥ '[20]प्रकृतेः क्षोभकं रूपं दैवं नारायणात्मकम् । प्रकृ
महतः स्रष्टा परमः पुरुषो मतः ॥ २० ॥ '[22]तदेव वासुदेवा
महत्तत्त्वनियामकम् ॥ २२ ॥ [27]सङ्कर्षणाख्यस्तु हरिः सूक्ष्माहङ्का
यामकः । स्थूलाहङ्कारनियमी विष्णुः प्रद्युम्ननामकः । अनिरु
मनस्तत्त्वनियन्ता भगवान्हरिः । महत्तत्त्वादिजीवास्तु ब्रह्मशेषाङ्ग
स्तथा । सूक्ष्मस्थूलविभेदेन कामजश्चानिरुद्धक'इति कापिलेये ॥२७
'[21]अङ्के रमयते यस्मात्केशवो जगदङ्कुरः । महान्तं योऽसृजज्जीवमोह
च तमोऽग्रसदि'ति च ॥ २१ ॥ [22]यद्वासुदेवाख्यं भगवद्रूपं त
महदात्मकं चित्तं जायते । 'सत्वशब्देन चोच्यन्ते पूर्णानन्दादयो गुणा
इति च । महत्तत्त्वगतो योऽसौ वासुदेवाभिधो हरिः । स चित्तजन
प्रोक्तः प्राणिनां च पृथक्पृथगि'ति च ॥ २२ ॥ [23]चित्तस्य स्वच्छ
त्वादयः पृथग्गुणा उच्यन्ते स्वच्छत्वमित्यादि । 'स्तिमितोदकचित्ता
रविकारोऽल्पविक्रिये'ति तत्त्वविवेके । 'वृत्तिः स्वभावो वृत्तं च स्थिति
रित्यभिधीयत'इति शब्दनिर्णये । वृत्तिभिर्लक्षणं प्रोक्तमिति स्वाभावि
लक्षणमित्यर्थः ॥ २३ ॥ '[24]ज्ञानप्रधानस्तु महानहङ्कारः क्रियाधिकः
इतरापेक्षया सोऽपि ज्ञानाधिक इतीरित'इति च ॥ २४ ॥ '[26]देवत
धिकृतं यत्तदधिदैवमिति स्मृतमि'ति च । वैकारिकोऽधिदैवमित्या

प्राहुः कालमेके यतोऽभयम् । अहङ्कारविमूढस्य कर्तुः प्रकृतिमीयु
॥ १७ ॥ दैवात् क्षुभितधर्मिण्यां स्वस्यां योनौ परः पुमान् । आध
वीर्यं साऽसूत महत्तत्त्वं हिरण्मयम् ॥ २० ॥ विश्वमात्मगतं व्यञ्ज
कूटस्थो जगदङ्कुरः । स्वतेजसाऽपिबत्तीव्रमात्मप्रस्वापनं तमः ॥ २१
यत्तत्सत्वगुणं स्वच्छं शान्तं भगवतः पदम् । यदाहुर्वासुदेवाख्यं चि
त्तन्महदात्मकम् ॥ २२ ॥ स्वच्छत्वमविकारित्वं शान्तत्वमिति चेतसः
वृत्तिभिर्लक्षणं प्रोक्तं यथापां प्रकृतिः परा ॥ २३ ॥ महत्तत्वाद्विकुर्वाणा
भगवद्वीर्यसम्भवात् । क्रियाशक्तिरहङ्कारस्त्रिविधः समपद्यत ॥ २४
वैकारिकोऽधिदैवं तु बुद्धिः प्राणश्च तैजसः । तामसस्त्वर्थमात्रं



पञ्चम्यर्थे । 'सप्तसु प्रथमा यत्र स्वातन्त्र्यं यद्विवक्षितमि'ति शब्दनिर्णये ॥२६॥ '[28]मनोरूपेण कर्तृत्वं देहरूपेण कार्यता । इन्द्रियात्मतया चैव करणत्वमहङ्कृतेः । यतो मनस्यहंभावस्तस्मात्कर्तृ मनः स्मृतम् । स्वभावकर्तुर्जीवस्य त्वासन्नोपाधि तद्यतः । कर्मज्ञाने करणता यतः करणमिन्द्रियम् । कार्यं देहः समुद्दिष्ट उत्पाद्यत्वात्पुनःपुनरि'ति तत्त्वविवेके ॥ 'शान्तरूपो देवपिता घोरः करणसृड्भतः । तावज्ज्ञानस्याप्रकाशान्मूढो भूतपिता स्मृतः । त्रिरूपोऽयमहङ्कारः शेष इत्येव तं विदुरि'ति तत्त्वविवेके ॥ २८ ॥ [31]द्रव्यस्फुरणे यद्विशेषज्ञानम् । 'सामान्यं मनसा जातं (ज्ञानं) विशेषाद्बुद्धिजं भवेत् ॥३१॥ '[32]अचलः संशयो बुद्धेश्चलो मानस उच्यते । चञ्चला तु स्मृतिर्बुद्धेश्चित्तजैव स्थिरा स्मृतिरि'ति च ॥ 'येन यज्ज्ञायते वस्तु तत्तल्लक्षणमुच्यते । तत्स्वरूपं पृथक्चेति द्विविधं कवयो विदुरि'ति कापिलेये ॥ ३२ ॥ '[37]प्रधानवायुः सूत्रात्मा महता सह जायते । तैजसश्च स्वजः स्पर्श इत्याद्यास्तत्सुताः स्मृताः । तदाविष्टा अन्यजीवास्तदाधाराश्च तद्बलाः' इति च ॥ ३७ ॥ [35]अर्थाश्रयत्वं अर्थविषयत्वम् । 'शब्देनैव यतो ज्ञेयो हरिर्लिङ्गं तु तस्य तत् । स्पर्शाद्यभावात्तन्मात्रा नभसश्चेति कीर्त्यते । स्पर्शादयश्च तन्मात्रा इतरे पूर्वसंस्थितेः । तिष्ठत्येको गुणो भूते प्रत्येकं पञ्चसु स्थितः । शब्दो वर्णात्मको नित्यो ध्वनिराकाशसम्भवः । आकाश एव सूक्ष्मस्तु ध्वनिरित्येव शब्द्यते । स एव व्यज्यमानस्तु भवेत्कर्णैकगोचर'इति

गुणव्यतिकरस्त्रिवृत् ॥ २६ ॥ कर्तृत्वं, करणत्वं च कार्यत्वं चेति लक्षणम् । शान्तघोरविमूढत्वमिति वा स्यादहङ्कृतेः ॥२८॥ तैजसात्तु विकुर्वाणात् बुद्धितत्वमभूत्सति । द्रव्यस्फुरणविज्ञानमिन्द्रियाणामनुग्रहात् ॥ ३१ ॥ संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च । स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तिभिः पृथक् ॥ ३२ ॥ तैजसानीन्द्रियाण्येव क्रियाज्ञानविभागशः । प्राणस्य हि क्रियाशक्तिर्बुद्धेर्विज्ञानशक्तिता ॥ ३३ ॥ अर्थाश्रयत्वं शब्दस्य द्रष्टुर्लिङ्गत्वमेव च । तन्मात्रत्वं च नभसो लक्षणं कवयो विदुः ॥ ३५ ॥ नभसः शब्दतन्मात्रात्कालगत्या विकुर्वतः । स्पर्शोऽ-

च ॥ ३५ ॥ [37]नभसः शब्दतन्मात्राच्छब्दतन्मात्रगुणात् । 'स्पर्शादयोऽपि वाय्वादेः सूक्ष्मावस्था प्रकीर्तिता' इति च । 'सूक्ष्मेन्द्रियाणि सन्त्येव स्युः स्थूलान्यप्यहङ्कृतेः । भूतेभ्यश्चोपचीयन्ते पुनर्ब्रह्मशरीरत'-इति च ॥ ३७ ॥ '[39]प्राप्नोति वायुः सर्वं तु स्वत एव हरेस्तथा । अतः प्राप्तिरिति प्राहुर्वायुं भूतपतिं प्रभुम् । प्रधानवायुरन्येषु नित्याविष्टो यतस्ततः । तद्गुणास्तेषु चोच्यन्ते नीचता नास्य तत्कृते'ति ब्रह्मवैवर्ते । 'स्वरूपमपि कर्मेति विषयत्वादुदीर्यत'इति शब्दनिर्णये ॥ ३९ ॥ [41]व्यक्तिसंस्थात्वं व्यक्तत्वेन स्थितिः । गुणता प्रकाशत्वम् । 'आलोको गुण इत्येव प्रकाशश्चेति कथ्यत'इत्यभिधानम् । 'तेजस्त्वमथ चोग्रत्वं क्रौर्यमित्यपि चोच्यत'इत्यभिधानम् ॥ ४१ ॥ '[45]उदनं बिन्दुभावः स्यात्स्यन्दनं स्रवणं स्मृतिमि'त्यभिधानम् । पृथिव्यग्न्यपेक्षया भूयस्त्वं देहे ॥ ४५ ॥ [48]भावनमुत्पादकत्वम् । 'ब्रह्मस्थानं तु पृथिवी शरीरे ब्रह्मदर्शनादि'ति कापिलेये । सद्विशेषणं विशेषेणव्यक्तत्वम् । 'असदव्यक्तनाम स्याद्व्यक्तं सदिति चोच्यत'इति ब्राह्मे । सर्वसत्वगुणोद्भेदः शरीरे हि सर्वप्राणिनां गुणा व्यज्यन्ते संसारावस्थायाम् । 'शरीरं पार्थिवं ज्ञेयमिन्द्रियाण्यौदकानि तु । तैजसः कोष्ठगो वह्निश्छिद्रमाकाशसम्भवम् । प्राणा वायुमयाः सर्वे प्रत्येकं पञ्चधा पुनरि'ति कापिलेये ॥ ॥ ४८ ॥ '[54]अचेतनाद्यतस्त्वण्डाद्ब्रह्मा समजनि स्फुटम् । अतो

---

भवत्ततो वायुस्त्वक् स्पर्शस्य च सङ्ग्रहः ॥३७॥ चालनं व्यूहनं प्राप्तिर्नेतृत्वं द्रव्यशब्दयोः । सर्वेन्द्रियाणामात्मत्वं वायोः कर्माभिलक्षणम् ॥ ३९ ॥ द्रव्याकृतित्वं गुणता व्यक्तसंस्थात्वमेव च । तेजस्त्वं तेजसः साध्वि रुपमात्रस्य वृत्तयः ॥ ४१ ॥ क्लेदनं पिण्डनं तृप्तिः प्राणनाप्यायनोदनम् । तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमाः ॥ ४५ ॥ भावनं ब्रह्मणः स्थानं धारणं सद्विशेषणम् । सर्वसत्वगुणोद्भेदः पृथिवीवृत्तिलक्षणम् ॥ ४८ ॥ ततस्तेनानुविद्धेभ्यस्तत्वेभ्योऽण्डमचेतनम् । उत्थितं पुरुषो





ब्रह्माण्डमित्याहुर्विराड्ब्रह्मा प्रकाशनादि'ति च ॥ ५४ ॥ '[61]यज्ञनामा तु देवोऽन्यो विज्ञेयः पाददेवता । तदाविष्टो हरिर्नित्यं तमाहुः पाददैवतम् । तस्येन्द्रियाभिमानित्वं कुतः पूर्णमलात्मन'इति च ॥ ६१ ॥ '[64]चैत्योऽपि भगवान्विष्णुरन्तर्यामी चतुर्मुखात् । स्वेच्छया व्यक्तिमगमत्ततोऽसौ ब्रह्मजः स्मृत'इति च ॥ ६४ ॥ '[70]यज्ञान्तस्थः स्वयं पादौ विशन्नोत्थापयद्धरिः । शक्तोऽपि ब्रह्मवाय्वोस्तु बलज्ञप्त्यै जनार्दनः । तत्स्थ उत्थापयामास ब्रह्मदेहं विशन्प्रभुरि'ति च ॥७०॥ [72]ब्रह्मा बृहस्पतिः । 'यस्मिन्ब्रह्मा राजनि पूर्व एती'ति श्रुतिः । 'बृहस्पतिः पुरोधाश्च ब्रह्मा च ब्रह्मणस्पतिरि'त्यभिधानम् ॥ ७२ ॥ '[73]अंशेन सुप्तो ब्रह्माऽपि अंशेन निरगात्तथा । स्वदेहाद्वायुसहितो विष्णुना च जगत्प्रभुः । तमुत्थापयितुं देवास्तानृते त्रीन्महाबलान् । नाशक्नुवुस्त्वेकसंस्थास्ततस्ते त्वविशंस्त्रयः । उदतिष्ठद्ब्रह्मदेहस्तदा तेषां प्रभावतः । विशेषेण हरेरेव प्रभावेन श्रियः पतेः । चित्ताभिमानी ब्रह्मैव क्षेत्रज्ञस्तद्गतो हरिः । प्राणो वायुरिति प्रोक्तस्तयोरीशो हरिः स्वयमि'ति च ॥ ७३ ॥ इति तृतीयतात्पर्ये सप्तविंशोऽध्यायः ॥२७॥

## अष्टाविंशोऽध्यायः

'[5]अज्ञानं सुप्तिशब्दोक्तं स्वप्नश्चैव विपर्यय' इति भारते ॥ ५ ॥

---

यस्मादुदतिष्ठदसौ विराट् ॥ ५४ ॥ हस्तौ च निरभिद्येतां बलं ताभ्यां ततः स्वराट् । पादौ च निरभिद्येतां गतिस्ताभ्यां ततो हरिः ॥ ६१ ॥ मनसश्चन्द्रमा जातो बुद्धिर्बुद्धेर्गिरांपतिः । अहङ्कारस्ततो रुद्रश्चित्तं चैत्यस्ततोऽभवत् ॥ ६४ ॥ विष्णुर्गत्यैव चरणौ नोदतिष्ठत्ततो विराट् । नाडीर्नद्यो लोहितेन नोदतिष्ठत्ततो विराट् ॥ ७० ॥ बुध्या ब्रह्मापि हृदयं नोदतिष्ठत्ततो विराट् । रुद्रोऽभिमत्या हृदयं नोदतिष्ठत्ततो विराट् ॥ ॥ ७२ ॥ चित्तेन हृदयं चैत्यः क्षेत्रज्ञः प्राविशद्यदा । विराट् तदैव पुरुषः सलिलादुदतिष्ठत ॥ ७३ ॥

अष्टाविंशोऽध्यायः

प्रबुध्य स्वप्नसुप्तिभ्यां संसरन्नात्मवैशसम् । वैतथ्यं व्यभिचारं च

[11]बुद्धेरवस्थानं निद्रादि ॥ ११ ॥ [12]असति प्रलये । 'शेषस्य प्रतिबिम्बास्तु देवाः शेषस्तु ब्रह्मणः। स परब्रह्मणश्चैव ते स्वबिम्बप्रदर्शकाः। ततः स्वबिम्बद्वारेण परमात्मप्रदर्शनमि'ति ब्रह्मतर्के ॥ १२ ॥ [14-15]यो विनिद्रः स सत्यदृक् ॥ १४, १५ ॥ [16]यः अनष्टो नष्टवन्नाज्ञासिपमिति मन्यमानः स आतुरो द्रष्टा जीवः ॥ १६ ॥ [17]साहङ्कारं द्रव्यं जीवः तस्यावस्थानमनुग्राहकश्च परमात्मा । 'नित्यदृक्परमात्माऽसौ मृतवद्यो न किञ्चन । जानाति जीवः स ज्ञेयः परमात्मा तदाश्रय'इति हरिवंशेषु ॥ १७ ॥ इति तृतीयतात्पर्ये अष्टाविंशोऽध्यायः ॥ २८ ॥

## एकोनत्रिंशोऽध्यायः

'[1]सबीजो वैष्णवो योगो निर्बीजस्त्वन्यदैवतः । बीजं विष्णुर्हि जगतः शाखाद्याश्चान्यदेवता'इति कौर्मे ॥ १ ॥ '[6]समाधिरप्रयत्नेन मनसः संस्थितिर्भवेदि'ति च । सर्वस्मरणाशक्तावेकाङ्गे । 'यावन्न च्यवते मन'इत्युक्तत्वात् । 'सर्वं स्मर्तुमशक्तः सन्नेकाङ्गं चिन्तयेद्बुध'इति

---

नासौ ध्यायेद्यतो भयम् ॥ ५ ॥ निवृत्तबुध्यवस्थानो दूरीभूतान्यदर्शनः। उपलभ्यात्मनाऽऽत्मानं चक्षुषेवार्कमात्म(मेक)दृक् ॥ ११ ॥ मुक्तलिङ्गः सदाभासमसति प्रतिपद्यते । सतो बन्धुं समं चक्षुः सर्वानुस्यूतमद्वयम् ॥१२॥ एवं त्रिवृदहङ्कारो भूतेन्द्रियमनोगुणैः । स्वाभासैः लक्षितोऽनेन सदाभासेन सत्यदृक् ॥ १४ ॥ भूतसूक्ष्मेन्द्रियमनोबुद्ध्यादिष्विह निद्रया। लीनेषु सत्सु यस्तत्र विनिद्रो निरहङ्क्रियः ॥ १५ ॥ मन्यमानस्तदात्मानमनष्टो नष्टवन्मृषा। नष्टेऽहङ्करणे द्रष्टा नष्टवित्त इवातुरः ॥ ॥ १६ ॥ एवं प्रत्यवमृश्यासावात्मानं प्रतिपद्यते । साहङ्कारस्य द्रव्यस्य योऽवस्थानमनुग्रहः ॥ १७ ॥

### एकोनत्रिंशोऽध्यायः

श्री भगवानुवाच—योगस्य लक्षणं वक्ष्ये सबीजस्य नृपात्मजे। मनो येनैव विधिना प्रसन्नं याति सत्पथम् ॥ १ ॥ स्वधिष्ण्यानामेकदेशे मनसा प्राणधारणम्। वैकुण्ठलीलाभिध्यानं समाधानं तथाऽऽत्मनः



...॥ ६ ॥ '[27]ब्रह्मा चित्ताभिमानेन चैत्यस्तन्नियमाद्धरिः । स च ...हरेः कण्ठे कौस्तुभत्वेन भासत'इति भागवततन्त्रे ॥ २७ ॥ [29]साक्षाच्छ्रीस्तु हरे रूपमिन्दिरा तु तदाश्रयादि'ति च ॥ २९ ॥ [32]न पृथग्दिदृक्षेत् । तमेव दिदृक्षेदित्यर्थः ॥ ३२ ॥ [33]चित्तबडिशवियोगो ध्यानानन्तरसमाधिः ॥ ३२ ॥ [34]मुक्ताश्रयं विष्णुविषयम् । ...चित्तं जीवचैतन्ये ततं निर्वाणमृच्छति । शरीराभिमानं जहाति । ...चिदभिमानेन ॥ ३४ ॥ '[35]असत्कर्ता तु जीवः स्यात्सत्कर्ता परमेश्वर'इति शब्दनिर्णये । 'दुर्दुःखमिति विज्ञेयं खं सुखं च तयो...तः । प्रदाता परमो विष्णुस्तस्माद्दुःखादिनामवानि'ति हरिवंशेषु ॥ ॥ ३५ ॥ [41]अनन्यभावेन तद्रूपाणामभेदेन । तदात्मतां तस्या-

---

॥ ...॥ कीर्तन्यतीर्थयशसं पुण्यश्लोकयशस्करम्। ध्यायेद्देवं समग्राङ्गं ...च्यवते मनः ॥१८॥ स्थितं व्रजन्तमासीनं शयानं वा गुहाशयम्। ...णीयेहितं ध्यायेच्छुद्धभावेन चेतसा ॥ १९ ॥ तस्मिल्लब्धपदं चित्तं ...वयवसंस्थितम्। विलक्ष्यैकत्र संयुज्यादङ्गे भगवतो मुनिः ॥ २० ॥ ...मोदकीं भगवतो दयितां स्मरेत दिग्धामरातिभटशोणितकर्दमेन। ...लां मधुव्रतवरूथगिरोपघुष्टां चैत्यस्य तत्त्वममलं मणिमस्य कण्ठे ॥२७॥ ...श्रीनिकेतमलिभिः परिसेव्यमानं भूत्या स्वया कुटिलकुन्तलवृन्द...म्। मीनद्वयाश्रयमधिक्षिपदब्जनेत्रं ध्यायेन्मनोमयमतन्द्रित उल्ल...॥ २९ ॥ ध्यानायनं रहसि तद्बहुलाधरोष्ठभासारुणायिततनुद्विज...पङ्क्ति । ध्यायेत्स्वहृत्कुहरकेऽवसितस्यविष्णोर्भक्त्याऽऽर्द्रयाऽर्पित...ना न पृथग्दिदृक्षेत् ॥३२॥ एवं हरौ भगवति प्रतिलब्धभावो भक्त्या ...द्धृदयउत्पुलकप्रमोदः। औत्कण्ठ्यबाष्पकलया मुहुरर्द्यमानस्तच्चापि ...बडिशं शनकैर्वियुङ्क्ते ॥ ३३ ॥ मुक्ताश्रयं यर्हि निर्विषयं स्वचित्तं ...र्वाणमृच्छति मनः सहसा यथाऽर्चिः। आत्मानमत्र पुरुषोऽव्यव...मेकमन्वीक्षते प्रतिनिवृत्तगुणप्रवाहः ॥ ३४ ॥ सोऽप्येतया चरमया ...नो निवृत्त्या तस्मिन्महिम्न्यवसितः सुखदुःखबाह्ये। हेतुत्वमप्यसति ...र्तरि दुःखयोर्न स्वात्मन्विधत्त उपलब्धपरात्मकाष्ठः ॥ ३५ ॥ सर्वभूतेषु ...त्मानं सर्वभूतानि चात्मनि । ईक्षेतानन्यभावेन भूतेषु च तदात्मताम् ॥

दानादिकर्तृत्वं च भूतविषये ॥ ४१ ॥ [43]प्रकृतिं पराभाव्य तदुत्तमत्वे
नैव सदावतिष्ठते परः । 'सर्वभूतस्थमीशेशं जेतारं प्रकृतेरपि । अविशे
सदैवैकं चिन्तयन्विप्रमुच्यत'इति च ॥ ४३ ॥ इति तृतीयतात्प
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## त्रिंशोऽध्यायः

[2]यथा साङ्ख्येपूक्तं तथा कथितम् । यत्साङ्ख्यमूलं तल्लक्ष
प्रचक्षते ॥ १, २ ॥ [9]तद्रूपाणां पृथग्भावः ॥ ९ ॥ [10]अपृथग्भाव
स सात्विकः । 'अज्ञोऽर्चयेदेवार्चायामन्यथा दोषवान्भवेत् । ज्ञस्त्वर्च
यन्स गुणवानन्यथा दोषवान्न त्वि'ति कापिलेये ॥१०॥ [26]अन्तरोद
भिन्नं ब्रह्म । आत्मस्थमन्यस्थं च ब्रह्म यो भेदेन पश्यति । 'उद
ब्रह्मे'ति श्रुतेः ॥ २६ ॥ [28]प्राणभृतश्चलनयुक्ताः 'पशुवृक्षादिभेदे
जीवा एव स्वतः स्थिताः । संसृतौ व्यत्ययस्तेषां मुक्तौ तत्तत्स्वरूपता
तत्र स्थावरमुक्तेभ्यो वरा जङ्गममुक्तकाः । तेभ्यो मानुषमुक्ताश्च विप्र
मुक्तास्ततोऽधिकाः । ततोपदेशमात्रेण मुक्तेभ्यो वेदवेदिनः । अर्थज्ञ
ऋषयस्तेभ्योऽतो देवाः संशयच्छिदः । पूर्णधर्मा ततस्त्विन्द्रो निःसङ्ग

---

॥ ४१ ॥ तस्मादिमां स्वां प्रकृतिं देवीं सदसदात्मिकाम् । दुर्विभाव्य
पराभाव्य स्वरूपेणावतिष्ठते ॥ ४३ ॥

### त्रिंशोऽध्यायः

देवहूतिरुवाच—लक्षणं महदादीनां प्रकृतेः पुरुषस्य च । स्वरू
लक्ष्यतेऽमीषां येन तत्पारमार्थिकम् ॥ १ ॥ यथा साङ्ख्येषु कथितं यन्मू
तत्प्रचक्षते । भक्तियोगस्य मे मार्गं ब्रूहि विस्तरशः प्रभो ॥ २ ॥ विषया
नभिसन्धाय यश ऐश्वर्यमेव च । अर्चादावर्चयेद्यो मां पृथग्भावः
राजसः ॥ २ ॥ कर्मनिर्हारमुद्दिश्य परस्मिन् वा तदर्पणम् । यजेद्यष्टव्य
मिति वाऽपृथग्भावः स सात्विकः ॥ १० ॥ आत्मनश्च परस्यापि य
करोत्यन्तरोदरम् । तस्य भिन्नदृशो मृत्युर्विधत्ते भयमुल्बणम् ॥ २६
जीवा श्रेष्ठा ह्यजीवानां ततः प्राणभृतः शुभे । ततः सचित्ताः प्रवरास्त



रुद्रस्ततः । भक्तिपूर्णो हरेर्ब्रह्मा तस्मान्नान्योऽधिकस्ततः । मुक्तौ वा
संसृतौ वापि सम्यगेषु हि ते गुणा इति कापिलेये ॥ २८ ॥ [34]जीव-
कलया सह भूतानि बहुमानयंस्तदालयत्वेनेश्वरं प्रणमेत् ॥ ३४ ॥
[35]एकतरभावेऽन्यतरस्य नियतत्वादेकतरेणैव ॥ ३५ ॥ [36]सर्वकर्माणि
विचेष्टानिमित्तानि तत्कर्म विचेष्टितम् ॥ ३६ ॥ [37]भिन्नदर्शा
परापेक्षयाल्पदृशाम् । 'भिन्नमल्पं विजानीयादभिन्नं पूर्णमिष्यत'इति
शब्दनिर्णये ॥३७॥ '[39]यथायोग्यातिरेकेण न द्वेष्यश्च प्रियो हरेरि'ति
कापिलेये ॥ ३९ ॥ इति तृतीयतात्पर्ये त्रिंशोऽध्यायः ॥ ३० ॥

## एकत्रिंशोऽध्यायः

[13]कीनाशः कर्षको मतः ॥ १३ ॥ [16]उत्तारमुद्गतिं विन्द्यात् ॥
॥ १६ ॥ '[24]त्रिभिर्मुहूर्तैर्द्वाभ्यां वा दिनैर्दशभिरेव वा । पक्षान्मासेन
॥ याति यमलोकमितो गत'इति नारदीये ॥२४॥ [29]अत्रैवेत्येवशब्दः
सामीप्यार्थे । 'सामीप्ये च प्रधाने च एवशब्दोऽवधारण'इति शब्द-

---

न्द्रियवृत्तयः ॥ २८ ॥ मनसैतानि भूतानि प्रणमेद्बहुमानयन् । ईश्वरो
जीवकलया प्रविष्टो भगवानिति ॥ ३४ ॥ भक्तियोगश्च योगश्च मया
मानव्युदीरितः । ययोरेकतरेणैव पुरुषः पुरुषं व्रजेत् ॥ ३५ ॥ यत्त-
द्भगवतो रूपं ब्रह्मणः परमात्मनः । परं प्रधानात्पुरुषाद्दैवं कर्मविचेष्टितम् ॥
॥३६॥ रूपभेदास्पदं दिव्यं काल इत्यभिधीयते । भूतानां महदादीनां यतो
भिन्नदृशां भयम् ॥ ३७ ॥ न चास्य कश्चिद्दयितो न द्वेष्यो न च
बान्धवः । आविशत्यप्रमत्तोऽसौ प्रमत्तं जनमन्तकृत् ॥ ३९ ॥

### एकत्रिंशोऽध्यायः

एवं स्वभरणाकल्पं तत्कलत्रादयस्तदा । नाद्रियन्ते यथापूर्वं कीनाशा
इव गोजरम् ॥ १३ ॥ वायुनोत्क्रमतोत्तारकफसंरुद्धनासिकः । कासश्वास-
कृतायासः कण्ठो घुरुघुरायते ॥ १६ ॥ योजनानां सहस्राणि नवतिर्नव-
चाध्वनः । त्रिभिर्मुहूर्तैर्द्वाभ्यां वा नीतः प्राप्नोति यातनाम् ॥ २४ ॥
अत्रैव नरकः स्वर्ग इति मातः प्रचक्षते । या यातना वै नारक्यस्ता
इहाप्युपलक्षिताः ॥ २९ ॥

निर्णये । अत्राप्यस्तीत्यर्थः ॥ २९ ॥ इति तृतीयतात्पर्ये एकत्रिंशो
ध्यायः ॥ ३१ ॥

## द्वात्रिंशोऽध्यायः

‘[2]नानाविधा गर्भवृद्धिः कर्मभेदाद्भविष्यति । अतो नानावि
ग्रन्थे गर्भसंस्थानमुच्यत’इति षाड्गुण्ये ॥ २ ॥ ‘[12]वभ्रयस्त्विन्द्रियाण्या
हृषीकाणीति चोच्यत’इति शब्दनिर्णये ॥ १२॥ [17]कतमः सुखतमः
॥ १७ ॥ [20]अशरीरवत्परमात्मवत् । परमात्मन एव देहोऽपि तद्व
त्वात् ॥ २० ॥ ‘[12-20]तत्त्वज्ञानं तु देवानां गर्भस्थानां भविष्यति
उत्तमानामृषीणां वाप्यन्येषां बहुजन्मगामि’ति स्कान्दे ॥ १२, २०
[36]खण्डितात्मावसायिषु जीवमात्रज्ञानिषु ॥ ३६ ॥ ‘[40]मयः प्रधा
उद्दिष्टो माया तद्वश उच्यत’ इति षाड्गुण्ये ॥ ४० ॥ ‘[41]सत्पुंसु
तथा स्त्रीषु न सङ्गो दोषमावहेत् । यथायोग्यं गुणायैव दोषकृद्दुष्टजन

---

### द्वात्रिंशोऽध्यायः

कलिलं त्वेकरात्रेण पञ्चरात्रेण बुद्बुदम् । दशाहेन तु कर्क
पेश्यण्डं वा ततः परम् ॥ २ ॥ नाथमानो ऋषिर्भीतः सप्तव
कृताञ्जलिः । स्तुवीत तं विक्लवया वाचा येनोदरेऽर्पितः ॥ १२ ॥
यदेतदधात्कतमः स देवस्त्रैकालिकं स्थिरचरेष्वनुवर्तितांशः ।
जीवकर्मपदवीमनुवर्तमानास्तापत्रयोपशमनाय वयं भजेम ॥ १७ ॥ प
त्ययं धिषणया ननु सप्तवध्रिः शारीरभेदमशरीरवदस्य देहे । यद्दत्त
स तमहं पुरुषं पुराणं पश्ये बहिर्हृदि च चैत्यमिव प्रतीपम् ॥ २०
तेष्वशान्तेषु मूढेषु खण्डितात्मावसायिषु । सङ्गं न कुर्याच्छोच्ये
योषित्क्रीडामृगेषु च ॥ ३६ ॥ तत्सृष्टिसृष्टसृष्टेषु को न्वखण्डितधी
पुमान् । ऋषिं नारायणमृते योषिन्मय्येह (य्यात्म) मायया ॥ ३९
बलं मे पश्य मायायाः स्त्रीमय्या जयिनो दिशाम् । या करोति प
क्रान्तान् भ्रूविजृम्भेण केवलम् ॥ ४० ॥ सङ्गं न कुर्यात्प्रमदासु जा
योगस्य पारं परमारुरुक्षुः । मत्सेवया प्रतिलब्धात्मलाभो(भावो) वद



ध्वि’ति वाराहे ॥ ४१ ॥ [45]जीवभूतेन जीवकर्मभूतेन ॥ ४५ ॥
[48]चक्षुःसकाशाद्द्रष्टुर्द्रष्टृत्वमक्ष्णोर्योग्यता ॥४८॥ [50]केवलं ज्ञानं पुरुषार्थः ।
देहादिष्वसङ्गिनो जीवस्य तन्निमित्तसुखदुःखादयो न सन्ति किमुत देह-
स्याचेतनत्वात् ॥ ५० ॥ इति तृतीयतात्पर्ये द्वात्रिंशोऽध्यायः ॥३२॥

## त्रयस्त्रिंशोऽध्यायः

‘[3]ईषद्भक्तो भगवति सुकर्मा स्वर्गमेष्यति । अभक्तो निरयं
याति सुकर्माऽपि न संशय’इति वामने ॥ ३ ॥ ‘[12]अभिमानेन पूर्ण-

---

र्या निरयद्वारमस्य ॥ ४१ ॥ देहेन जीवभूतेन लोकाल्लोकमनुव्रजन् ।
भुञ्जान एव कर्माणि करोत्यविरतं पुमान् ॥ ४५ ॥ यथाऽक्ष्णोर्द्रव्यावयव-
दर्शनायोग्यता यदा । तदैव चक्षुषो द्रष्टुर्द्रष्टृत्वं योग्यताऽनयोः ॥ ४८ ॥
आत्मनः केवलं ज्ञानमर्थो देहाद्यसङ्गिनः । सुखदुःखादयो भावा न देहस्य
न चात्मनः ॥ ५० ॥

### त्रयस्त्रिंशोऽध्यायः

श्री भगवानुवाच–अथ गृहमेधीयान् धर्मानेवावसन् गृहे । धर्ममर्थं
च कामं च दोग्धि भूयः पिपर्ति तान् ॥ १ ॥ स चापि भगवद्धर्मात्काम-
मूढः पराङ्मुखः । यजते क्रतुभिर्देवान् पितॄंश्च श्रद्धयाऽन्वितः ॥ २ ॥
तच्छ्रद्धयाऽऽक्रान्तमतिः पितृदेवव्रतः पुमान् । गत्वा चान्द्रमसं लोकं
सोमपाः पुनरेष्यति ॥ ३ ॥ यदा चाहीन्द्रशय्यायां शेतेऽनन्तासनो
हरिः । तदा लोका लयं यान्ति त एते गृहमेधिनाम् ॥ ४ ॥ ये स्वधर्मं
न दुह्यन्ति धीराः कामार्थहेतवे । निःसङ्गा न्यस्तकर्माणः प्रशान्ताः
शुद्धचेतसः ॥ ५ ॥ निवृत्तिधर्मनिरता निर्ममा निरहङ्कृताः । स्वधर्मा-
ख्येन सत्वेन परिशुद्धेन चेतसा ॥ ६ ॥ सूर्यद्वारेण ते यान्ति पुरुषं
विश्वतोमुखम् । परावरेशं प्रकृतिमस्योत्पत्त्यन्तभावनम् ॥७॥ द्विपरार्धा-
वसाने यः प्रलयो ब्रह्मणस्तु ते । तावदध्यासते लोके परस्य परि-
चिन्तकाः ॥ ८ ॥ क्ष्माऽम्भोऽनलानिलवियन्मनइन्द्रियार्थभूतादिभिः
परिवृतः प्रतिसञ्जिहीर्षुः । अव्याकृतं विशति यर्हि गुणत्रयात्मा कालं परं
ख्यमनुभूय परः स्वयम्भूः ॥ ९ ॥ एवं परेत्य भगवन्तमनुप्रविष्टा ये
योगिनो जितमरुन्मनसो विरागाः । तेनैव साकममृतं पुरुषं पुराणं ब्रह्म

ज्ञानेन ॥ १२ ॥ [13]सङ्कल्य लये परमेश्वरं प्रविश्य । यथापूर्वं प्रजायते उच्चनीचादिभावेन जायते। अगुणव्यतिकरे बहिः श्वेतद्वीपे निर्गच्छति॥ ॥ १३ ॥ '[14]गुणव्यतिकराभावेऽप्युच्चनीचादिपूर्ववत् । विष्णोश्चैव विमुक्तानां न कदाचन गच्छती'ति गारुडे। गुणव्यतिकरे असति। प्रलये प्राप्ते पुनः परमेश्वरमायान्ति ॥ १४ ॥ '[13]ब्रह्मा देवैः परिवृतः प्रलये परमेश्वरम् । प्रविश्य सर्गे तु पुनः श्वेतद्वीपे प्रमोदते ॥ [14]ज्ञानधर्मफलांस्तत्र भोगान्भुक्त्वा लये पुनः। नारायणं समाविश्य ज्ञानं व्यक्तं निजं सुखम् । भुञ्जते त्वेवमेवैषां काले संसर्गनिर्गमौ । नित्यां नित्यसुखं चैव सृष्टौ भोगास्तथोत्तमाः । यथापूर्वं हरेः सर्वगुणैर्नीचोच्चता तथा। ब्रह्मणश्च तथान्येषामन्येषां च यथापदमि'ति स्कान्दे ॥ १३, १४॥ '[21]अत्यल्पभक्ता विष्णौ च सदा श्राद्धादिकारिणः । पितृलोकं समाविश्य स्वसन्ताने पुनःपुनः । [19]क्षिप्रमेव प्रजायन्ते ये तु भक्तिविवर्जिताः । अन्यसामान्यवेत्तारस्तदन्योत्तमवेदिनः । तद्भक्तिनिन्दकाश्चैव यान्त्येव निरयं ध्रुवम्। अपि धर्मैकनियमा नात्र कार्या विचारणे'ति च ॥ [21]मुक्तियोग्यास्तु देवाद्या मानुषा यज्ञभोगिनः । मनुष्यभेदाः श्राद्धादिकृतो विद्वेषिणोऽसुरा' इति च ॥१७,२१॥ '[28]मत्स्यकूर्मादिरूपं च विष्णोर्ज्ञानैकमात्रकम्। तन्मन्यन्ते भौतिकं तु ये गच्छन्त्यधरं तम'-

---

प्रधानमुपयान्त्यगताभिमानाः ॥ १० ॥ आद्यः स्थिरचराणां यो वेदगर्भः महर्षिभिः। योगेश्वरैः कुमाराद्यैः सिद्धैर्योगप्रवर्तकैः ॥११॥ भेददृष्ट्याऽभिमानेन निःसङ्गेनापि कर्मणा। कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभम्॥ ॥ १२ ॥ स सङ्कल्य पुनः काले कालेनेश्वरमूर्तिना। जातेऽगुणव्यतिकरे यथापूर्वं प्रजायते ॥ १३ ॥ ऐश्वर्यं पारमेष्ठ्यं तत्तेऽपि धर्मविनिर्मितम्। निषेव्य पुनरायान्ति गुणव्यतिकरे सति ॥ १४ ॥ ये त्विहासक्तमनसः कर्मसु श्रद्धयान्विताः। कुर्वन्त्यप्रतिषिद्धानि नित्यान्यपि च कृत्स्नशः॥१६॥ ततस्ते क्षीणसुकृताः पुनर्लोकमिमं सति। पतन्ति विवशा देवैः सद्यो विभ्रंशितोदयाः ॥ २१ ॥ ज्ञानमेकं पराचीनैरिन्द्रियैर्ब्रह्म निर्गुणम्। अव-





इति ब्राह्मे ॥ २८ ॥ '[29]एकादशेन्द्रियात्मा च पञ्चभूतात्मकस्तथा । सर्वाभिमानी भगवान्स्वराडिन्द्रः पुरन्दरः । इदमण्डं जगत्सर्वं शक्रदेहं विदुर्बुधाः । तत्पतिस्त्रिगुणो रुद्रस्तस्य ब्रह्मा ततो हरिरि'ति वामने ॥ यथैतान्पश्यन्ति तद्वदेव ज्ञानात्मकं मत्स्यादिरूपं पश्यन्त्यज्ञाः ॥ ॥ २९ ॥ '[32]ज्ञानभक्ती विना नैव मुक्तिः कस्यापि विद्यते । तयोरेकतरेणापि विष्णुगेनोभयं विना। एवमप्येतयोरेकभावेऽन्यनियतेर्ध्रुवम्। एकेनापि भवेन्मुक्तिस्तदर्थं त्वन्यसाधनमि'ति हरिवंशेषु ॥ ३२ ॥ इति तृतीयतात्पर्ये त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

## चतुस्त्रिंशोऽध्यायः

[2]भूतेन्द्रियार्थात्ममयं तेभ्यः प्रधानम् । 'त्वं प्रधानमयो देव प्रधानादधिको यत'इति वाराहे ॥२॥ [5]देहतन्त्रः देहप्रकाशः । 'ततिः प्रकाशो विस्तारस्तन्त्रं चेत्यभिधीयत'इति तन्त्रमालायाम् ॥ ५ ॥ '[27]जीवोपाधिप्रभृतय आमुक्तेः सर्वदेहिनाम् । नियमात्सन्त्यभावस्तु निष्फलत्वादुदीर्यत'इति वाराहे ॥ २७ ॥ इति श्रीमद्भागवततृतीयस्कन्धतात्पर्ये श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते चतुस्त्रिंशोऽध्यायः समाप्तः ॥ ३४ ॥ तृतीयस्कन्धः सम्पूर्णः ॥

---

ात्यर्थरूपेण भ्रान्त्याशब्दादिधर्मिणाम् ॥ २८ ॥ यथा महानहङ्कारस्त्रि-
ृत्पञ्चविधः स्वराट् । एकादशविधस्तस्य वपुरण्डं जगद्यतः ॥ २९ ॥ ानं योगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः । द्वयोरप्येक एवार्थो ागवच्छब्दलक्षणः ॥ ३२ ॥

### चतुस्त्रिंशोऽध्यायः

देवहूतिरुवाच—अथाप्ययान्ते सलिले शयानं भूतेन्द्रियार्थात्ममयं वपुस्ते । गुणप्रवाहं सदशेषबीजं दध्यौ स्वयं यज्जठराब्जजातः ॥ २ ॥ ं देहतन्त्रः प्रशमाय पाप्मनां निदेशभाजां च विभो विभूतये । यथावतारास्तव सूकरादयस्तथाऽयमप्यात्मपथोपलब्धये ॥५॥ ब्रह्मण्यवस्थितमतिर्भगवत्यात्मसंश्रये । निवृत्तजीवभावत्वात् क्षीणक्लेशाऽऽप्तनिर्वृतिः ॥ २६ ॥

## चतुर्थः स्कन्धः

### प्रथमोऽध्यायः

॥ श्रीवेदव्यासाय नमः ॥ 'पुनःपुनः कथां प्राहुरभ्यासादुत्तमं फलम् । विज्ञापयितुकामास्तु विद्वांसस्तत्रतत्र त्वि'त्याग्नेये ॥ १ ॥ '[28]ब्रह्मस्थश्चैव रुद्रस्थः स्वयं चापि हरिः प्रभुः । प्रजां त्रिपुरुषसमां यच्छत्वित्यत्रिरैच्छत । तस्मात्सब्रह्मरुद्राभ्यां सह विष्णुर्जगत्पतिः । आगत्य तु त्रिमूर्त्यंशान्पुत्रान्प्रादाज्जनार्दनः । भावित्वाच्चैव कार्यस्य लोकानां मोहनाय चे'ति ब्रह्मवैवर्ते ॥ १७, २२ ॥ [30]तत्स्थविष्ण्वपेक्षया ते वयमिति ॥ २८-३० ॥ '[33]ब्रह्मणो नावतारोऽस्ति सन्निधानं तु केवलम् । ऋते विष्णोरात्मनश्च तदंशोक्तिः प्रवेशत'इति च । 'सृष्टिभेदाद्विरूपं तु कथा पञ्चोत्तरं शतम् । वैरूप्यमन्यद्विज्ञेयं तात्पर्यान्मोहनाय'चेति स्कान्दे । 'ऋते तु पाण्डवकथां कार्ष्णां रामायणं तथा । विष्णोर्ब्रह्मादिनां चैव क्रमाद्व्यत्यस्तशक्तिताम् । एतदापादकं चान्यद्दते

---

## चतुर्थः स्कन्धः

### प्रथमोऽध्यायः

मैत्रेय उवाच—मनोस्तु शतरूपायां तिस्रः कन्याश्च जज्ञिरे । आकूतिर्देवहूतिश्च प्रसूतिरिति विश्रुताः ॥ १ ॥ मैत्रेय उवाच—ब्रह्मणा चोदितः सृष्टावत्रिर्ब्रह्मविदांवर । सह पत्न्या ययौ ऋक्षं कुलाद्रिं तपसि स्थितः ॥ ॥ १७ ॥ अप्सरोमुनिगन्धर्वसिद्धविद्याधरोरगैः । वितायमानयशसो मुदाऽऽश्रमपदं ययुः ॥ २२ ॥ एको मयेह भगवान् विबुधप्रधानश्चित्तीकृतः प्रजननाय कथं नु यूयम् । अत्रागतास्तनुभृतां मनसोऽपि दूरा ब्रूत प्रसीदत महानतिविस्मयो मे ॥ २८ ॥ मैत्रेय उवाच—इति तस्य वचः श्रुत्वा त्रयस्ते विबुधर्षभाः । प्रत्यूचुः श्लक्ष्णया वाचा प्रहसन्तो मुनिं प्रभो ॥ २९ ॥ देवा ऊचुः—यथा कृतस्ते सङ्कल्पो भाव्यं तेनैव नान्यथा । तत् सङ्कल्पस्य ते ब्रह्मन् यद्वै ध्यायसि ते वयम् ॥ ३० ॥ सोमोऽभूद्ब्रह्मणोंऽशेन दत्तो विष्णोस्तु योगवित् । दुर्वासाः शङ्करस्यांऽशो



ल्पादिभेदतः । कथाभेदस्तु विज्ञेयो मोहायैतेषु भिन्नते'ति वाराहे ॥ ३३ ॥ '[59]नरे विष्णुः समाविष्टः स्वयं नारायणो हरिः । अर्जुने च नरावेशः कृष्णो नारायणः स्वयमि'ति तत्त्वविवेके । खे रूपभेदो (वाय्वादिकः)ऽभ्रादिः । 'यथाकाशस्थितो नित्यमि'त्यादि च । 'यथाकाशे विमानादिरूपभेदः प्रतीयते । तथा हरौ जगदिदं तत्सामर्थ्यात्प्रतीयत'इति ब्राह्मे ॥ ५६, ५९ ॥ [66]अप्रौढेव अस्वीकृतेव ॥ ६६ ॥ इति चतुर्थतात्पर्ये प्रथमोऽध्यायः ॥ १ ॥

### द्वितीयोऽध्यायः

'[22]ये ज्ञानविषयाः शापा मुक्तिगास्तेऽधिकारिणाम् । कादाचित्कास्ते भवन्ति नैव ते सार्वकालिकाः । तेषां ज्ञानस्य मुक्तेश्च तारतम्यस्य चैव हि । भगवन्नियतत्वात्तु शापादिर्नात्र कारणमि'ति वाराहे ॥ २२ ॥ '[26]गिरिः प्राणः समुद्दिष्टस्तत्सुता वेदवाक्स्मृता । पुष्पं स्वर्गादयः प्रोक्ताः फलं मोक्ष उदाहृतमि'ति वामने ॥ 'अनङ्गो मन्मथो मन्था कामोऽङ्गज उदाहृत'इति शब्दनिर्णये ॥ २६ ॥ इति चतुर्थतात्पर्ये द्वितीयोऽध्यायः ॥ २ ॥

---

थाङ्गिरसः प्रजाः ॥ ३३ ॥ देवा ऊचुः—यो मायया विरचितं निजमात्मनीदं खेरूपभेदमिव तत्प्रतिचक्षणाय । एतेन धर्मसदने ऋषिमूर्तिनाऽद्यप्रादुश्चकार पुरुषाय नमः परस्मै ॥ ५६ ॥ ताविमौ वै भगवतो हरेरंशाविहागतौ । भारव्ययाय च भुवः कृष्णौ यदुकुरूद्वहौ ॥५९॥ र्थप्रतिरूपे स्वे भवायानागसे रुषा । अप्रौढेवात्मनाऽऽत्मानहाद्योगसंयुता ॥ ६६ ॥

### द्वितीयोऽध्यायः

नन्दिरुवाच—य एतन्मर्त्यमुद्दिश्य भगवत्यप्रतिद्रुहि । द्रुह्यत्यज्ञः दृष्टिस्तत्त्वतो विमुखो भवेत् ॥ २२ ॥ गिरेः सुतायाः पुष्पिण्या न भूरिणा । मथ्ना चोन्मथितात्मानः सम्मुह्यन्तु सुर ॥ २६ ॥

## तृतीयोऽध्यायः

[23]विशेषेण धीयते चिन्त्यते । 'रुद्रेण धीयते विष्णुर्विष्णोर्ध्येय न कश्चने'ति ब्रह्मवैवर्ते ॥२३॥ इति चतुर्थतात्पर्ये तृतीयोऽध्यायः ॥३

## चतुर्थोऽध्यायः

[15]ब्रह्मरसासवार्थिभिः शिष्याणां मनोऽलिभिः । 'सनकाद्य रुद्रशिष्यास्तेषामन्ये तु योगिनः । ब्रह्मशिष्यस्तथा रुद्रो ब्र नारायणस्य चे'ति ब्राह्मे ॥ १५ ॥ [16]ब्रह्मादयो ब्रह्मपुत्राः । 'सुप शेषप्राणेशब्रह्मविष्णून्गिरां श्रियम् । ऋते नमन्ति नो रुद्रं क प पुरुषार्थभागि'ति गारुडे ॥ १६ ॥ [20]आब्रह्मणि सम्यग्ज्ञानिनि 'आब्रह्मस्थितधीर्जीवन्मुक्तश्चेत्यभिधीयते । यस्तस्य न निवृत्तं च प्रवृ कर्म चेष्यते । यत्तु देवाः प्रकुर्वन्ति स महानियमः स्मृतः । स्वग द्यर्थं प्रवृत्तं स्यान्निवृत्तं मुक्तये तु यत् । स महानियमो नाम क यत्त्वाधिकारिकम् । महतो नियमाद्विष्णोः प्रीत्या मुक्तौ सुखोन्नतिः केचिन्निवृत्तमित्याहुर्महानियममप्युते'ति भविष्यत्पुराणे ॥ 'य देवाश्च ऋष्याद्या निन्द्यन्ते यत्र कुत्रचित् । न तावता गुणैर्हीनाः स्थि

---

### तृतीयोऽध्यायः

सत्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृतः । स च यस्मिन् भगवान् वासुदेवोत्त्वधोक्षजो मे मनसा विधीयते ॥ २३ ॥

### चतुर्थोऽध्यायः

यत्पादपद्मं महतां मनोऽलिभिर्निषेवितं ब्रह्मरसासवार्थिभि लोकस्य यद्वर्षति चाशिषोऽर्थिनस्तस्मै भवान् द्रुह्यति विश्वबन्धवे ॥१ किं वा शिवाख्यमशिवं न विदुस्त्वदन्ये ब्रह्मादयस्तमवकीर्य ज श्मशाने । तन्माल्यभस्मनृकपाल्यवसत्पिशाचैर्ये मूर्धभिर्दधति तच्चरणा सृष्टम् ॥ १६ ॥ कर्म प्रवृत्तं च निवृत्तमप्युत (ऋतं) वेदे विविच्य



ता हि ते मताः । यथायोग्यं तु तात्पर्यं निन्दाया अन्यदेव त्वि'ति गारुडे ॥ २० ॥ इति चतुर्थतात्पर्ये चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः

[4]न चापरं तस्मादवरं न चिन्तयती । परन्तु विष्ण्वादिकं चिन्तयती चशब्दात् । 'रुद्रं च ब्रह्मवायू च विष्णुं चैव श्रियं गिरम् । उमा चिन्तयती देहं तत्याजान्यं न चास्मरदि'ति तत्त्वनिर्णये ॥ ४ ॥ इति चतुर्थतात्पर्ये पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः

'[26]वीरभद्राख्यरूपेण स्वेन पूर्वं ययौ हरः । मूलरूपेण पश्चात्तु गत्वा दक्षमथावधीत् । तत्रोपेन्द्रेण हरिणा जितो धर्मात्मजेन च । अन्याक्षिगाय प्रययौ कैलासं स्वं निकेतनमि'ति ब्राह्मे ॥ २२-२४ ॥ इति चतुर्थतात्पर्ये षष्ठोऽध्यायः ॥ ६ ॥

---

यलिङ्गमाश्रितम् । विरोधि तद्यागपदेककर्तरि द्वयं तथाऽऽब्रह्मणि कर्म र्षति ॥ २० ॥

### पञ्चमोऽध्यायः

ततः स्वभर्तुश्चरणाम्बुजासवं जगद्गुरोश्चिन्तयती न चापरम् । ददर्श देहे हतकल्मषा सती सद्यः प्रजज्वाल समाधिजाग्निना ॥ ४ ॥

### षष्ठोऽध्यायः

आक्रम्योरसि दक्षस्य शितधारेण हेतिना । छिन्दन्नपि तदु- त्तु नाशक्नोत्त्र्यम्बकस्तदा ॥ २२ ॥ शस्त्रैरस्त्रान्वितैरेनमनिर्भिन्नत्वचं हरः । विस्मयं परमापन्नो दध्यौ पशुपतिश्चिरम् ॥ २३ ॥ दृष्ट्वा संज्ञपने योगं पशूनां स पतिर्मखे । यजमानपशोः कस्य कायात्तेनाहर- च्छिरः ॥ २४ ॥

## सप्तमोऽध्यायः

[3]त्रिमूर्तिगेन रूपेण नारायणो नाययौ ॥ ३ ॥ [7]यज्ञ इन्द्र
'यज्ञो यज्ञपतिस्त्विन्द्रः पुरुहूतः पुरुष्टुत'इत्यभिधानम् । तस्यात्मतन्त्रस्य
तस्य विष्णोर्मनोवशस्य । 'नाहं चेन्द्रो न चैवान्ये यत्तत्त्वं न वि
परम् । तस्य विष्णोर्वशे रुद्रो मम वायोरथापि वा । नान्यस्य कस्य
चित्पुंसस्तस्येत्थं वः कुतः कृतमि'ति ब्रह्मवैवर्ते । 'मुमुक्षवो ब्रह्मण
शिवादिन्द्रादिभिस्तथा । श्रुत्वा ज्ञानं परं गुह्यं मुच्यन्ते ब्रह्मणा सहे'
कौर्मे ॥ ७ ॥ [40]महत्तमस्तेजस्वितमोऽर्कस्य सकाशादपि । 'तेजो
उत्तमार्थे च पूज्यार्थे च प्रयुज्यते । महच्छब्दो महःशब्दो मान्यशब्
स्तथैव चे'ति शब्दनिर्णये ॥ ४० ॥ [43]अन्तर्याम्यपेक्षया शक्तेः शिव
च परमिति । 'क्रियन्ते स्तुतयोऽन्यत्र तदन्तर्याम्यपेक्षया । न जीवे
गुणाः पूर्णा यथायोग्या हि तद्गता'इति ब्राह्मे । 'तद्वशत्वात्स्वरूपं
विष्णोः सर्वमुदीर्यते । स्वरूपं स च सर्वत्र बिम्बत्वादेव तूच्यते
साक्षात्स्वरूपं मत्स्याद्या विष्णोर्नान्यत्कथञ्चन । तस्मादन्यगता दोषा
तस्मिन्पुरुषोत्तम'इति तत्त्वनिर्णये ॥४२,४३॥ [44]अभिपत्तये प्रतीकाराय

---

### सप्तमोऽध्यायः

सञ्छिन्नभिन्नसर्वाङ्गाः सर्त्विक्सभ्याः समाकुलाः । स्वयम्भु
नमस्कृत्य कात्स्न्र्येनैतन्न्यवेदयन् ॥ २ ॥ उपलभ्य पुरैवैतद्भगवान
सम्भवः । नारायणश्च विश्वात्मा न कस्याध्वरमीयतुः ॥ ३ ॥ नाहं
यज्ञो न च यूयमन्ये ये देहभाजो मुनयश्च तत्वम् । विदुः प्रमा
बलवीर्ययोर्वा तस्यात्मतन्त्रस्य क उद्विधित्सेत् ॥ ७ ॥ स तूपलभ्याग
मात्मयोनिं सुरासुरेशैरभिवन्दिताङ्घ्रिः । उत्थाय चक्रे शिरसाभिवन्द
महत्तमोऽर्कस्य यथैव विष्णोः ॥ ४० ॥ श्री ब्रह्मोवाच—जाने त्वामी
विश्वस्य जगतो योनिबीजयोः । शक्तेः शिवस्य च परं यत्तद्
निरन्तरम् ॥ ४२ ॥ त्वमेव भगवन्नेतच्छिवशक्त्योः स्वरूपयोः । वि
सृजसि पास्यत्सि क्रीडयोर्णपदो यथा ॥ ४३ ॥ त्वमेव धर्मार्थदुघाऽभि



त्रेण दोषसूचकेन ॥ ४४ ॥ [46]तव त्वाम् । 'चतुर्थ्यै षष्ठी'ति सूत्रात् ॥
'विष्ण्वधीना जगत्सत्ता प्रतीतिश्चेष्टितं गतिः । इति यन्नियतं ज्ञान-
मपृथग्दर्शनं स्मृतम् । मिथ्याज्ञानं पृथग्ज्ञानमिति वेदविदो विदुः ।
यथार्थस्तथाज्ञानमपृथग्दृष्टिरुच्यत' इति गारुडे ॥ ४६ ॥ [48]यदा
यस्मात् । 'हृदयस्य द्रवीभावस्त्वनुकम्पेति कथ्यते । उपकारं कर्तुमिच्छा
कृपेत्याहुर्मनीषिण' इति शब्दनिर्णये ॥४८॥ [49]मायया विष्ण्वधीनया
बन्धकशक्त्या । 'विष्णुमाया हरेरिच्छा बन्धशक्तिश्च तद्वशा । सर्वत्रगा
हरेरिच्छा बन्धशक्तिर्ज्ञवर्जिते'ति शब्दनिर्णये ॥४९॥ इति चतुर्थतात्पर्ये
सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः

'[26]उत्पत्तिर्हिहरिरूपाणां व्यक्तिरेव न संशयः । उत्पत्तिरेव
जीवानां देहोत्पत्तिरितीर्यत'इति तत्त्वनिर्णये । 'जडमाया न तस्यास्ति
शरीरत्वेन कुत्रचित् । सृष्ट्वा तया शरीराणि तत्स्थितेः पुरुषः स्मृतः ।

---

ये दक्षेण सूत्रेण विसर्जिताध्वरः । त्वयैव लोकेऽवसिताश्च सेतवो यान्
ब्राह्मणाः श्रद्दधते धृतव्रताः ॥४४॥ न वै सतां त्वच्चरणार्पितात्मनां भूतेषु
सर्वेष्वभिपश्यतां तव । भूतानि चात्मन्यपृथग्दिदृक्षतां प्रायेण रोषोऽभिभवे-
यथा पशोः ॥४६॥ पृथग्दृशः कर्मदृशो दुराशयाः परोदयेनार्पितहृद्रुजोऽ-
निशम् । परान् दुरुक्तैर्वितुदन्त्यरुन्तुदास्तान् मावधीद्दैव भवान् पृथ-
ग्विधान् ॥४७॥ येऽस्मिन्यदा पुष्करनाभमायया दुर्लङ्घ्यया स्पृष्टधियः पृथ-
ग्दृशः । कुर्वन्ति तत्र ह्यनुकम्पया कृपां न साधवो दैवबलात् कृताः
क्रमम् ॥ ४८ ॥ भवान् हि पुंसः परमस्य मायया दुरन्तयाऽस्पृष्टमतिः
समस्तदृक् । तया हतात्मस्वनुकर्मचेतः स्वनुग्रहं कर्तुमिहार्हसि प्रभो ॥
॥ ४९ ॥

### अष्टमोऽध्यायः

अप्यर्वाग्वृत्तयो यस्य महित्वे स्वभुवादयः । यथामति गृणन्ति
ते कृतानुग्रहविग्रहम् ॥ २४ ॥ दक्ष उवाच—शुद्धं स्वधाम्न्युपरताखिल-
बुद्ध्यवस्थं चिन्मात्रमेकमभयं प्रतिषिध्य मायाम् । तिष्ठंस्तयैव पुरुषत्व-

मायामयशरीरायामपि विष्णुः स्वयं स्थितः । तस्मात्प्राकृत इत्येव जीववत्
वदन्ति हि । अदृष्टत्वेऽपि तद्धर्मस्तद्गत्वादेव कारणादि'ति तत्त्वविवेके ।
॥ २६ ॥ '[27]अधिदैवं उत्तमदैवम् । यद्यज्ञभागार्थं यज्ञभुग्देवताशरीरे
आस्थाः । 'भुङ्क्ते यज्ञभुजो देवानाविश्य पुरुषोत्तम'इति च ॥ २७ ॥
[29]आशिषोऽपि तत एव भवन्तीत्यतश्चशब्दः ॥ २९ ॥ '[31]अव्यक्तादि
पदार्थानां विशेषज्ञानिनाऽपि तु । न देहो वैष्णवो ज्ञेय आनन्द
प्राकृतो न ही'ति तन्त्रसारे । पदार्थभेदग्रहः पदार्थविशेषज्ञः
'भेदोऽन्तरं विशेषश्च सूक्ष्मेक्षा चाभिधीयत'इति तत्त्वनिर्णये ॥ ३१ ॥
[34]ईश्वरान् ॥ ३४ ॥ [37]माया ह्येषा भवदीया । भगवत्सामर्थ्यमेव
'भगवन्महिमैवासौ यद्दृश्यो भगवान्स्वयमि'ति च ॥३७॥ [38]न पृथग
आत्मनः । अन्यथा यो न पश्यति । 'पृथग्ज्ञानं तदित्याहुर्यत्किञ्चि
द्वीक्ष्यतेऽन्यथा । ज्ञानज्ञेयाविरोधेन त्वपृथग्वस्तुनो दृशिः । केचिद्भे
विनिन्दन्ति ह्यासुरज्ञानवृत्तयः । निराकुर्वन्त्यथो मन्दा भेदस्य परमार्थ
ताम् । ये तु तत्त्वविदो मुख्या भेदं ब्रह्मान्यवस्तुनोः । परमार्थमि

मुपेत्य तस्यामास्ते भवानपरिशुद्धमिवामनन्ति ॥ २६ ॥ ऋत्विज ऊचुः—
तत्त्वं न ते वयमनञ्जनरुद्रशापात् कर्मण्यवग्रहधियो भगवन्विदामः
धर्मोपलक्षणमिदं त्रिवृदध्वराख्यं ज्ञातं यदर्थमधिदैवमदस्त्वमास्थाः
॥ २७ ॥ रुद्र उवाच—तव वरद वराङ्घ्रावाशिषा चानभिध्ये ह्या
मुनिभिस्सक्तैरादरेणार्हणीये । यदि रचितधियं मां विद्धि लोकापवि
जगति न गणयेयं त्वत्परानुग्रहेण ॥२९॥ नैतत्स्वरूपं भवतोऽसौ पदार्थ
भेदग्रहः पुरुषो यावदीक्षेत् । ज्ञानस्य चार्थस्य गुणस्य चाश्रया(सतो
न्मायामयाद्व्यतिरिक्तो यतस्त्वम् ॥ ३१ ॥ ऋषय ऊचुः—अनन्वितं
भगवन्विचेष्टितं यदात्मना चरसि हि कर्म नाज्यसे । विभूतयो य
उपसेदुरीश्वरान्न मन्यते स्वयमनुवर्तिनीं भवान् ॥ ३४ ॥ लोकपाल
ऊचुः—दृष्टं किं नो दृग्भिरसद्ग्रहैस्त्वं प्रत्यग्द्रष्टा दृश्यते येन विश्वम्
माया ह्येषा भवदीया हि भूमन् यस्त्वं षष्ठः पञ्चभिर्भासि भूतैः ॥ ३७ ॥
योगेश्वरा ऊचुः—प्रेयान्न तेऽन्योऽस्त्यमृतप्रिय प्रभो विश्वात्मनीक्षे





ज्ञात्वा नित्यं विष्णुमुपासत'इति गारुडे । हे भृत्येश । तयाऽनन्य-
वृत्त्योपधावतामस्माकमनुग्रहोऽस्त्येव । तथापि पुनरनुगृहाण । 'यथार्थ-
ज्ञानिनो नान्यः प्रियो विष्णोस्तु कश्चन । तथाप्यधिकसन्तुष्टयै प्रसीदे-
त्यर्थनं पुनरि'ति च ॥ ३८ ॥ '[39]प्रकृत्या जडया मिथ्याज्ञानं
जनयतीश्वरः । तस्य भ्रमश्च सत्वाद्या न सन्ति परमेशितुरि'ति च ॥
॥ ३९ ॥ '[41]यज्ञो यज्ञपुमांश्चैव यज्ञेशो यज्ञभावनः । यज्ञभुक्चेति
पञ्चात्मा यज्ञेष्विज्यो हरिः स्वयम् । आश्रावयास्तुश्रौषड्यजाथो येयजा-
महे । वषट्कारान्तकैर्नित्यं यजुर्भिः पञ्चभिर्विभुरि'ति तन्त्रसारे ॥४१॥
'[45]सर्वशब्दाभिधेयत्वं सर्वान्तर्यामिकत्वतः । न तु सर्वस्वरूपत्वात्सर्व-
भिन्नो यतो हरिरि'ति मात्स्ये ॥ 'अन्तर्यामिस्वरूपेण ब्रह्मरुद्राद्यभिन्नता ।
न तु जीवस्वरूपेण जीवा भिन्ना यतो हरेः । विशेषाभेदवचनं
सन्निधानविशेषतः । सन्निधानं तु तत्प्रोक्तं सामर्थ्यव्यञ्जनं हरेरि'ति
भविष्यत्पर्वणि ॥ ४५ ॥ '[54]हरेर्वशत्वदृष्टिस्तु भूतानामपृथग्दृशिः ।
स्वरूपत्वदृष्टिरथवा ब्रह्मादीनां विशेषत'इति गारुडे ॥५२॥ सर्वभूतात्मना

पृथक्स्य आत्मनः । अथापि भृत्येश तयोपधावतामनन्यवृत्त्याऽनुगृहाण
वत्सल ॥ ३८ ॥ जगदुद्भवस्थितिलयेषु लीलया प्रविभज्यमानगुणयाऽऽ-
त्ममायया । रचितात्मभेदमतये स्वसंस्थया ह्यतिवर्तितभ्रमगुणात्मने
नमः ॥ ३९ ॥ अग्निरुवाच—यत्तेजसाऽहं सुसमिद्धतेजा हव्यं वहाम्य-
ध्वर आज्यसिक्तम् । तं यज्ञियं पञ्चविधं च पञ्चभिः स्विष्टं यजुर्भिः
प्रणतोऽस्मि यज्ञम्(नित्यम्) ॥ ४१ ॥ ब्राह्मणा ऊचुः—त्वं क्रतुस्त्वं हवि-
स्त्वं हुताशः स्वयं त्वं हि मन्त्रा समिद्दर्भपात्राणि च । त्वं सदस्यर्त्विजो
दम्पती देवता अग्निहोत्रं स्वधा सोम आज्यं पशुः ॥ ४५ ॥ तस्मिन्
ब्रह्मण्यद्वितीये केवले परमात्मनि । देहात्मबुद्धिर्भूतानि भेदेनाज्ञोऽनु-
पश्यति ॥ ५२ ॥ यथा पुमान्न स्वाङ्गेषु शिरः पाण्यादिषु क्वचित् ।
पारक्यबुद्धिं कुरुत एवं भूतेषु मत्परः ॥ ५३ ॥ त्रयाणामेकभावानां यो
न पश्यति वै भिदाम् । सर्वभूतात्मना ब्रह्मन् स शान्तिमधिगच्छति ॥

सर्वभूतान्तर्यामित्वेन ॥ ५४ ॥ [55]उभयतः सोमतो हविषश्च ॥ ५५ ॥
'[59]शक्तित्वाद्विष्णुशक्तिस्तु शक्तिशब्देन चोच्यते । शक्यत्वात्प्रकृति
श्चापि स्वापः सृष्टिं विना हरौ । रतिस्तस्यास्तु कथितो नह्यन्यः स्वा
उच्यत'इति तन्त्रसारे ॥ ५९ ॥ '[64]स्वाहाद्वारेण नदीतीरे शरकानने
चच्छर्दे'ति भारतोक्तेः ॥ ६४ ॥ इति चतुर्थस्कन्धतात्पर्ये अष्टमो
ध्यायः ॥ ८ ॥

## नवमोऽध्यायः

'[7]आविष्टा हरिणा जीवा ब्रह्मा दक्षो मनुः पृथुः । शक्राद्य
ऋषयश्चैव मत्स्यव्यासादयो हरिरि'ति ब्रह्मवैवर्ते ॥ ७ ॥ '[8]प्रियव्रतो
त्तानपादप्रमुखेषु हरिः स्वयम् । आविष्टः सर्वभूतेषु ऋषभाद्याः स्व
हरिरि'ति हरिवंशेषु ॥ ८ ॥ [31]विविधकल्पने विद्यमानेऽपि ॥ ३१ ॥
[54]परिणततया एकस्मिन्नेव भूते न ॥ ५४ ॥ [61]मन्त्रहृदयेन मन्त्र
च नमः शब्देन च ॥६१॥ [72]तस्यैव योग्यत्वाल्लोकपालानां दुष्करम्

॥ ५४ ॥ मैत्रेय उवाच—एवं भगवताऽऽदिष्टः प्रजापतिपतिर्हरिम्
अर्चित्वा क्रतुना स्वेन देवानभागवतो(उभयतोऽ)यजत् ॥ ५५ ॥ तमे
दयितं भूयस्त्ववाप पतिमम्बिका । अनन्यभावैकगतिः शक्तिः सुप्ते
पूरुषम् ॥ ५९ ॥ पीत्वाऽन्तरजरं वह्निश्चच्छर्द शरकानने । कुमारो
भूत्ततस्तस्मै स्तनं षट्कृत्तिका ददुः ॥ ६४ ॥

### नवमोऽध्यायः

अथातः कीर्तये वंशं पुण्यकीर्तेः कुरूद्वह । स्वायम्भुवस्यापि मनो
र्हरेरंशांशजन्मनः ॥ ७ ॥ प्रियव्रतोत्तानपादौ शतरूपापतेः सुतौ । वासु
देवस्य कलया रक्षायां जगतः स्थितौ ॥ ८ ॥ विकल्पे विद्यमानेऽपि न
ह्यसन्तोषहेतवः । पुंसो मोहमृते भिन्ना यल्लोका निजकर्मभिः ॥ ३१
स्मयमानमभिध्यायेत् सानुरागावलोकनम् । नियमेनैकभूतेन मनसा
वरदर्षभम् ॥ ५४ ॥ परिचर्या भगवतो यावतीः पूर्वसेविताः । ता मन्त्र
हृदयेनैव प्रयुञ्ज्यान्मन्त्रमूर्तये ॥ ६१ ॥ सुदुष्करं कर्म कृत्वा लोकपालैरपि



'नाशक्यं देवतानां तु यदन्यैः शकितं क्वचित् । शक्ता अपि न
र्वन्ति यदन्यविहितं बुधा'इति ब्राह्मे ॥७२॥ [74]दृष्टया निरूपणया ।
आदेशेन उपदेशेन ॥ ७४ ॥ '[80]यत्र देवैः कृते विघ्ने खण्डितो न
मान्भवेत् । तत्र तद्यशसे विघ्नं कुर्युर्न तु विघातने । यत्र खण्डितता
त्र खण्डनायैव केवलम् । सत्यकामा यतो देवास्ते चित्ताद्यभिमानिनः ।
तो विमोहनायैव प्राप्नुयुस्ते पराजयम् । तेषामशक्तितोक्तिश्च विमोहाय
सुरद्विषामि'ति ब्रह्माण्डे ॥८०॥ [81]भूतेन्द्रियाश्रयं भगवद्रूपम् ॥८१॥
[84]विश्वं भगवन्तम् । आत्मनो द्वारं सर्वं जीवोत्पत्त्यादिद्वारम् । लोकाना-
व निरुच्छ्वासः लोकपालास्तदर्थमेव शरणं ययुः । 'ध्यातुर्ध्रुवस्य
कीर्त्यर्थं हरिणा सह देवताः । लोकोच्छ्वासं निरुध्याथ श्वासार्थं च हरिं
ययुः । अन्यप्रवृत्तयस्तेभ्यो न तेषामन्यतः क्वचित् । स्वोत्तमेभ्यस्तु
देवेभ्यस्तेषां स्युः स्वप्रवृत्तय' इति तत्त्वनिर्णये ॥ ८४ ॥ [85]अखिल-
सत्त्वसमूहस्य । 'तेजः शक्तिः समूहश्च गृहं धामेति कथ्यत'इति तत्त्व-
निर्णये ॥ ८५ ॥ इति चतुर्थतात्पर्ये नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः

[10]परब्रह्मणि स्थितस्य ध्यानादिकं विना न भवति । सुप्तौ

भुः । एष एष्यत्यचिरतो यशो विपुलयंस्तव ॥ ७२ ॥ तत्राभिषिक्तः
यतस्तामुपोष्य विभावरीम् । समाहितः पर्यचरदृष्ट्याऽऽदेशेन पूरु-
षम् ॥ ७४ ॥ देवाश्चक्रुस्तपोविघ्नं त्रासयन्तः स्वमायया । सर्पेभसिंह-
कूष्माण्डैस्तान्नापश्यत्परं गतः ॥ ८० ॥ सर्वतो मन आकृष्य हृदि भूते-
न्द्रियाश्रयम् । ध्यायन् भगवतो रूपं नाद्राक्षीत्किञ्चनापरम् ॥ ८१ ॥
तस्मिन्नभिध्यायति विश्वमात्मनो द्वारं निरुध्यासुमनन्यया धिया । लोका
निरुच्छ्वासनिपीडिता भृशं सलोकपालाः शरणं ययुर्हरिम् ॥ ८४ ॥
देवा ऊचुः—नैवं विदामो भगवन् प्राणरोधं चराचरस्याखिलसत्त्वधाम्नः ।
विधेहि तन्नो वृजिनाद्विमोक्षं प्राप्ता वयं त्वां शरणं शरण्यम् ॥ ८५ ॥

### दशमोऽध्यायः

या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद्भवज्जनकथाश्रवणेन वा

दृष्टत्वात् ॥ १० ॥ [12]ये स्वाः सम्पदः स्मरन्ति ते त्वां न स्मरन्ति ये भगवद्भक्तसङ्गाः ते स्वाः सम्पदो न स्मरन्ति ॥ १२ ॥ ‘[13]पश्यमानोऽपि तु हरिं न तु वेत्ति कथञ्चन । वेत्ति किञ्चित्प्रसादेन हरेरथ गुरोस्तथे’ति ब्रह्मतर्के ॥ १३ ॥ [15]वधिं अवधिम् । अह्लोपेन संसारस्यावधिभूतं त्वामास्थिताः । सहैवास्ते ॥ १५ ॥ ‘[16]आनुपूर्वी श्रुतिश्चैव त्रयी चाम्नाय उच्यत’ इत्यभिधानम् ॥१६॥ [17]तव पादमूल भजत आचार्यस्याशिष्टयः शिक्षाः सत्याशीः प्रदा एव । तथापि अस्मान शिष्यान् विशिष्टफलप्राप्तये पुनः परिपाति भवान् ॥१७॥ ‘[31]आधिपत्यमनित्यं तु ध्रुवलोकस्य यद्ध्रुवे । न तु तत्स्थानगन्तॄणां यतीनां गतिरुत्तमा । तस्यापि मुक्तिर्नियता नियतं चापि तत्पदम् । तथापि कामनानिन्दा ध्रुवेण सुकृता बते’ति भविष्यत्पर्वणि ॥ ३१ ॥ ‘[33]द्वितीयस्य स्वतन्त्रस्य त्वभावाद्द्वयवर्जितः । ईश्वरश्चेशितव्यस्य भावात्स परमेश्वर’इति

---

स्यात् । सा ब्रह्मणि स्वमहिमन्यपि नाथ माभूत्किम्वन्तकासिलुलितात्पततां विमानात् ॥ १० ॥ ते न स्मरन्त्यतितरां प्रियमीशमार्त्यं स्वान सम्पदः सुतसुहृद्गृहवित्तदारान् । ये त्वब्जनाभ भवदीयपदारविन्दसौगन्ध्यलुब्धहृदयेषु कृतप्रसङ्गाः ॥ १२ ॥ तिर्यङ्नगद्विजसरीसृपदेवदैत्यमर्त्यादिभिर्विरचितं सदसद्विशेषम् । रूपं स्थविष्ठमज ते महदाद्यशेषं नातः परं परम वेद्मि न यत्र वाचः ॥ १३ ॥ त्वं नित्यमुक्तपरिशुद्धविबुद्ध आत्मा कूटस्थ आदिपुरुषो भगवांस्त्र्यधीशः । (ये) यद्बुद्ध्यवस्थितमखण्डितया स्वबुद्ध्या दृष्ट्वाऽऽस्थिता वधिमतो व्यतिरिक्त आस्से ॥१५॥ यस्मिन्विरुद्धगतयोऽप्यनिशं पतन्ति विद्यादयो विविधशक्तय आनुपूर्व्या । तद्ब्रह्म विश्वभवमेकमविश्वमाद्यमानन्दमात्रमविकारमहं प्रपद्ये ॥ १६ ॥ सत्याशिषो हि भगवंस्तवपादमूलमाशिष्टयोऽनुभजतः पुरुषार्थमूर्तेः । अप्येवमार्य भगवान्परिपाति दीनान्वाश्रेव वत्सकमनुग्रहकातरोऽस्मान् ॥ ॥ १७ ॥ ततो गन्ताऽसि मत्स्थानं सर्वलोकनमस्कृतम् । उपरिष्टादृषिभ्यस्त्वं यतो नावर्तते यतिः ॥ २५ ॥ अहो बत ममानात्म्यं मन्दभाग्यस्य पश्यत । भवच्छिदः पादमूलं गत्वा याचे तदन्तवत् ॥ ३१ ॥ दैवीं मायामुपाश्रित्य प्रसुप्त इव भिन्नदृक् । तप्ये द्वितीयेऽप्यसति भ्रातृभ्रातृव्य-



हरिवंशेषु ॥ ३३ ॥ ‘[35]हरौ नियतचित्तत्वाद्गृहवत्तत्प्रवेशनात् । मोक्षं तादात्म्यमित्याहुर्न तद्रूपत्वतः क्वचिदि’ति भविष्यत्पर्वणि ॥ तच्चित्ततैव तादात्म्यम् । ‘नैकात्मतां मे स्पृहयन्ती’त्युक्तत्वात् । ‘हरीच्छितेकृतैकात्म्यं न तेनैकस्वरूपते’ति च । ‘कामेन मे काम आगादि’ति च श्रुतिः ॥ ३५ ॥ ‘[53]कलभश्चैव कन्यानां करिणी बालमङ्गल’ इति राजनीतौ ॥ ५३ ॥ इति चतुर्थतात्पर्ये दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः

‘[47]हरिरक्लिष्टकारित्वादयस्कान्तवदुच्यते । कामकर्मस्वभावेषु काले चावस्थितो हरिः । सर्वकारणभूतः संस्तत्तन्नाम्नाऽभिधीयत’ इति सत्यसंहितायाम् ॥४७॥ इति चतुर्थतात्पर्ये एकादशोऽध्यायः ॥११॥

## द्वादशोऽध्यायः

[4]परमेश्वरं विनाऽहं त्वं कर्तेति भ्रान्तिः । ‘नाहं कर्ता न कर्ता त्वं कर्ता यस्तु सदा प्रभुरि’ति मोक्षधर्मे । विपर्ययो दुःखादिः सुखादिरूपस्य ॥ ४ ॥ [6]आत्मसामर्थ्याख्यया शक्त्या युक्तम् । गुणमय्या

---

...जा ॥ ३३ ॥ भवच्छिदमयाचेऽहं भवं भाग्यविवर्जितः । तादात्म्यं ...तो मौढ्यान्म(न्मा)नो मे भिक्षितं बत । ईश्वरात् क्षीणपुण्येन ...कानिव चाधनः ॥ ३५ ॥ लाल्यमानं जनैरेवं ध्रुवं सभ्रातरं नृपः । ...रोप्य करिणीं हृष्टस्तूयमानोऽविशत्पुरम् ॥ ५३ ॥

### एकादशोऽध्यायः

निमित्तमात्रं तत्रात्मा निर्गुणः पुरुषर्षभः । व्यक्ताव्यक्तमिदं विश्वं ...त्र भ्रमति लोहवत् ॥ ४७ ॥

### द्वादशोऽध्यायः

न भवानवधीद्यक्षान्न यक्षा भ्रातरं तव । काल एव हि भूतानां ...भुरप्ययभावयोः ॥ ३ ॥ अहं त्वमित्यपार्था धीरज्ञानात्पुरुषस्य हि । ...प्रीव भात्यनुध्यानाद्यया बन्धविपर्ययः ॥ ४ ॥ भजस्व भजनीयाङ्घ्रिम्-

विरहितम् ॥ ६ ॥ [7]निरन्तरं भगवत्पादमानसम् ॥ ७ ॥ [10]द्रव्य
क्रियादेवतानां विषयम् । अकर्मफलप्रदं मोक्षफलप्रदम् ॥ १० ॥
'[11]विश्वः पूर्णस्तथा सर्वः समस्तश्चाभिधीयत'इत्यभिधानम् ॥ ११ ॥
'[15]अन्यथात्वात्क्षिप्रनाशाज्जगत्स्वप्नादिवत्स्मृतम् । वर्तमानं नियत्यै
सदैव परमात्मनी'ति वाराहे ॥ 'महामायेत्यविद्येति नियतिर्मोहिनीति
च । प्रकृतिर्वासनेत्येवं तवेच्छानन्त कथ्यत'इति स्कान्दे ॥ १५ ॥
[10]स्थूले पातालादिके । शिलावत्प्रतिमारूपे । 'शिलावत्प्रतिमैषा हि
विष्णोर्लोकचतुर्दशी'ति च ॥ १७ ॥ '[26]शिंशुमारो ध्रुवश्चैव संस्थितौ
यत्पुरे सदा । तत्पश्यन्ति न यान्त्यन्ये लोकं यान्ति सुरान्विने'ति
च ॥ २५, २६ ॥ [49]मनसा परमात्मानं प्रति सन्तुष्टः ॥ ४९ ॥
इति चतुर्थतात्पर्ये द्वादशोऽध्यायः ॥ १२ ॥

---

भवाय भवच्छिदम् । युक्तं विरहितं शक्तया गुणमय्याऽऽत्ममायया ।
॥ ६ ॥ वृणीहि कामं नृप यन्मनोगतं मत्तस्त्वमौत्तानपदेऽविशङ्कितः ।
वराहणोऽस्यम्बुजनाभपादयोर्निरन्तरं त्वां वयमङ्ग शुश्रुम ॥ ७ ॥ अथा
यजत यज्ञेशं क्रतुभिर्भूरिदक्षिणैः । द्रव्यक्रियादेवतानां कर्माकर्मफलप्रदम्
॥ १० ॥ सर्वात्मन्यच्युते सर्वे तीव्रौघां भक्तिमुद्वहन् । ददर्शात्मनि
भूतेषु तमेवावस्थितं विभुम् ॥११॥ मन्यमान इदं विश्वं मायारचितमात्मनि ।
अविद्यारचितस्वप्नगन्धर्वनगरोपमम् ॥ १५ ॥ तस्या विशुद्धकरणः शिव
वा॑विगाह्य बद्धासनं जितमरुन्मनसाऽहृताक्षः । स्थूले दधार भगवत्प्रतिरू
एतद्ध्यायंस्तदव्यवहितो विसज़ृन् समाधौ ॥ १७ ॥ सुदुर्जयं विष्णुप
जितं त्वया यत्सूरयोऽप्राप्य विचक्षते परम् । आतिष्ठ तच्चन्द्रदिवाकरा
दयो ग्रहर्क्षताराः परियन्ति दक्षिणम् ॥२५॥ अनास्थितं ते पितृभिरन्यै
रप्यङ्ग कर्हिचित् । आतिष्ठ जगतां वन्द्यं तद्विष्णोः परमं पदम् ॥ २६ ॥
श्रावयेच्छ्रद्दधानानां तीर्थपादपदाश्रयः । नेच्छंस्तत्रात्मनाऽऽत्मानं सन्तु
इति सिध्यति ॥ ४९ ॥



## त्रयोदशोऽध्यायः

[9]स्वरूपं जीवस्य बिम्बरूपं परमात्मानम् । 'भिन्नस्वरूपमभिदं
रूपं तु द्विधा हरेः । भिन्नस्वरूपं ब्रह्माद्या मत्स्याद्यभिदमुच्यत'इति
गारुडे ॥ ९ ॥ '[11]कल्पः कल्पाभिमानी सन् शिंशुमारानुगःस्थितः ।
वत्सरो राज्यमकरोत्पित्रा दत्तं महाबल' इति ब्राह्मे । 'चक्रे नारायणः
साक्षात्किस्तुघ्नः कल्पमात्मजमि'ति पाद्मे ॥ ११ ॥ '[33]अनपत्योऽपि
सद्धर्मा लोकजिन्नात्र संशयः । देवैस्तु पृथुजन्मार्थे हविरङ्गस्य नो हृतम् ॥
अनपत्यत्वकर्माऽसौ बालहत्या कृता पुरा । अतो दुष्टोऽभवत्पुत्र इष्टो
विष्णुरतः पृथुरि'ति वामने ॥३३॥ '[39]मृत्युर्देवो यमभ्राता वेनमाता-
महोऽसुरः ॥ [40]पीडां वेनेति च प्राहुर्वेनोऽसौ पीडनादभूदि'ति च ॥
॥ ३९, ४० ॥ इति चतुर्थतात्पर्ये त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्दशोऽध्यायः

[22]सर्वलोकान्सङ्गृह्णातीति तत्सङ्ग्रहः । 'सर्वस्य ग्रहणाद्विष्णुः सर्व-

---

त्रयोदशोऽध्यायः

अव्यवच्छिन्नयोगाग्निदग्धकर्ममलाशयः । स्वरूपमवरुन्धानो नान्य-
तमात्तदैक्षत ॥ ९ ॥ मत्वा तं जडमुन्मत्तं कुलवृद्धाः समन्त्रिणः । वत्सरं
भूपतिं चक्रुर्यवीयांसं भ्रमेः सुतम् ॥ ११ ॥ सदस्या ऊचुः—नरदेवेह
भवतो नाघं हि मनाक् स्थितम् । अस्त्येकं प्राक्तनमघं यदिहेदृक्
त्वमप्रजः ॥ ३१ ॥ तथा साध (ध)य भद्रं ते आत्मानं सप्रजं नृप । इष्टस्ते
पुत्रकामस्य पुत्रं दास्यति यज्ञभुक् ॥३२॥ यथा स्वभागधेयानि ग्रहीष्यन्ति
दिवौकसः । यद्यज्ञपुरुषः साक्षादपत्याय हरिर्वृतः ॥३३॥ स बाल एव
पुरुषो मातामहमनुव्रतः । अधर्मांशोद्भवं मृत्युं तेनाभवदधार्मिकः ॥३९॥
स शरासनमुद्यम्य मृगयुर्वनगोचरः । हन्त्यसाधुर्मृगान् दीनान् वेनोऽ-
सावित्यरौज्जनः ॥ ४० ॥

चतुर्दशोऽध्यायः

तं सर्वलोकामरयज्ञसङ्ग्रहं त्रयीमयं द्रव्यमयं तपोमयम् । यज्ञै-

सङ्ग्रह उच्यते। वेदस्य तद्वक्तृकत्वात्प्राधान्यं तु त्रयीमयः। सर्व तद्विषयत्वेन मुख्यं सर्वमयस्तत'इति स्कान्दे ॥ २२ ॥ '[23]विष्णोः सन्निहितत्वात्तु सर्वे देवा हरेः कला'इति च ॥ २३ ॥ '[35]अहं ब्रह्मेति वेनस्तु ध्यायन्नापाधरं तमः। तद्राद्धान्तो महीं व्याप्तो भेर्या ख्याप यतोऽनिशम्। आसुरा राक्षसाश्चैव पिशाचास्तत्पथि स्थिताः। भूमौ तत्पृथुना सर्वं निरस्तं महितात्मना। पुनः कलियुगे प्राप्ते अष्टाविंशतिमे मनोः। वैवस्वतस्य समये जाताः क्रोधवशा भुवि। ख्यापयन्ति

---

विंचित्रैर्यजतो भवाय ते राजन् स्वदेशाननुरोद्धुमर्हसि ॥ २२ ॥ यज्ञेन युष्मद्विषये द्विजातिभिर्वितायमानेन सुराः कला हरेः। स्विष्टाः सुतुष्टाः प्रदिशन्ति वाञ्छितं तद्धेलनं नार्हसि वीर चेष्टितुम् ॥ २३ ॥ तस्मान्मां कर्मभिर्विप्रा यजध्वं गतमत्सराः। बलिं च मह्यं हरत मत्तोऽन्यः कोऽग्रभुक् पुमान् ॥ २९ ॥ मैत्रेय उवाच—इत्थं विपर्ययमतिः पापीयानुत्पथं गतः। अनुनीयमानस्तद्याञ्चां न चक्रे भ्रष्टमङ्गलः ॥ ३० ॥ इति तेऽसत्कृतास्तेन द्विजाः पण्डितमानिना। भग्नायां हव्ययाञ्चायां तस्मै विदुर चुक्रुधुः ॥ ३१ ॥ हन्यतां हन्यतामेष पापः प्रकृतिदारुणः। जीवन् जगदसावाशु कुरुते भस्मसाद्ध्रुवम् ॥ ३२ ॥ नायमर्हत्यसद्वृत्तो नरदेववरासनम्। यो वै यज्ञपतिं विष्णुं विनिन्दत्यनपत्रपः ॥ ३३ ॥ को वैनं परिचक्षीत वेनमेकमृतेऽशुभम्। प्राप्त ईदृशमैश्वर्यं यदनुग्रहभाजनम् ॥ ३४ ॥ इत्थं व्यवसिता हन्तुमृषयो रूढमन्यवः। निजघ्नुर्हुङ्कृतैर्वेनं हतमच्युतनिन्दया ॥ ३५ ॥ ऋषिभिः स्वाश्रमपदं गते पुत्रकलेवरम्। सुनीथा पालयामास विद्यायोगेन शोचती ॥ ३६ ॥ एकदा मुनयस्ते तु सरस्वत्सलिलाप्लुताः। हुत्वाग्निं सत्कथाश्चक्रुरुपविष्टाः सरित्तटे ॥ ३७ ॥ वीक्ष्योत्थितान् महोत्पातानाहुर्लोकभयङ्करान्। अप्यभद्रमनाथाया दस्युभ्यो न भवेद्भुवः ॥ ३८ ॥ एवं ब्रुवत्सु ऋषिषु धावतां सर्वतो दिशम् ॥ पांसुः समुत्थितो भूमेश्चोराणां वसुलुम्पताम् ॥ ३९ ॥ तदुपद्रवमाज्ञाय लोकस्य वसुलुम्पताम्। भर्तर्युपरते तस्मिन्नन्योन्यं च जिघांसताम् ॥ ॥ ४० ॥ चोरप्रायं जनपदं हीनसत्त्वमराजकम्। लोका नावारयन् शक्ता अपि तद्दोषदर्शिनः ॥४२॥ ब्राह्मणः समदृक् शान्तो दीनानां समुपेक्षकः। स्रवते ब्रह्म तस्यापि भिन्नभाण्डात्पयो यथा ॥ ४२ ॥ नाङ्गस्य वंशो





दुरात्मानो मणिमांस्तत्पुरःसर'इति भविष्यत्पुराणे ॥ ३५ ॥ '[47]त्र्यंशो वेनः समुद्दिष्टः सत्त्वांशः पृथुतामगात्। रजोंऽशश्च दिवं यातो निषादतामसोऽभवत्। स्वयं वेनश्चतुर्थस्तु महातमसि पातित'इति कौर्मे। पापरूपी पृथग्जातो निषादो वेनदेहतः। यस्मात्तस्मात्पृथोः पुत्राद्रजो वेनो दिवं ययावि'ति गारुडे ॥४७॥ '[50]पृथुहैहयादयो जीवास्तेष्वाविष्टो हरिः स्वयम्। विशेषावेशतस्तेषु साक्षाद्धर्यंशतावचः। किंस्तुम्न-व्यासऋषभकपिला मत्स्यपूर्वकाः। आकूतिजैतरेयौ च धर्मजत्रयमेव च। धन्वन्तरिर्हयग्रीवो दत्तात्रेयश्च तापसः। स्वयं नारायणस्त्वेते नाणुमात्रविभेदिनः। बलतः स्वरूपतश्चैव गुणैरपि कथञ्चने'ति तत्त्वनिर्णये। 'यत्र सन्निहिता श्रीश्च यत्र सन्निहितो हरिः। नास्य सन्निधिमात्रेण रमा पत्नीत्वमाव्रजेत्। साक्षादेव तु साक्षाच्च हरेः सन्निधितः क्वचित्। गोप्यादिरूपा भवति विपरीतं न तु क्वचिदि'ति च ॥ ५० ॥ इति चतुर्थतात्पर्ये चतुर्दशोऽध्यायः ॥ १४ ॥

---

राजर्षेरेष संस्थातुमर्हति। अमोघवीर्या हि नृपा वंशेऽस्मिन् केशवाश्रयाः ॥ ४३ ॥ विनिश्चित्यैवमृषयो विपन्नस्य महीपतेः। ममन्थुरूरुं तरसा तत्रासीद्ध्राहुको नरः ॥ ४४ ॥ काककृष्णोऽतिह्रस्वाङ्गो ह्रस्वबाहुर्महाहनुः। ह्रस्वपान्निम्ननासाग्रो रक्ताक्षस्ताम्रमूर्धजः ॥ ४५ ॥ तं तु तेऽवनतं दृष्ट्वा किङ्करोमीतिवादिनम्। निषीदेत्यब्रुवंस्तात स निषादस्ततोऽभवत् ॥ ॥ ४६ ॥ तस्य वंश्यास्तु नैषादा गिरिकाननगोचराः। योऽपाहरज्जायमानो वेनकिल्बिषमुल्बणम् ॥ ४७ ॥ मैत्रेय उवाच—अथ तस्य पुनर्विप्रैरपुत्रस्य महीपतेः। बाहुभ्यां मथ्यमानाभ्यां मिथुनं समपद्यत ॥४८॥ तद्दृष्ट्वा मिथुनं जातमृषयो ब्रह्मवादिनः। ऊचुः परमसन्तुष्टा विदित्वा भगवत्कलाम् ॥ ४९ ॥ ऋषय ऊचुः—एष विष्णोर्भगवतः कला भुवनपावनी। इयं च लक्ष्म्याः(क्ष्मीः) सम्भूतिः पुरुषस्यानपायिनी ॥ ५० ॥

## पञ्चदशोऽध्यायः

[3]तत्र सन्निहितः साक्षाद्भगवान् । 'ब्रह्मण्यनन्ते गरुडे रुद्रे कामे शचीपतौ । अनिरुद्धे मनौ चैव पृथौ च कृतवीर्यजे । नारदे चैव-माद्येषु विशेषात्सन्निधिर्हरेः । सुदर्शनादिष्वस्त्रेषु तथा सन्निहितो हरिः । नरलक्ष्मणौ बलश्चैव शेषस्यांशाः प्रकीर्तिताः । तथा भरतशत्रुघ्नौ चक्र-शङ्खावुदाहृतौ । प्रद्युम्नश्च कुमारश्च स्कन्दः कामांशजाः स्मृता'इति स्कान्दे । 'वैन्ये पृथौ सन्निहितो राजरूपी जनार्दन'इति ब्राह्मे ॥ ३ ॥ इति चतुर्थतात्पर्ये पञ्चदशोऽध्यायः ॥ १५ ॥

## षोडशोऽध्यायः

[20]यल्लोके निरर्थकं तद्भगवद्रूपेषु प्रतीतनानात्वदृष्टान्तेन पश्यन्ति सन्तः । 'मत्स्यरूपादिनानात्वदृष्टिवद्यन्निरर्थकमि'ति पाद्मे । 'एवं धर्मान्पृथक् पश्यन्ति'ति च ॥ २० ॥ इति चतुर्थतात्पर्ये षोडशोऽध्यायः ॥ १६ ॥

## सप्तदशोऽध्यायः

'[2]राज्ञा समानवयसः श्रेणयस्त्वङ्गरक्षका' इत्यभिधानम् ॥ २ ॥

---

पञ्चदशोऽध्यायः

एष साक्षाद्धरेरंशो जातो लोकरिरक्षया । इयं च तत्परा हि श्रीरनुजज्ञेऽनपायिनी ॥ ३ ॥

षोडशोऽध्यायः

सूत उवाच—नालं वयं ते महिमानुवर्णने यो देवदेवोऽवततार मायया । वेनाङ्गजातस्य च पौरुषाणि ते वाचस्पतीनामपि बभ्रुमुर्धियः ॥ ॥ २ ॥ अयं तु साक्षाद्भगवांस्त्र्यधीशः कूटस्थ आत्मा कलयाऽवतीर्णः । यस्मिन्नविद्यारचितं निरर्थकं पश्यन्ति नानात्वमिव प्रतीतम् ॥ २० ॥

सप्तदशोऽध्यायः

ब्राह्मणप्रमुखान् वर्णान् भृत्यामात्यपुरोधसः । पौरान् जानपदान्



पूर्वतनानां कथासम्बन्धेन हरेर्यशः ॥ ६ ॥ '[29]ब्रह्मादिजीवदेहास्तु ...पादेहाः प्रकीर्तिता' इति वाराहे ॥२९॥ [30]स परतः ईश्वर इत्याक्षेपः ॥ ॥ ३० ॥ '[33]विरुद्धशक्तयो यस्य नित्या युगपदेव च । तस्मै नमो ...गवते विष्णवे सर्वजिष्णव'इति च ॥ ३३ ॥ इति चतुर्थतात्पर्ये ...दशोऽध्यायः ॥ १७ ॥

## अष्टादशोऽध्यायः

'[15]गुणाः स्वरूपभूताश्च बाह्याश्चेति द्विधा मताः । स्वरूपभूता ...ज्यन्ते हरेर्बाह्यान् दुहुः पर'इति ब्राह्मे ॥ १५ ॥ '[16]प्रतिमन्वन्तरं ...पः प्रह्लादाद्या बभूविर'इति च ॥ १६ ॥ '[31]गोष्ठं घोष इति प्रोक्तो ...स्तत्पालसंस्थितिरि'त्यभिधानम् ॥ ३१ ॥ इति चतुर्थतात्पर्ये अष्टा-...शोऽध्यायः ॥ १८ ॥

---

...णीः प्रकृतीः समपूजयत् ॥ २ ॥ यच्चान्यदपि कृष्णस्य ब्रह्मन् भगवतः ...। श्रवः सुश्रवसः पुण्यं पूर्वदेहकथाश्रयम् ॥ ६ ॥ धरण्युवाच— ...। परस्मै पुरुषाय मायया विन्यस्तनानातनवेऽगुणात्मने । नमः ...रूपानुभवेन निर्धुतद्रव्यक्रियाकारकविभ्रमोर्मये ॥ २९ ॥ नूनं तवेशस्य ...हितं जनैः स्वमायया दुर्जययाऽकृतात्मभिः । न लक्ष्यते यस्त्वकरो-...कारयद्योऽनेक एकः परतः स इश्वरः ॥३०॥ सर्गादि योऽस्यानुरुणद्धि ...किभिर्द्रव्याक्रियाकारकचेतनात्मभिः । तस्मै समुन्नद्धविरुद्धशक्तये नमः ...पुरुषाय वेधसे ॥ ३३ ॥

अष्टादशोऽध्यायः

कृत्वा वत्सं सुरगणा इन्द्रं सोममदूदुहन् । हिरण्मयेन पात्रेण वीर्य-...बलं पयः ॥ १५ ॥ दैतेया दानवा वत्सं प्रल्हादमसुरर्षभम् । विधाय ...। क्षीरमयःपात्रे सुराऽऽसवम् ॥ १६ ॥ ग्रामान् पुरः पत्तनानि ...णि विविधानि च । घोषान् व्रजांश्च शिबिरान्नगरान् खेटखर्वटान् ॥ ॥ ३१ ॥

## एकोनविंशोऽध्यायः

'[17]देवाः शक्ताश्च मोहाय दर्शयेयुरशक्तवत् । ऋषीणां चैव राज्ञ
च नहि ते देवतासमाः । आज्ञया वा हरेः क्वापि कार्यतो वा क्वचि
त्क्वचिदि'ति गारुडे ॥ 'प्रणिपातादिकं देवैर्ऋष्यादिषु जनार्दने
क्रियतेऽतो न तेषां हि तेजोभङ्गः कथञ्चन । अत्युत्तमानामवरे तेजो
भङ्गो न विद्यते । यथा नराणां तिर्यक्षु प्रायः साम्ये हि स स्मृत'इति
स्कान्दे ॥ १७ ॥ '[25]धर्मोपमस्त्वधर्मोऽयमुपधर्मः स उच्यत'इति
हरिवंशेषु ॥ २५ ॥ इति चतुर्थतात्पर्ये एकोनविंशोऽध्यायः ॥१९॥

## विंशोऽध्यायः

'[7]अन्येषामावृतो विष्णुः स्वस्यानावृत एव च ॥ ७ ॥ '[8]आत्मा
सर्वस्य जगतः स्वस्यात्माऽन्यो न विद्यते । सुषुप्तवच्च निर्दुःखो जाग्रद्वत्
प्रवृत्तिमान् । अनन्यसदृशत्वाच्च केवलोऽसौ हरिः स्मृत'इति तन्त्रसारे ।
'आत्मनैवावगम्यत्वाद्धरिरेषः सुषुप्तवत् । केवलत्वेन विज्ञेयो मुक्तिस्तद्वद-
दुःखते'त्यध्यात्मे ॥ ८ ॥ '[12]हरिरक्लिष्टकारित्वादुदासीन इतीर्यत'इति

---

### एकोनविंशोध्यायः

एवं वैन्यसुतः प्रोक्तस्त्वरमाणं विहायसा । अन्वधावदतिक्रुद्धो
रावणं गृध्रराडिव ॥ १६ ॥ सोऽश्वं रूपं च तद्धित्वा तस्मावन्तर्हितः
स्वराट् । धीरः स्वपशुमादाय पितुर्यज्ञमुपेयिवान् ॥ १७ ॥ धर्म इत्युप
धर्मेषु नग्नरक्तपटादिषु । प्रायेण सज्जते भ्रान्त्या पेशलेषु च वाग्मिषु ।
॥ २५ ॥

### विंशोऽध्यायः

एकः शुद्धः स्वयंज्योतिर्निर्गुणोऽसौ गुणाश्रयः । सर्वगोऽनावृतः
साक्षी निरात्माऽनात्मनः परः ॥ ७ ॥ देहाद्यपार्थास्तद्धर्मा न स्युस्त-
द्द्रष्टुरात्मनः । कैवल्यं तस्य वै धर्मः सुषुप्तं तन्निदर्शनम् ॥ ८ ॥ उदासीन-
मिवाध्यक्षं द्रव्यज्ञानक्रियात्मनाम् । कूटस्थमिममात्मानं यो वेदाप्नोति



च ॥ १२ ॥ '[13]जीवाद्भिन्नस्य मनसो गुणाः सत्वादयो मताः ।
तज्ज्ञात्वा न विकुर्वीत स्वस्वरूपं मनस्तथे'ति पाड्गुण्ये ॥ १३ ॥
'[19]आयासदुःखव्रीडादीन्प्रायशः सुखिनोऽपि तु । नियमाद्दपिभूतेषु
मोहायादर्शयन्सुरा' इति ब्रह्मतर्के ॥ १९ ॥ '[20]अपक्वभक्तियुक्ता ये न
तेषां विष्णुदर्शनम् । प्रायो भवति दुःखस्य त्वभावः प्रायशो भवेदि'ति
...संहितायाम् ॥ 'जगत्समस्तं विश्वं च निखिलं पूर्णमुच्यत'-
इत्यभिधानम् ॥ २० ॥ '[29]धिष्ण्यं तेजश्च सामर्थ्यं महिमा धाम
चोच्यत' इत्यभिधानम् ॥ अल्पपुण्यत्वान्न मद्भक्तियोग्य इति न
...तव्यम् । यतः फल्वप्युरु करोषि वात्सल्यात् । विना वात्सल्यं
क्रियाऽपि किं तव ॥२९॥ [30]अथान्यच्च । अतः वात्सल्यादेव ॥३०॥
'[37]भूतेषु हरिरित्येव हर्यर्पणधिया तथा । सर्वभूतेषु च हरेः पूजा
कार्याऽऽत्मवेदिभिरि'ति पाद्मे ॥ ३७ ॥ इति चतुर्थतात्पर्ये विंशोऽ-
ध्यायः ॥ २० ॥

## एकविंशोऽध्यायः

'[10]देवेभ्य ऋषयो भूपाश्चोच्यन्ते शक्तिमत्तया । क्वचित्क्वचि-

---

...नम् ॥ १२ ॥ भिन्नस्य लिङ्गस्य गुणप्रवाहं द्रव्यक्रियाकारकचेत-
...नः । दृष्ट्वाऽऽसु सम्पत्सु विपत्सु सूरयो न विक्रियन्ते मयि बद्ध-
...हृदाः ॥ १३ ॥ स्पृशन्तं पादयोः शीर्ष्णा व्रीडितं स्वेन कर्मणा ।
...कतुं परिष्वज्य विद्वेषं विससर्ज ह ॥ १९ ॥ भगवानपि विश्वात्मा
...नोपहृतार्हणः । समुज्जिहानया भक्त्या गृहीतचरणाम्बुजः ॥ २० ॥
...जगत्यां जगदीश वैशसं स्यादेव यत्कर्मणि नः समीहितम् । करोषि
...ल्वप्युरू दीनवत्सल स्व एव धिष्ण्येऽभिरतस्य किं तया ॥ २९ ॥
...थ त्वामत एव साधवो व्युदस्तमायागुणविभ्रमोदयम् । भव-
...ानुस्मरणादृते सतां निमित्तमन्यद्भगवन्न विद्महे ॥ ३० ॥ यज्ञेश्व-
...धिया राज्ञा वाग्वित्ताञ्जलिभक्तितः । सभाजिता ययुः सर्वे वैकुण्ठानु-
...ततः ॥ ३७ ॥

### एकविंशोऽध्यायः

को न्वस्य कीर्तिं न शृणोत्यभिज्ञो यद्विक्रमोच्छिष्टमशेषभूपाः ।

न्मोहनार्थं कादाचित्काच्च हेतुत'इति नारदीये ॥ १० ॥ '[26]प्रकाश वद्भुवो देवा मानुषाश्चापि केचने'ति वाराहे ॥ २६ ॥ '[29]एकात्म हरिरुद्दिष्टः प्रधानत्वात्समस्तत'इति च ॥ प्राय इत्यवधारणाक्षेपः 'प्रायःपदं स्यात्प्राचुर्ये चाक्षेपात्मावधारणे । अर्थतोऽवधृतिः क्षेपो मुखा क्षेपोऽवधारणमि'ति च ॥ २९ ॥ [33]सम्पद्यते प्राप्यते ॥ ३३ ॥ [34]प्रधानादीन् गृहीत्वा जीवं प्राप्य पुण्यकर्मभिर्ज्ञायते । यथा गुणव दिन्धनेऽग्निर्मथनादिना ॥ ३४ ॥ [37]हरिरिन्द्रो यच्चरणाभिवन्दना दनपायिनीं लक्ष्मीमाप । सोऽपि विष्णुर्ब्राह्मणप्रियः । 'यत्प्रसादेन देवेन्द्रो वेदोदितयशा अभूत् । सोऽपि विष्णुरमेयात्मा सदा ब्राह्मण वत्सल'इति हरिवंशेषु ॥ ३७ ॥ '[39]तस्मान्मोक्षसुखात्परं हविर्भुजा देवानामप्यत्र संसारेऽस्ति किम् ? ॥ ३९ ॥ [40]पारमहंस्यवर्या गावो यस्य ॥ ४० ॥ '[45]वेनस्थो राजसो जीवः पृथुना स्वर्गतिं गतः । स्वयं

---

लोकाः सपाला उपजीवन्ति काममद्यापि तन्मे वद कर्म शुद्धम् ॥ १० ॥ अस्ति यज्ञपतिर्नाम केषाञ्चिदिह सत्तमाः । इहामुत्र च लक्ष्यन्ते ज्योत्स्नावत्यः कचिद्भुवः ॥ २६ ॥ ईदृशानामथान्येषामजस्य च भवस्य च । प्रह्लादस्य बलेश्चापि कृत्यमस्ति गदाभृतः ॥ २८ ॥ राज्यस्वर्गाप वर्गाणां प्रायेणैकात्महेतुता । दौहित्रादीनृते मृत्योः शोच्यान् धर्मविमो हितान् ॥ २९ ॥ असाविहानेकगुणाध्वरैः सता पृथग् विधैर्द्रव्यगुण क्रियोक्तिभिः । सम्पद्यतेऽर्थाशयलिङ्गनामभिर्विशुद्धविज्ञानघनस्वरूपत ॥ ३३ ॥ प्रधानकालाय कर्मसङ्ग्रहः शरीरशेषं प्रतिपद्य चेतनः । क्रिया फलत्वेन विभुर्विभाव्यते यथाऽनलो दारुषु तद्गुणात्मकः ॥ ३४ ॥ ब्रह्मण्यदेवः पुरुषः पुरातनो नित्यं हरिर्यच्चरणाभिवन्दनात् । अवाप लक्ष्मीमनपायिनीं यशो जगत्पवित्रं च महत्तमाग्रणीः ॥ ३७ ॥ पुमांल्ल भेताप्यतिवेलमात्मनः प्रसादतोऽत्यन्तशमं स्वतः स्वयम् । यन्नित्य सम्बन्धनिषेवया ततः परं किमत्रास्ति सुखं हविर्भुजाम् ॥ ३९ ॥ अश्नात्यनन्तः खलु तत्वकोविदैः श्रद्धाहुतं यन्मुख ईज्यनामभिः । न वै तथा चेतनया बहिष्कृते हुताशने पारमहंस्यवर्यगुः ॥ ४० ॥ पुत्रेण जयते



तम एवाप सात्त्विकः पृथुतामगादि'ति ब्रह्माण्डे ॥ ४५ ॥ [48]अहो पमित्यादि तत्स्थपरमेश्वरापेक्षया । 'यो ब्रह्मक्षत्रमाविश्ये'ति वचनात् ॥ ॥ ४८ ॥ इति चतुर्थतात्पर्ये एकविंशोऽध्यायः ॥ २१ ॥

## द्वाविंशोऽध्यायः

'[9]सर्वज्ञाश्च विरिञ्चाद्या न जानीयुर्हरिं परम् । हेतवो जगतोऽस्य यथासौ वेद केशव'इति तन्त्रसारे ॥ ९ ॥ '[16]हरेस्तु प्रतिमा ज्ञास्तत्रस्थः केशवः स्वयम् । ददाति ज्ञानमीशेशः परमात्मा स्वयं विभुरि'ति च ॥१६॥ [20]कषणेन गच्छतीति कषायः पापं तदुभयमेव मलम् । 'रतिः परात्मनि हरावन्यत्रारतिरेव च । पुमर्थसाधनं ज्ञेयं तोऽन्यन्मुख्यमिष्यत'इति ॥ २० ॥ [26]अबीजं हृदयं बीजहृदयं विना । 'जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं बाह्यमेव च । बाह्योपाधिर्लयं

---

लोक इति सत्यवती श्रुतिः । ब्रह्मदण्डहतः पापो यद्वेनोऽत्यतरत्तमः ॥ ॥४५॥ हिरण्यकशिपुश्चापि भगवन्निन्दया तमः । विविक्षुरत्यगात्सूनोः प्रह्लादस्यानुभावतः ॥ ४६ ॥ वीरवर्य पितः पृथ्व्याः समाः सञ्जीव शाश्वतीः । यस्येदृश्यच्युते भक्तिः सर्वलोकैकभर्तरि ॥ ४७ ॥ अहो वयं ह्यद्य पवित्रकीर्ते त्वयैव नाथेन मुकुन्दनाथाः । यदुत्तमश्लोकतमस्य विष्णोर्ब्रह्मण्यदेवस्य कथां व्यनंक्षि ॥ ४८ ॥

### द्वाविंशोऽध्यायः

नैव लक्षयते लोको लोकान् पर्यटतोऽपि यान् । यथा सर्वदृशः सर्व आत्मानं येऽस्य हेतवः ॥ ९ ॥ व्यक्तं ह्यात्मवतामात्मा भगवानात्मभावनः । स्वानामनुग्रहायेमां सिद्धरूपी चरत्यजः ॥ १६ ॥ सत्यैव राजन् भवतो मधुद्विषः पादारविन्देऽस्य गुणानुवादिनी । रतिः दुरापा या विधुनोति नैष्ठिकी कामं कषाय मलमन्तरात्मनः ॥ २० ॥ शास्त्रेष्वियानेव सुनिश्चितो नृणां क्षेमस्य सम्यग्विमृशेषु हेतुः । असङ्ग आत्मव्यतिरिक्तवस्तुनि दृढा रतिर्ब्रह्मणि निर्गुणे च या ॥ २१ ॥ हरेर्मुहु स्तत्परकर्णपूरया गुणाभिधानेन विजृम्भमाणया । भक्त्या ह्यसङ्गः सदसत्परात्मनि स्यान्निर्गुणे ब्रह्मणि चाञ्जसा रतिः ॥ २५ ॥ यदा रति-

याति मुक्तावन्यस्य तु स्थितिः । सर्वोपाधिविनाशे हि प्रतिबिम्बः का
भवेत् । कथं चात्मविनाशाय प्रयत्नः सेत्स्यति क्वचित् । अपुमर्थ
च मुक्तेः स्यादभावात्पुंस एव तु । ज्ञानज्ञेयाद्यभावाच्च सर्वथा नोपपद्यते
तस्मादेतन्मतं येषां तमोनिष्ठा हि ते मता'इति स्कान्दे ॥ २६ ॥
[27]दग्धाशयः । बीजाशयनाशे तद्गुणानां ज्ञानादीनामभावान्न किञ्चि
द्विचक्षीत । परात्मनोर्यदा व्यवधानं संसारावस्थायां तदा स्वप्न इवेत्ये
तावद्बीजहृदयनाशे त्वपुरुष एव । आत्मनाश एवेत्यर्थः । अत
संसारावस्थैवोत्तमा स्यात् । 'भिदा यदि न दृश्येत जीवात्मपरमात्मनोः
मुक्तौ तदा विमोक्षाय को यत्नं कर्तुमर्हती'ति ब्रह्माण्डे ॥ 'मग्नस्य
परेऽज्ञाने किं न दुःखकरं भवेत् । प्रवृत्तिधर्ममेवाहं मन्ये भरतसत्तमे'ति
मोक्षधर्मेषु ॥ २७ ॥ [30]एवंविधाज्ञानकारणमाह । इन्द्रियैर्विषयाकृ
रित्यादि । 'बहुस्मरणशक्तिस्तु चेतनेत्युच्यते बुधैरि'ति शब्दनिर्णये
॥ ३० ॥ '[35]स्वपक्षपातस्त्वभ्यासाद्भोगार्थं व्यापृतस्य तु । भवेत्ततो
नेकशास्त्रयथार्थस्मरणेशिता । नश्यत्यतः स्मृतेर्नाशाद्भगवत्पक्षपातिता
विनश्येत्तेन चैवास्य भवेज्ज्ञानविपर्ययः । न च ज्ञानविपर्यासादन्यन्ना
करं क्वचित् । सर्वस्यैतस्य मूलं हि दुष्टसंसर्ग एव तु । दुष्टसङ्गा
विरक्तस्याप्यन्यथाज्ञानकारणम् । दुष्टसङ्गाद्धि विष्णोश्च स्वात्मत्वं मन्य
बुधः । अभावं स्वात्मनोऽन्यस्य मुक्तिं चापि निरात्मतामि'त्या

---

र्ब्रह्मणि नैष्ठिकी पुमानाचार्यवान् ज्ञानविरागरंहसा । दहत्यवीजं
जीवकोशं पञ्चात्मकं योनिमिवोत्थितोऽग्निः ॥ २६ ॥ दग्धाशयो मु
समस्ततद्गुणो नैवात्मनो बहिरन्तर्विचष्टे । परात्मनोर्यद्व्यवधानं पुरस्ता
स्वप्ने यथा पुरुषस्तद्विनाशे ॥ २७ ॥ इन्द्रियैर्विषयाकृष्टैराक्षिप्तं ध्याय
मनः । चेतनां हरते बुद्धेः स्तुम्बस्तोयमिव ह्रदात् ॥३०॥ भ्रश्यत्यनुस्मृ
श्चित्तं ज्ञानभ्रंशः स्मृतिक्षये । तद्रोधं कवयः प्राहुरात्मापन्हवमात्म
॥३१॥ न कुर्यात्कर्हिचित्सङ्गं तमस्तीव्रं तितीर्पुणा । धर्मार्थका
मोक्षाणां यदत्यन्तविघातकम् ॥ ३४ ॥ तत्रापि मोक्ष एवार्थ आत्यन्ति
तयेष्यते । त्रैवर्ग्यार्थो यतो नित्यं कृतान्तभयसंयुतः ॥ ३५ ॥



स्कान्दे ॥ ३५ ॥ '[37]मनोमात्रं हरेर्यस्मान्मनसा मीयते जगत् । व्याप्ते
मनसि विष्णोश्च स्थितत्वाद्वासनामयम् । वस आच्छादनेत्यस्माद्धातोर्वा
वासनामयम् । अतो विष्णोरनीहायां लीयते सकलं जगत् ॥ ३७ ॥
[38]अनीहावस्थ एवासौ मुमुक्षुभिरवाप्यते । एवं विद्वान्बन्धशक्तिं व्युदस्य
हरिमाप्नुते । प्रकृतिर्भिदा च माया च भ्रमश्चेत्यभिधीयते । बन्ध-
शक्तिर्यया लोको बम्भ्रमीत्यनिशं भुवी'ति तन्त्रसारे ॥ ३८ ॥
[39]अनुवृत्तिरिति प्राज्ञैर्जीवन्मुक्तिरुदीर्यत'इति शब्दनिर्णये ॥ ३९ ॥
[40]सर्वसत्ताप्रदत्वात्तु सर्वतत्त्वं हरिः स्मृतः । सर्वत्र विततत्वाद्वा सोऽहं
त्वमिति चोच्यते । सर्वान्तर्यामकत्वात्तु न जीवात्मत्वतो हरिरि'ति
तत्त्वनिर्णये ॥ त्वमनयोः स्थावरजङ्गमयोर्मध्ये एको जीवः विष्वगाधिः
नानादुःखःसन् हृदि स्थितमवेहि अहं च स जीवोऽस्मि ज्ञानान्महा-
भवामि यः क्षेत्रवित् ॥ सर्वस्य प्रत्यक्चकास्ति स भगवानिति ।
'व्यवधानेनान्वयोऽपि योग्यतापेक्षया भवेदि'ति शब्दनिर्णये ॥ 'अभि-
मानस्त्वहङ्कार आत्मा चेत्यभिधीयत'इति च ॥४०॥ '[41]यत्स्वरूपतया
भातमज्ञानां गगनादिकम् । विवेकज्ञानिनां रज्जौ सर्पमावद्विधूयते ।
तभित्यमुक्तभावेन निरस्तप्रकृतिं भजेदि'ति ज्ञानविवेके ॥ 'न भ्रान्ति-
गतो दृष्टिर्न भ्रान्तिर्हरिदर्शनम् । अन्योन्यात्मितया दृष्टिर्भ्रान्ति-
रित्यवधार्यतामि'ति च । 'मायेति ज्ञाननाम स्यान्मायेति प्रकृतिस्तथा ।

---

मनोमात्रमिदं विश्वं यथा स्वप्ने मनः क्रिया । क्रिया च वासना-
मात्रं साऽनीहायां प्रलीयते ॥ ३७ ॥ आत्मा त्वनीहया साक्षा-
त्स्वयं ज्योतिः प्रसिध्यति । एवं व्युदस्यात्ममायां जानंस्तूपरमे-
न्मुनिः ॥३८॥ न यत्र निद्रा मूर्च्छा वा नार्थदृक् च मनोरथः । नानुवृत्तिर्न
लयस्तद्ब्रह्म परमं विदुः ॥३९॥ तत्त्वं नरेन्द्र जगतामथ तस्थुषां च देहे-
न्द्रियासुधिषणात्मभिरावृतानाम् । यः क्षेत्रवित्त्वमनयोर्हृदि विष्वगाधिः
प्रत्यक्चकास्ति भगवांस्तमवेहि सोऽस्मि ॥४०॥ यस्मिन्निदं सदसदात्मतया
विभाति मायाविवेकविधुतिः स्रजि वाहिबुद्धिः । तं नित्यमुक्तपरिशुद्ध-

ज्ञानं स्वरूपं विष्णोस्तु प्रकृतिर्न हरेस्तनुः । एवं विवेकिनो विश्वं ब्रह्म-
रूपेण नेष्यत'इति वाराहे ॥ ज्ञानप्रकृत्याख्यमायाद्वयस्य विवेकज्ञाना-
त्सदसतोर्विष्ण्वात्मतया प्रतीतिः स्रज्यहिबुद्धिरिव विधूयत इत्यर्थः ।
'पञ्चभूतात्मकं देहं विष्णोः पश्यन्त्ययोगिनः । तथा न योगिराद्भ्रान्तो
ज्ञानं देहो यतो हरेरि'ति षाड्गुण्ये ॥ ४१ ॥ [42]द्विमतयः जगति
भगवति च प्रतीतियुक्ता अपि भक्तिविशेषात्तत्त्वं नोद्ग्रथयन्ति । प्रति-
संसारं गुणास्तेषां विरुद्धा एव प्रतीयन्ते यतः । 'नैजः सर्वगुणोत्कर्षः
सर्वेभ्यो महदुच्यत'इति शब्दनिर्णये । 'अनाद्यन्तं परं ब्रह्म न देवा
ऋषयो विदुः । एकस्तद्वेद भगवान्प्रभुर्नारायणः स्वराडि'ति मोक्ष-
धर्मेषु ॥ ४२ ॥ '[64-65]गुरुविप्रेषु भक्त्या च परेषां हितकृत्तया ।
प्रश्रयेण च कीर्त्या च पृथू राममनुव्रत'इति ब्रह्माण्डे । 'न गुरुर्न च
धर्मोऽस्ति रामदेवस्य कुत्रचित् । तथापि धर्मरक्षार्थं गुरुभक्तिमदर्शय-
दि'ति वाराहे ॥६४, ६५॥ इति चतुर्थतात्पर्ये द्वाविंशोऽध्यायः ॥२२॥

## त्रयोविंशोऽध्यायः

'[11]आविर्भावतिरोभावौ ज्ञानस्य ज्ञानिनोऽपि तु । अपेक्ष्याज्ञ-

---

विबुद्धतत्त्वं प्रत्यूढकर्मकलिलप्रकृतिं प्रपद्ये ॥ ४१ ॥ यत्पादपङ्कजपलाश-
विलासभक्त्या कर्माशयग्रथितमुद्ग्रथयन्ति सन्तः । तत्वं न तद्द्विमत-
योऽपि विरुद्धमार्गस्रोतोगुणास्तमरणं भज वासुदेवम् ॥ ४२ ॥ यैरीदृशी
भगवतो गतिरात्मवाद एकान्ततो निगमभिः प्रतिपादिता नः । तुष्यन्त्व-
दभ्रकरुणाः स्वकृतेन नित्यं को नाम तत्प्रतिकरोति विनोदपात्रम् ॥ ४९ ॥
बृहस्पतिर्ब्रह्मवादे आत्मतत्त्वे स्वयं हरिः । भक्त्या गो-गुरु-विप्रेषु विष्व-
क्सेनानुवर्तिषु ॥ ६४ ॥ ह्रिया प्रश्रयशीलाभ्यामात्मतुल्यः परोद्यमे ।
कीर्त्योर्ध्वगीतया पुम्भिस्त्रैलोक्ये तत्र तत्र ह । प्रविष्टः कर्णरन्ध्रेषु स्त्रीणां
रामः सतामिव ॥ ६५ ॥

## त्रयोविंशोऽध्यायः

तस्यानया भगवतः परिशुद्धकर्मसत्वात्मनस्तदनुसंस्मरणानुपूर्व्या ।



तथा ज्ञानमुत्पन्नमि'ति चोच्यत'इति तन्त्रसारे ॥ ११ ॥ '[12]अपरोक्ष-
तया वृत्तिज्ञानभेदनिरीक्षणम् । स्वरूपज्ञानसंस्थित्या ज्ञानत्याग उदीर्यते ।
स्वरूपज्ञानतः सम्यग्रतिर्विष्णुकथासु चे'ति ब्रह्मतर्के ॥१२॥ [13]ब्रह्मणि
भूतः ॥१३॥ '[15]अस्येदं कारणमिति ज्ञानमेव विलापनम् । समाधि-
काले विज्ञेयं देहादेर्दर्शनात्पुनरि'ति च ॥ १५ ॥ '[18]मायेति प्रकृति-
रिति मायाजीवश्च कथ्यते । शेतेऽनुकेशवं यस्मात्तस्मादनुशयोऽपि च ।
एतैस्तु नामभिर्वाच्या श्रीर्विष्णोरनपायिनी । तयैवानुशयी जीवस्तया
युक्तो यतः सदा । पुरुषः शयनात्पूर्षु तथा हानादहं स्मृतः । अप्राकृत-
तनुत्वात्तु स्वरूपं हरिरुच्यते । नित्यचिद्दर्शनान्नित्यं ब्रह्म पूर्णत्वतः
सदे'ति भागवततन्त्रे ॥१८॥ '[25]अनपेक्षो गुणैः पूर्णो धन्य इत्युच्यते
बुधैरि'ति शब्दनिर्णये ॥ २५ ॥ इति चतुर्थतात्पर्ये त्रयोविंशोऽ-
ध्यायः ॥ २३ ॥

## चतुर्विंशोऽध्यायः

'[11]राजपुत्रीं शुकीमग्निरावर्तन्तीं प्रदक्षिणम् । आदायान्तरधाद्दानसमये

---

ज्ञानं विरक्तिमदभून्निशितेन येन चिच्छेद संशयपदं निजजीवकोशम् ॥
॥११॥ छिन्नान्यधीरधिगतात्मगतिर्निरीहस्तत्तत्यजेऽच्छिनदिदं वयुनेन
येन । तावत्तु योगगतिभिर्यतिरप्रयत्तो यावद्गदाग्रजकथासु रतिं न
कुर्यात् ॥ १२ ॥ एवं स वीरप्रवरः संयोज्यात्मानमात्मनि । ब्रह्मभूतो
दृढं काले तत्याज स्वं कलेवरम् ॥१३॥ उत्सर्पयन्नसून् मूर्ध्नि क्रमेणावेश्य
निःस्पृहः । वायुं वायौ क्षितौ कायं तेजस्तेजस्ययूयुजत् ॥१५॥ इन्द्रियाणि
समस्तानि तन्मात्राणि यथोद्भवम् । भूतादिस्तान् समुत्क्षिप्य महत्यात्मनि
सन्दधे ॥ १७ ॥ तं सर्वगुणविन्यासं जीवे मायामये न्यधात् । तं चानु-
शयमात्मस्थमसावनुशयी पुमान् । ज्ञानवैराग्यवीर्येण स्वरूपस्थो व्यधा-
त्प्रभुः ॥ १८ ॥ अहो इयं वधूर्धन्या या चैवं भूभुजां पतिम् । सर्वात्मना
पतिं भेजे यज्ञेशं श्रीवधूरिव ॥ २५ ॥

## चतुर्विंशोऽध्यायः

सामुद्रीं देवदेवोक्तामुपयेमे शतद्रुतिम् । यां वीक्ष्य चारुसर्वाङ्गीं

मन्मथातुर'इति ब्राह्मे ॥ ११ ॥ [29]मां श्रियम्। 'ऋजवो नाम देवा योग्या ब्रह्मपदस्य तु। त एव शतजन्मानि विशेषोपासका हरेः प्राप्य ब्रह्मपदं पश्चाच्छ्रियं प्राप्यानुमोदिताः। तया ततो हरिं यान्ति वसन्ति हरिसन्निधौ। अनादिकालभक्ताश्च ज्ञानिनस्ते न संशयः विशिष्टा ज्ञानभक्त्यादौ सर्वजीवनिकायतः। सर्वदापि विशेषेण शत जन्मप्रयत्नतः। स्वपदप्राप्तिरुद्दिष्टा ततो मुक्तिरवाप्यते। तथै चत्वारिंशद्भिः पदं शैवं च जन्मभिः। विंशद्भिरैन्द्रं दशभिरन्येषा मप्युदीरितमि'ति षाड्गुण्ये ॥ २९ ॥ [30]अथ एवमनादिभक्तोऽहं यत अतः प्रिया यूयम् ॥३०॥ '[33]सर्वान्तर्यामिकत्वात्तु सर्वनामा जनार्दनः न तु सर्वस्वरूपत्वात्सर्वेशोऽसौ हरिर्यत' इति ब्रह्मतर्के ॥ ३३ ॥ [55]स्वाराज्यस्य इन्द्रादेः ॥५५॥ '[58]सङ्गो भागवतैर्भूयानपुनर्भवमात्रतः यतो विशिष्टमानन्दं मुक्तौ जनयति स्फुटमि'ति च ॥ ५८ ॥ [59]अङ्घ्र्योर्जातयोः कीर्तितीर्थयोः ॥ ५९ ॥ [61]विश्वस्मिंस्थितमपि न भात्यज्ञानाम् ॥ ६१ ॥ [62]यस्य जीवादिभ्यो भेदबुद्धिः। स दिवा

---

किशोरीं सुष्ठ्वलङ्कृताम्। परिक्रमन्तीमुद्वाहे चकमेऽग्निः शुकीमिव ॥११॥ स्वधर्मनिष्ठः शतजन्मभिः पुमान् विरिञ्चतामेति ततः परं हि माम्। अव्याकृतं भागवतोऽथ वैष्णवं पदं यथाहं(हं) विविधैः कलात्यये ॥ २९ ॥ अथ भागवता यूयं प्रियाः स्थ भगवान्यथा। न मे भागवतानां च प्रेयानन्योऽस्ति कर्हिचित् ॥ ३० ॥ रुद्र उवाच—जितं व आत्मविद्धुर्याः स्वस्तये स्वस्तिरस्तु वः। भवतां राधसे राध्यं सर्वस्मा आत्मने नमः ॥ ॥ ३३ ॥ भवान् भक्तिमतां लभ्यो दुर्लभः सर्वदेहिनाम्। स्वराज्यस्याप्यभिमता एकान्तेनात्मविद्गतिः ॥५५॥ क्षणार्धेनापि तुलये न स्वर्गं नापुनर्भवम्। भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥ ५८ ॥ अथानघाङ्घ्र्योस्तव कीर्तितीर्थयोरन्तर्बहिः स्नानविधूतपाप्मनाम्। भूतेष्वनुक्रोशसुसत्वशीलिनां स्यात्सङ्गमोऽनुग्रह एष नस्तव ॥ ५९ ॥ यत्रेदं व्यज्यते विश्वं विश्वस्मिन्न च (व) भाति यत्। तत्त्वं ब्रह्म परंज्योतिराकाश इव विस्तृतम् ॥ ६१ ॥ यो माययेदं पुरुरूपयाऽसृजद्बिभर्ति भूयः क्षपये



सम्यग्ज्ञानं सम्यग्ज्ञानिविषया सत्यैवेत्यर्थः। 'रात्रिरज्ञानमुद्दिष्टं सम्यग्ज्ञानं दिवा स्मृतमि'ति शब्दनिर्णये ॥ 'जीवेभ्यो जडतश्चैव भेदज्ञानं हरेः सदा। वास्तवं ज्ञानमुद्दिष्टं तेन मुक्तिरवाप्यत'इति षाड्गुण्ये ॥ ६२॥ [63]भूतेन्द्रियान्तःकरणैरुपलक्ष्यते ॥ ६३ ॥ [64]सुप्तशक्तिः स्वात्मन्येवाप्तशक्तिः। 'प्रकृतेः स्वाप उद्दिष्टो हर्यन्यस्य त्वदर्शनम्। विशेषेण हरौ चापि रतिर्ज्ञानात्मिका यत'इति सत्यसंहितायाम् ॥६४॥ '[65]अवधारणे मधुशब्दःस्यात्सारमात्रं तु सारघमि'ति शब्दनिर्णये ॥ ६५ ॥ [68]अस्मादेतद्भवतीत्युपपत्त्यपेक्षां विनापि स्वभावत एव ॥ ६८ ॥ [69]अहरहः क्लेशमोक्षः सुप्तौ। तावद्वेदेत्याक्षेपो दौर्लभ्यज्ञापनार्थम् ॥ ६९ ॥ इति चतुर्थतात्पर्ये चतुर्विंशोऽध्यायः ॥ २४ ॥

## पञ्चविंशोऽध्यायः

'[8]यथावत्कर्म कर्तुस्तु ज्ञानसाहाय्यकारकम्। अन्यथाकुर्वतः कर्म निरयाय भविष्यतिं। तथापि कर्म निन्दन्ति न यतः कर्तुमञ्जसा।

---

विक्रियः। यद्भेदबुद्धिः सदिवाऽऽत्म संस्थया तमात्मतन्त्रं भगवन्प्रतीमहि ॥ ६२ ॥ क्रियाकलापैरिदमेव योगिनः श्रद्धान्विताः साधु यजन्ति सिद्धये। भूतेन्द्रियान्तःकरणोपलक्षणं वेदे च तन्त्रे च त एव कोविदाः ॥ ॥ ६३ ॥ त्वमेक आद्यः पुरुषः सुतशक्तिस्तया रजःसत्वतमो विभिद्यते। महानहं खं मरुदग्निवार्धराः सुरर्षयो भूतगणा इदं यतः ॥ ६४ ॥ सृष्टं स्वशक्त्येदमनुप्रविष्टश्चतुर्विधं पुरमात्मांशकेन। अथो विदुस्त्वां पुरुषं सन्तमत्र भुङ्क्ते हृषीकैर्मधु सारघं यतः ॥ ६५ ॥ कस्त्वत्पदाब्जं विजहाति पण्डितो यत्ते पुमानप्ययमब्जकेतनः। विशङ्कयाऽस्मद्गुरुरर्चति स्म यद्विनोपपत्तिं मनवश्चतुर्दश ॥६८॥ यत्स्पृष्टोऽहरहर्मुक्तक्लेशः शेतेऽमृताम्बुधौ। तावद्वेदाथ तत्तेऽङ्घ्रिं जनोऽनुस्मरते च तत् ॥ ६९ ॥

## पञ्चविंशोऽध्यायः

नारद उवाच—श्रेयस्त्वं कतमद्राजन् कर्मणाऽऽत्मन ईहसे। दुःखहानिः सुखावाप्तिः श्रेयस्तन्नेह (ये)चेष्यते ॥ ४ ॥ एते त्वां संप्रतीक्षन्ते स्मरन्तो वैशसं तव। सम्परेतमयःकूटैश्छिन्दन्त्युत्थितमन्यवः ॥ ८ ॥

शक्यं ज्ञानफलस्यापि बहुत्वान्मोहनाय चे'ति ब्रह्माण्डे ॥ ८ ॥ ‘[10]देव-जीवाभिमानी तु ब्रह्मैव तु चतुर्मुखः । मानुषाणां तु जीवानामभिमानी पुरञ्जनः । स तु राजा हरेः पुत्रस्त्वासुराणां कलिः स्वयम् । जीव-संसृतिवत्तस्मात्पुरञ्जनकथापि तु । तस्माज्जीवसृतिज्ञप्त्यै पुरञ्जनकथा मुनिः । नारदोऽश्रावयद्विद्वान्नृपं प्राचीनबर्हिषम् । प्रायस्तु तत्कथा जीवे स्थिता प्रत्येकशोऽपि तु । प्रत्येकं यत्तु युज्येत तदुन्नेयं यथा तथा । उक्तं भागवतेऽप्येतत्पुराणे यावदिष्यते । प्रत्येकशस्तु जीवानां तदन्य-त्तस्य केवलमि'ति तन्त्रभागवते ॥१०॥ ‘[21]ये पुरञ्जनभृत्याद्या भार्याद्याः सर्व एव च । तेऽपि मानुषबुद्ध्यादेर्विज्ञेया अभिमानिनः । गायत्र्या-द्यास्तु देवानां तेऽपि चैतेषु संस्थिताः । अलक्ष्मीद्वापराद्यास्तु आसुरा-स्तेऽपि मानुषा' इति च ॥ २१ ॥ ‘[52]दक्षिणश्रोत्रमार्गेण देवलोकं व्रजत्यसौ । वामश्रोत्रेण पितृणामिति वेदविदो विदुरि'ति प्रवृत्ति-तन्त्रे ॥ ५२ ॥ इति चतुर्थतात्पर्ये पञ्चविंशोऽध्यायः ॥ २५ ॥

---

अत्र ते कथयिष्येऽहमितिहासं पुरातनम् । पुरञ्जनस्य चरितं निबोध गदतो मम ॥९॥ आसीत्पुरञ्जनो नाम राजा राजन् बृहच्छ्रवाः । तस्या-विज्ञातनामाऽऽसीत्सखा विज्ञातचेष्टितः ॥ १० ॥ यदृच्छयाऽऽगतां तत्र ददर्श प्रमदोत्तमाम् । भृत्यैर्दशभिरायान्तीमेकैकशतनायकैः ॥ २० ॥ तेषां परिवृढो राजन् सर्वेषां बलिमुद्वहन् । सस्त्रीकाणां सखा तस्याः बहुरूपोऽग्रणीः स्त्रियाः ॥ २१ ॥ पञ्चद्वारस्तु पौरस्त्या दक्षिणैका तथोत्तरा । पश्चिमे द्वे अमूषां ते नामानि नृप वर्णये ॥ ४७ ॥ खद्योताविर्मुखी च प्राग्द्वारावेकत्र निर्मिते । विभ्राजितं जनपदं याति ताभ्यां द्युमत्सखः ॥ ४८ ॥ नलिनी नालिनी च प्राग्द्वारावेकत्र निर्मिते । अवधूतसखस्ताभ्यां विषयं याति सौरभम् ॥ ४९ ॥ मुख्यानाम पुरस्ता-द्वास्तयाऽऽपणबहूदनौ । विषयौ याति पुरराड् रसज्ञविपणान्वितः ॥ ॥५०॥ पितृभूर्नाम पुर्या द्वार्दक्षिणेन पुरञ्जनः । राष्ट्रं दक्षिणपाञ्चालं याति श्रुतधरान्वितः ॥ ५१ ॥ देवभूर्नाम पुर्या द्वा उत्तरेण पुरञ्जनः । राष्ट्र-मुत्तरपाञ्चालं याति श्रुतधरान्वितः ॥ ५२ ॥



## षड्विंशोऽध्यायः

[6]अलुब्धो लोकोपकारार्थं घ्नन्नात्मार्थादधिकमपि हन्यात् । 'उपकारः सतां येन तत्कृत्वा नैव दुष्यति । अतीव निन्दितमपि बहु-हिंसायुगेव वा । अथवा ज्ञानिनः कर्म न दुष्टमपि लिप्यत'इत्यध्यात्मे ॥ ॥ ६ ॥ इति चतुर्थतात्पर्ये षड्विंशोऽध्यायः ॥ २६ ॥

## सप्तविंशोऽध्यायः

‘[25]अलौकिकं च शास्त्रीयं कर्तव्यं लौकिकं कुतः । लोकार्थं शास्त्रहा याति निरयं त्वितरः सुरानि'ति पाद्मे ॥ २५ ॥ इति चतुर्थ-तात्पर्ये सप्तविंशोऽध्यायः ॥ २७ ॥

## अष्टाविंशोऽध्यायः

‘[40]स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीती'ति श्रुति-प्रसिद्धः । स्वप्न इवेति दृष्टान्तत्वेनोच्यते । स्वप्ने हि जीवस्यास्वातन्त्र्यं प्रसिद्धम् । अतस्तत्र परमेश्वराधीनत्वं प्रसिद्धमेव । अतो जीवव्यतिरिक्त

---

षड्विंशोऽध्यायः

आसुरीं वृत्तिमाश्रित्य घोरात्मा निरनुग्रहः । न्यहनन्निशितैर्बाणै-र्वनेषु वनगोचरान् ॥ ५ ॥ तीर्थेषु श्रुतिदृष्टेषु राजा मेध्यपशून् वने । यावदर्थमलं लुब्धो हन्यादिति नियम्यते ॥ ६ ॥ य एवं कर्म नियतं विद्वान्कुर्वीत वा न वा । कर्मणा तेन राजेन्द्र ज्ञानेन स न लिप्यते ॥७॥

सप्तविंशोऽध्यायः

द्वाविमावनुशोचन्ति बालावसदवग्रहौ । यल्लोकशास्त्रोपनतं न राति न तदिच्छति ॥ २५ ॥ अथो भजस्व मां भद्र भजतीं मे दयां कुरु । एतावान् पौरुषो धर्मो यदार्ताननुकम्पते ॥ २६ ॥

अष्टाविंशोऽध्यायः

स व्यापकतयाऽऽत्मानं व्यतिरिक्ततयाऽत्मनि । विद्वान् स्वप्न

ईश्वरः सिद्धः । ‘स्वप्नो यतो न स्वतन्त्रस्तत्र तद्दर्शकः परः । जीवा-
दन्यस्तु विज्ञेयः स विष्णुरवधार्यतामि’ति वाराहे ॥४०॥ [57]इन्द्रियाणि
यत्र सङ्गृह्यन्ते स गोलकेन्द्रियसङ्ग्रहः ॥ ५७ ॥ ‘[62]जीवसत्ताप्रदत्वाच्च
सदृशत्वाच्च केशवः । कथ्यते तदभेदेन न तु जीवः स्वरूपत’इति च॥
॥ ६२ ॥ इति चतुर्थतात्पर्ये अष्टाविंशोऽध्यायः ॥ २८ ॥

## एकोनत्रिंशोऽध्यायः

‘[20]सुखवद्दूरतो दृश्यं तत्काले दुःखमेव यत् । मृगतृष्णेत्यतः
प्राहुर्भोगं वैषयिकं बुधा’ इति शब्दनिर्णये ॥ २० ॥ [33]तत्प्रति-
क्रियाऽपि दुःखमेव ॥ ३३ ॥ ‘[36]संसृतेः स्वप्नसाम्यं तु यथार्थज्ञान-
वर्जनमि’ति च । ‘जाग्रत्यविद्यमानं तु देहात्मत्वादि केवलम् ।
अविद्यमानं स्वप्ने तु जाग्रत्त्वज्ञानमेव चे’ति पाड्गुण्ये ॥३६॥ ‘[43]प्रजापति-
पतिर्ब्रह्मा विरिञ्चश्चेति कथ्यत’ इति शब्दनिर्णये ॥ ४३ ॥ ‘[46]मन्त्र-
लिङ्गैर्व्यवच्छिन्नं वेदशब्दोक्तमात्रकम् । वेदो वदन्नपि हरिं न
सम्यग्वक्ति कुत्रचित् । नारोहयत्यनुभवमप्रसिद्धस्वरूपतः । अथाप्यनु-

---

इवास्पृश्य साक्षिणं विरराम ह ॥ ४० ॥ पञ्चेन्द्रियार्था आरामा द्वारो
घ्राणादयः प्रभो । तेजोऽबन्नानि कोष्ठानि गोलकेन्द्रियसङ्ग्रहः ॥ ५७ ॥
अहं भवान्न चान्यस्त्वं त्वमेवाहं विचक्ष्व भो । न नौ पश्यन्ति कवय-
श्छिद्रं जातु मनागपि ॥ ६२ ॥

### एकोनत्रिंशोऽध्यायः

पञ्चेन्द्रियार्थप्रक्षेपः सप्तधातुवरूथकः । आकूतिर्विक्रमो बाह्यो
मृगतृष्णां प्रधावति ॥२०॥ दुःखेष्वेकतरेणापि दैवभूतात्महेतुषु । जीवस्य
न व्यवच्छेदः स्याच्चेत्तत्तत्प्रतिक्रिया ॥३३॥ नैकान्ततः प्रतीकारः कर्मणां
कर्म केवलम् । द्वयं ह्यविद्योपसृतं स्वप्ने स्वप्न इवानघ ॥ ३५ ॥ अर्थे-
ह्यविद्यमानेऽपि संसृतिर्न निवर्तते । मनसा लिङ्गरूपेण स्वप्ने विचरतो
यथा ॥ ३६ ॥ प्रजापतिपतिः साक्षाद्भगवान् गिरिशो मनुः । दक्षादयः
प्रजाध्यक्षा नैष्ठिकाः सनकादयः ॥ ४३ ॥ शब्दब्रह्मणि दुष्पारे चरन्त





भवारोहः प्रसन्ने केशवे भवेत् । किञ्चिदेव सुसम्यक् च स्वयं त्वनुभव-
त्यमुमि’ति वाराहे ॥ ४६ ॥ ‘[49]यदा त्वनुभवी भूयाच्छब्दमात्रानु-
रोधनम् । त्यक्त्वाऽथ तं विदुः प्राज्ञास्त्यक्तवेद इति स्म ह । यदैव
त्यक्तवेदः स्यादथास्मान्मुच्यते भयात् । प्रायस्तु वैदिका एव रुद्राद्या
अपि वै पुरा । वैदिकस्त्यक्तवेदश्च ब्रह्मैवैकः प्रजापतिः । ततस्तु केशवं
भक्त्या सम्पूज्य बहुजन्मसु । त्यक्तवेदत्वमापन्नाः प्रसादात्परमेष्ठिन’इति
महासंहितायाम् । ‘केवलं वेदशब्देन जानन्वैदिक उच्यते । वेदं
विनाप्यनुभवाज्ञानंस्तु त्यक्तवैदिक’इत्यध्यात्मे ॥ ‘तत्त्वं वेदानुसारेण
चिन्तयन्वैदिको भवेत् । वेद ऊहामनुसरेद्यस्य स त्यक्तवैदिक’इति
पाड्गुण्ये ॥ ४९ ॥ ‘[57]चित्तिर्बुद्धिरिति ज्ञेया चित्तं तु स्मृतिकारण-
मि’ति शब्दनिर्णये ॥ ५७ ॥ ‘[76]प्राणेन्द्रियान्तःकरणभेदेन त्रिविधं
मतम् । पञ्च पञ्चैव ते सर्वे प्राणबुद्धीन्द्रियाणि च । कर्मेन्द्रियाणि च
तथा तस्मात्पञ्चविधं स्मृतम् । लिङ्गं षोडशकं प्राहुर्मनसा सह तत्पुन-
रि’ति ब्राह्मे ॥७६॥ ‘[82]देहादिव्यतिरेकेण चिद्रूपोऽहमिति स्फुटम् ।
यदैवानुभवो भक्तिर्विष्णौ तद्दर्शनादनु । यस्यासौ मुच्यते क्षिप्रं संसारा-
न्नात्र संशय’ इति हरिवंशेषु ॥ ८२ ॥ ‘[83]संसारस्थमिदं सर्वमनित्यत्वा-
त्तथा यतः । अतः प्राहुः स्वप्नसमं प्राज्ञा जगदिदं मृषे’ति विष्णु-
संहितायाम् । ‘सुषुप्तिस्वप्नयोश्चैव स्वर्गव्योम्नोस्तथैव च । अन्योन्य-
नामता ज्ञेया मनोबुद्ध्योस्तथैव चे’ति शब्दनिर्णये ॥ अतो भूतं भव-

---

न्तकविस्तरे । मन्त्रलिङ्गैर्व्यवच्छिन्नं भजन्तो न विदुः परम् ॥ ४६ ॥ यदा
यस्यानुगृह्णाति भगवानात्मभावितः । स जहाति मतिं लोके वेदे च
परिनिष्ठिताम् ॥ ४९ ॥ स त्वं विचक्ष्व मृगचेष्टितमात्मनोऽन्तश्चित्तं
नियच्छ हृदि कर्णधुनीं च चित्तिम् । जह्यङ्गनाश्रममसत्तमयूथगाथं
प्रीणीहि हंसशरणं विरम क्रमेण ॥५७॥ भक्तिः कृष्णे दया जीवेष्वकुण्ठ-
ज्ञानमात्मनि । यदि स्यादात्मनो भूयादपवर्गस्तु संसृतेः ॥ ८२ ॥ अदृष्टं

द्भविष्यच्च स्वप्न इत्यर्थः । ‘रहो ब्रह्म तथा यज्ञः स्वः सत्यमिति गीयत’ इति च ॥ ८३ ॥ इति एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## त्रिंशोऽध्यायः

‘[3]पुरेषु त्वञ्जनाज्जीवः पुरञ्जन इतीरितः । पुराणां जननाद्विष्णुर्व्यञ्जकत्वं तयोरपी’ति तन्त्रभागवते ॥ ३ ॥ [17]दिव्यवर्षसहस्राणामिति सहस्रशब्दो बहुत्ववाची । ‘मानुषाणां वत्सराणां लक्षद्वादशकं पुरा । प्रचेतोभिरियं पृथ्वी पालिताऽव्याहतेन्द्रियैरि’ति ब्रह्माण्डे ॥ १७ ॥ [20]यज्ञो ब्रह्म विष्ण्वाख्यं ब्रह्म यथानुभवं न व्यवह्रियते । ‘सूक्ष्मेण मनसा विज्ञो वाचा वक्तुं न शक्तुम’इति भारते ॥२०॥ [26]सु अनिष्ठमनसि । ‘अनवस्थितबुद्धीनां द्वितीयं दृश्यते हरेः । सम्यक्स्वस्थितबुद्धीनामिदं सर्वं हरेर्वश’इति च । ‘नित्यं गृहीताः सत्वाद्या विग्रहाश्च त्रयः सदा । ज्ञानानन्दात्मकास्ते तु विग्रहा निर्गुणास्तथा । द्वौ तत्र ब्रह्मरुद्रस्थावेको वैकुण्ठधामग’ इति प्रवृत्तसंहितायाम् ॥२६॥ ‘[24]हरणाज्ज्ञानरूपत्वाद्धरिमेधा विभुः स्मृत’इति च । ‘हरिः सर्वगुणात्मत्वात्सत्व इत्यभिधीयत’इति षाड्गुण्ये ॥ २४ ॥ इति चतुर्थतात्पर्ये त्रिंशोऽध्यायः ॥ ३० ॥

---

दृष्टवन्नङ्क्षयेद्भूतं स्वप्नवदन्यथा । भूतं भवद्भविष्यच्च सुप्तं सर्वैरहो रहः ॥ ८३ ॥

### त्रिंशोऽध्यायः

मैत्रेय उवाच—प्रचेतसोऽन्तरुदधौ पितुरादेशकारिणः । जपयज्ञेन तपसा पुरञ्जनमतोषयन् ॥ ३ ॥ दिव्यवर्षसहस्राणां सहस्रमहतौजसः । भौमान् भोक्ष्यथ भोगान् वै दिव्यांश्चानुग्रहान्मम ॥ १७ ॥ न व्यवह्रियते यज्ञो ब्रह्मैतद्ब्रह्मवादिभिः । न मुह्यन्ति न शोचन्ति न हृष्यन्ति यतो गताः ॥ २० ॥ शुद्धाय शान्ताय नमः स्वनिष्ठमनस्यपार्थे विलसद्द्वयाय । नमो जगत्स्थानलयोदयेषु गृहीतमायागुणविग्रहाय ॥ २३ ॥ नमो विशुद्धसत्वाय हरये हरिमेधसे । वासुदेवाय कृष्णाय प्रभवे सर्वसात्वताम् ॥२४॥



## एकत्रिंशोऽध्यायः

‘[2]पारिव्राज्यं ब्रह्मसत्रं न्यास इत्यभिधीयत’इत्यभिधानम् ॥ सर्वभूतात्मनि हरौ मेधा यत्र तद्ब्रह्मसत्रं सर्वभूतात्ममेधः । ‘हरिमेधास्तु संन्यासो हरौ मेधाऽत्र यज्ञवेदि’ति षाड्गुण्ये ॥ २ ॥ [13]तावत्पर्यन्तमेव कालमित्यवधिः ॥१३॥ ‘[16]आत्मभावः शरीरे तु द्रव्यभ्रम उदाहृतः । क्रियाभ्रमस्त्वहं कर्ता मदीयानीन्द्रियाणि तु । कारकभ्रम इत्युक्तस्त एते विभ्रमा यदा । श्वासादिवृत्तिलोपेन प्राणा उद्योगिनस्तदा । विलीयन्ते प्राणभक्त्या नित्यं स्वापवतां स्फुटम् । उद्योग एव जाग्रत्स्या-योगिनां मुक्तिसिद्धय’इत्यध्यात्मे ॥ १६ ॥ ‘[18]पूर्णो विष्णुः स एवैक इति भावो य ईरितः । आत्मैकभाव इति तं विदुर्ब्रह्मात्मदर्शिन’इति सत्यसंहितायाम् ॥ १८ ॥ [19]सङ्कल्पश्च विकल्पश्च ऋते विष्णुप्रसादतः । न सम्भवतो विष्णोः समाभावात्तु सोऽद्वय इति तन्त्रभागवते ॥१९॥ [22]अधनाश्च त एवात्मधनाश्चाधनात्मधनाः ॥ २२ ॥ ‘[23]श्रियं देवांश्च

---

### एकत्रिंशोऽध्यायः

मैत्रेय उवाच—तत उत्पन्नविज्ञाना आश्वधोक्षजभाषितम् । स्मरन्त आत्मजे भार्यां विसृज्य प्राव्रजन् गृहात् ॥ १ ॥ दीक्षिता ब्रह्मसत्रेण सर्वभूतात्ममेधसा । प्रतीच्यां दिशि वेलायां सिद्धोऽभूद्यत्र जाजलिः ॥ २ ॥ ...षसामपि सर्वेषामात्मा ह्यवधिरर्थितः । सर्वेषामपि भूतानां हरिरात्मा...ऽस्मदः प्रियः ॥ १३ ॥ एतत्परं तज्जगदात्मनः पदं सकृद्विभातं सवितु...र्था प्रभा । यथाऽसवो जाग्रति सुप्तवृत्तयो द्रव्यक्रियाकारकविभ्रमा...श्रयः ॥ १६ ॥ तेनैकमात्मानमशेषदेहिनां कालं प्रधानं पुरुषं परेशम् । स्वतेजसाध्वस्तगुणप्रवाहमात्मैकभावेन भजध्वमद्धा ॥ १८ ॥ निरस्तसङ्कल्पविकल्पमद्वयं द्वयापवादो परमोपलम्भनम् । अनादिमध्यान्त...निर्वृतिं संज्ञप्तिमात्रं भजतामुया दृशा ॥१९॥ न भजति कुमनीषिणां स इज्यां हरिरधनात्मधनप्रियो रसज्ञः । श्रुतधनकुलकर्मणां मदैर्ये विदधति पापमकिञ्चनेषु सत्सु ॥ २२ ॥ श्रियमनुचरतीं तदर्थिनश्च

भृत्यत्वान्मनुते बहु केशवः। नात्मार्थाय यतस्ते तु भक्त्या सर्वोत्तमो
त्तमा'इति च ॥ २३ ॥ '[26]सर्वोत्तमत्वाद्विष्णुर्हि माय इत्येव शब्द्य
इति व्योमसंहितायाम्। 'देवानत्युत्तममुनीन्विना के शैंशुमारकम्
हरेर्ग्रहं प्रविष्टास्तु ध्रुवो देवाश्च तद्गता'इति मात्स्ये ॥ २६ ॥ इ
श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भागवतचतुर्थस्कन्धतात्प
एकत्रिंशोऽध्यायः ॥ ३१ ॥ समाप्तश्चतुर्थस्कन्धः ॥

---

## पञ्चमः स्कन्धः

### प्रथमोऽध्यायः

॥ हरिः ॐ ॥ '[19]विहितो यस्य यो धर्मो विष्णुना प्रभविष्णुना
तेन मुक्तिर्भवेत्तस्य तं गुरुर्वेद सर्वविदि'ति प्रवृत्तसंहितायाम् ॥ १६
'[31]पूर्वसृष्टान् रथावृत्त्या स्थूलांश्चक्रे प्रियव्रतः। समुद्रांस्तेन तत्क
त्याहुरेनं प्रियव्रतमि'ति गारुडे ॥ ३१ ॥ इति पञ्चमस्कन्धतात्प
प्रथमोऽध्यायः ॥ १ ॥

---

द्विपदपतीन् विबुधांश्च यः स्वपूर्णः। न भजति निजभृत्यवर्गतन्त्रः क
ममुमुद्विसृजेत्पुमान् रसज्ञः ॥ २३ ॥ त्यक्त्वा स्त्रैणं च तं गच्छन् दृष्टो
पथ्युदारधीः। पञ्चवर्षो मदादेशैः संराध्य पुरुषेश्वरम् ॥ २५ ॥

---

## पञ्चमः स्कन्धः

### प्रथमोऽध्यायः

गद्यं ॥ या वा इह तद्रथचरणनेमिकृत परिखास्ताः सप्तसिन्ध
आसन् यत एव कृताः सप्त भुवो द्वीपाः ॥ ३१ ॥



### द्वितीयोऽध्यायः

'[17]परिहासप्रलापादिष्वनर्था वाग्भवेत्कचिदि'ति शब्दनिर्णये ॥
॥ १७ ॥ इति पञ्चमस्कन्धतात्पर्ये द्वितीयोऽध्यायः ॥ २ ॥

### तृतीयोऽध्यायः

'[18]नास्ति विष्णोः सम इति जानन्तोऽप्यृषयः सदा ॥ तज्ज्ञापनाय
लोकानामन्येषां प्रार्थयन्सममि'ति ब्रह्माण्डे ॥ १८ ॥ इति पञ्चमतात्पर्ये
तृतीयोऽध्यायः ॥ ३ ॥

### चतुर्थोऽध्यायः

'[3]दुष्टानां मोहनार्थाय यज्ञ इन्द्रपदे स्थितः। पस्पर्ध ऋषभेणैव
स्वरूपेण हरिः स्वयमि'ति वाराहे ॥ ३ ॥ इति पञ्चमतात्पर्ये चतुर्थो-
ऽध्यायः ॥ ४ ॥

---

### द्वितीयोऽध्यायः

का त्वं चिकीर्षसि च किं मुनिवर्य शैले मायाऽसि कापि भगवत्पर-
देवतायाः। विज्ये बिभर्षि धनुषी सुहृदात्मनोऽर्थे किं वा मृगान् मृगयसे
विपिने प्रमत्तान् ॥ ८ ॥

### तृतीयोऽध्यायः

श्री भगवानुवाच—गद्यं ॥ अहो बताहमृषयो भवद्भिरवितथगीर्भि-
वरमसुलभमभियाचितो यदमुष्य आत्मजो मया सदृशो भूयादिति,
ममाहमेवाभिरूपः कैवल्यादथापि ब्रह्मवादो न मृषा भवितुमर्हति ममैव
हि मुखं यद्द्विजदेवकुलम् ॥ १८ ॥

### चतुर्थोऽध्यायः

यस्य हीन्द्रः स्पर्धमानो भगवान् वर्षे न ववर्ष, तदवधार्य भगवान्
ऋषभदेवो योगेश्वरः प्रहस्यात्मयोगमायया स्ववर्षमज(माज्ञ)नाभं
नामाभ्यवर्षीत् ॥ ३ ॥

## पञ्चमोऽध्यायः

[5]क्रियाफलं तावदेव । कर्मात्मकं कर्मवशम् ॥५॥ [6]अविद्य
प्रयुङ्क्ते ॥ ६ ॥ '[8]ब्रह्माद्या याज्ञवल्क्याद्या मुच्यन्ते स्त्रीसहायिनः
बध्यन्ते केचनैतेषां विशेषं च विदो विदुरि'ति सत्यसंहितायाम् ॥८
'[10]आत्मनो विहितं कर्म वर्जयित्वाऽन्यकर्मणः । कामस्य च परित्या
निरीहेत्याहुरुत्तमा'इति च ॥ १० ॥ '[12]सर्वस्मादुत्तमो विष्णुरि
ज्ञानमुदाहृतम् । प्रतिजीवं येन मुक्तिस्तद्धि ज्ञानं विदां मतमि'ति च
'ज्ञानं विष्णोरुत्तमत्वे तदेव प्रतिपूरुषम् । विशेषेण तु विज्ञानं त
जानाति सर्ववित् । द्वात्रिंशल्लक्षणैर्युक्तस्तीक्ष्णदंष्ट्रश्च सौम्यदृक् । घो
रुक्चेति पुरुषः स सर्वज्ञ उदाहृत'इत्यध्यात्मे ॥ 'षण्णवत्यङ्गुलो य
न्यग्रोधपरिमण्डलः । सप्तपादश्चतुर्हस्तः स देवैरपि पूज्यत'इति वा
प्रोक्ते ॥ न्यग्रोधमण्डलो व्यामो बाहू न्यग्रोध उच्यत'इति च ॥१२
'[20]नाभिरित्यथ नाम स्याद्धरेः सर्वाश्रयो यत'इति कौर्मे । तत्तस्य म
शुश्रूषणम् ॥ २० ॥ [22]द्विजदेवानां देवः ॥ २२ ॥ [26]विविक्तदृ

---

पञ्चमोऽध्यायः

पराभवस्तावदबोधजातो यावन्न जिज्ञासत आत्मतत्त्वम् । ता
त्क्रियास्तावदिदं मनो वै कर्मात्मकं येन शरीरबन्धः ॥ ५ ॥ पुंसः स्त्रि
मिथुनीभाव एष तयोर्मिथो हृदयग्रन्थिमाहुः । यतो गृहक्षेत्रसुत
वित्तैर्जनस्य मोहोऽयमहं ममेति ॥ ८ ॥ हरौ गुरौ मयि भक्त्यानुवृत्त्य
वितृष्णया द्वन्द्वतितिक्षया च । सर्वत्र जन्तोर्व्यसनावगत्या जिज्ञास
तपसेहानिवृत्त्या ॥ मत्कर्मभिर्मत्कथया च नित्यं मत्पादसङ्गाद्
कीर्तनान्मे ॥ १० ॥ सच्छ्रद्धया ब्रह्मचर्येण शश्वदसम्प्रमादेन ज
वाचाम् । सर्वत्र मद्भावविचक्षणेन ज्ञानेन विज्ञानविराजितेन ॥ १२
तस्माद्भवन्तो हृदयेन जाताः सर्वे महीयांसममुं सुनाभम् । अक्लिष्टबुद्
भरतं भजध्वं शुश्रूषणं तद्भरणं प्रजानाम् ॥ २० ॥ देवासुरेभ्यो मघवा
प्रधानो दक्षादयो ब्रह्मसुताश्च तेषाम् । भवः परः सोऽथ विरिञ्चवीर्
स मत्परोऽहं द्विजदेवदेवः ॥२२॥ सर्वाणि मद्धिष्ण्यतया भवद्भिश्चरा



र्जीवानां धिष्ण्यतया परमेश्वरस्य भेददृष्टिः । 'उपपादयेत्परात्मानं
जीवेभ्यो यः पदेपदे । भेदेनैव न चैतस्मात्प्रियो विष्णोस्तु कश्चने'ति
गाथे ॥ 'यो हरेश्चैव जीवानां भेदवक्ता हरेः प्रिय'इति च ॥ २६ ॥
इति पञ्चमस्कन्धतात्पर्ये पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः

'[2]महैश्वर्यस्वरूपो हि भगवान्नृषभो विराट् । नैश्वर्याणि
स्वकीयानि ख्यापयामास सर्ववित् । उत्तमानां ज्ञापनार्थं धर्मतत्त्वस्य
केशवः । तेषामैश्वर्यभोगे हि मनः सक्तिं व्रजेद्यदि । आनन्दो मुक्तिगो
ह्रासं विकर्मकरणाद्व्रजेत् । धर्माधर्मविहीनोऽपि भगवानृषभस्ततः ।
तेषां धर्मस्थापनार्थं नाविश्चक्रे परां स्थितिम् । देवानां नाशुभाद्ध्रासः
शुभात्काचित्सुखोन्नतिः । आधिकारिकजीवानामेवमन्येषु तद्द्वयम् ।
अल्पाधिकारिणां तत्र ह्रासोऽपि भवति ध्रुवम् । अशुभाभावजोन्नाहो
महाधीकारिणामपि । अशुभे कृते न भवति तारतम्याच्च स स्मृतः ।
प्रजापाश्च तथा देवा महाधीकारिणः स्मृताः । ऋष्यशीतिस्तथा सप्त
पितरोऽप्सरसां शतम् । गन्धर्वाणां तथा राज्ञां विंशदन्यासु जातिषु ।
अल्पाधिकारिणः प्रोक्ता अनधीकरिणः पर'इति ब्रह्माण्डे ॥ २ ॥

---

भूतानि सुता ध्रुवाणि । सम्भावितव्यानि पदेपदे वो विविक्तदृष्टिस्तदु-
तार्हणं मे ॥ २६ ॥

षष्ठोऽध्यायः

इति नानायोगचर्याचरणो भगवान्कैवल्यपतिर्ऋषभोऽधिगतपरम-
महानन्दानुभव आत्मनि सर्वेषां भूतानामात्मभूते भगवति वासुदेवे
आत्मनोऽव्यवधानेनानन्तरोदरभावेन सिद्धसमस्तार्थैः परिपूर्णो योगै-
श्वर्याणि वैहायसमनोजवान्तर्धानपरकायप्रवेशदूरग्रहणादीनि यदृच्छयो-
पगतानि नाञ्जसा हृदयेन अभ्यनन्दत् ॥ ५-५-३३ ॥ ऋषिरुवाच—सत्य-
मुक्तं किन्त्विह वा एके मनसो विसम्भमनवस्थानस्य घटकिराट इव न

‘[6]विष्णोः कलेवरत्यागो भूत्यागोऽन्यो न विद्यते । कलेवरत्यागोऽन्येण पञ्चत्वं समुदीरितमि’ति कौर्मे ॥ अनर्थान्तरभावेन अर्थान्तरं नास्ती मनसा ॥ ६ ॥ [7]अभिमानाभासेन अभितो ज्ञानप्रकाशेन ॥ ७ ॥ ‘[9]ज्ञानानन्दात्मको देहो ऋषभस्य महात्मनः । तादृशेनैव मनस क्रमंस्तु कुटचाचले । दावाग्निमनुविश्याथ तत्रस्थः प्रादहज्जगत् एवमग्नेरभिव्यक्तस्तस्थौ विष्णुः सनातनः । ऋषभत्वेन सङ्गोप्य धर्म नद्यापि तत्रगः । आस्ते स वासुदेवात्मा वासुदेवोऽहमित्यजः ॥ सदा स्थितः [10]स्थितिं तां तु सुश्रावार्हो दुरात्मवान् । पूर्वं तु पौण्ड्रको नाम वासुदेवः सुदुर्मतिः । जातिस्मरो द्विधा शास्त्रं पाषण्डं निर्ममे नृपः । एकं तु वासुदेवाख्यं वासुदेवोऽहमित्यपि । कुत्सितं वासुदेवत्वप्रति पादकमात्मनः । लोकार्थं चापरमपि चकारार्हतनामकम् ॥ ९ ॥ ‘[11]तत्प्रशिष्यः क्रमुर्नाम न जानंस्तन्मतं परम् । वासुदेवात्मतां सर्व जीवानामवदत्कुधीः । क्रम्वाख्यं शास्त्रमकरोदभेदप्रतिपादकम् । कुशास्त्र सर्ववेदानां विरुद्धं तामसालयम् । तदृष्ट्वाऽद्यापि वर्तन्ते वर्तिष्यन्ति कलौ तथा । अशौचा अव्रताचारा वासुदेवोऽहमित्यपी’ति ब्राह्मे ॥ ११ ॥ ‘[14]विशेषाद्भारते पुण्यं चरेयुः पापमप्यथ । तथैव भगवद्भक्तिं पृथिव्यां

---

सङ्गच्छति ॥२॥ आथैवमखिललोकपालललामो विलक्षणो जडवदवधूत वेषभाषाचरितैरविलक्षितभगवत्स्वभावो योगिनां साम्परायविधिमनु शिक्षयन् स्वकलेवरं जिहासुरात्मन्यात्मानमसंव्यवहितमनर्थान्तरभावेना न्वीक्षमाण उपरतानुवृत्तिरुपरराम ॥ ६ ॥ तस्य ह वा एवं मुक्तलिङ्गस्य भगवत ऋषभस्य योगमायावसानो देह इमां जगतीमभिमानाभासेन चङ्क्रममाणः ॥ ७ ॥ अथ समीरवेगविधुतवेणुनिकर्षोपजातो दावानल स्तद्वनमालेलिहानः सह तेन ददाह ॥९॥ येन ह वा कलौ मनुजापसदा देवमायया विमोहिताः स्वविधिनियोगशौचाचारविहीना देवहेलनादी न्यपव्रतानि निजेच्छया गृह्णाना अस्नानाचमनाशौचकेशोल्लुञ्छनादीनि कलिनाऽधर्मबहुलोपहतधियो ब्रह्म ब्राह्मण यज्ञपुरुष लोकविदूषकाः प्रायेण भविष्यन्ति ॥११॥ अहो भुवः सप्तसमुद्रवत्या द्वीपेषु वर्षेष्वधिपुण्यमेतत् ।





न्यवर्षगा’इति ब्रह्माण्डे ॥ १४ ॥ [16]योगमायां योगमायाफलं कम् । ‘नित्योदस्ता योगशक्तिरनपेक्ष्यं फलं यतः । नित्यस्वरूप तापि बहिःफलविवर्जनात् । अकर्मेत्युच्यते यद्वन्मोक्षः फलविवर्जना दि’ति पाद्मे ॥ १६ ॥ ‘[18]नाद्रियन्ते तु ये मोक्षं पूर्वं तेषां परं सुखम् । स्वयोग्यं व्यज्यते मुक्तौ तच्चोक्तं तारतम्ययुगि’ति व्योम संहितायाम् ॥ १८ ॥ ‘[19]ब्रह्मणोऽन्यस्य नो पूर्णां दद्याद्भक्तिं जनार्दनः । मुक्तिं ददाति सर्वेषां मुक्तानां को ह्यधीशिते’ति ब्रह्मतर्के ॥ १९ ॥ इति पञ्चमतात्पर्ये षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः

‘[13]परोरजाऽरजस्कत्वात्त्रयीड्यत्वात्त्रयीसुतः । गुणात्ययात्तुरीयश्च जातवेदाश्च सर्ववित् । हंसो दुःखादिहानेन जीवेशत्वाच्च गृध्रराट् । कालः सर्वनियन्तृत्वात्परमात्मा प्रकीर्तित’इति तन्त्रनिरुक्ते ॥ १३ ॥ इति पञ्चमतात्पर्ये सप्तमोऽध्यायः ॥ ७ ॥

---

यन्ति यत्रत्यजना मुरारेः कर्माणि भद्राण्यवतारयन्ति ॥१४॥ को न्वस्य काष्ठामपरोऽनुगच्छेत् मनोरथेनाप्यभवाय योगी । यद्योगमायां स्पृहय त्युदस्तां महत्तमा येन कृतप्रयत्नाः ॥ १६ ॥ यस्यामेव कवय आत्मान विरतविविधवृजिनसंसारपरितापोपतप्यमानमनुसवनं स्नापयन्तस्तयैव परयानिर्वृत्त्या ह्यापवर्गिकमात्यन्तिकं परमपुरुषार्थमपि स्वयमासादितं नाद्रियन्ते भागवतत्वेनैव परिसमाप्तसर्वार्थाः ॥१८॥ राजन् पतिर्गुरुरलं भवतां यदूनां देवप्रियः कुलपतिः क्व च किङ्करो वः । अस्त्वेवमङ्ग भगवान् भजतां मुकुन्दो मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम् ॥१९॥

### सप्तमोऽध्यायः

परोरजः सवितर्जातवेदो वेदस्य गर्भो मनसेदं जजान । स्वरेतसादः पुनराविश्य च स्वं हंसं सङ्गृध्राणामृषभं सङ्गृणीमः ॥ १३ ॥

## दशमोऽध्यायः

[9]अशेषभगवत्प्रियाणां निकेतः स एव भरतो मानुषापेक्षया। 'तत्कालस्थितभक्तेषु मानुषेष्वृषभात्मजः। वरोऽपि धिक्कृतो राज्ञा सुहृदा वैष्णवेष्वपी'ति गारुडे ॥९॥ '[10]भरणादिकृद्धरिरिति चिन्तय-न्नृपमब्रवीदि'ति च ॥ १० ॥ [11]देहेन जातस्य देहाभिमानिनः। 'देहमानी देहजातो विदेहो मानवर्जित'इति च ॥ ११ ॥ '[12]प्राण-युक्तेररत्या च जडं जीवन्मृतं स्मृतमि'ति च। स्वामित्वं तु हरेरेव मुख्यमन्यत्र भृत्यता ॥ १२ ॥ '[13]देवेषु तन्नियत्या च त्वदादेर्व्याव-हारिकम्। मनुष्येषु विशेषः को व्यवहारमृते वद। व्यत्यासान्न हि देवेषु व्यत्यासः स्वामितां गत'इति च ॥ १३ ॥ ([26]ब्रह्महत्यासहस्रस्य पापं शाम्येत्कथञ्चन। न पुनः सदवज्ञाने कल्पकोटिशतैरपि)। स्वतो महदवज्ञानाद्रुद्रोऽप्यात्मानमादहेदि'ति च ॥ २६ ॥ इति पञ्चमतात्पर्ये दशमोऽध्यायः ॥ १० ॥

---

### दशमोऽध्यायः

एवं बहुबद्धमभिभाषमाणं नरदेवाभिमानिनं रजसा तमसाऽनुविद्धेन मदेन तिरस्कृताशेषभगवत्प्रियनिकेतं पण्डितमानिनं स भगवान् ब्राह्मणो ब्रह्मभूतः सर्वभूतसुहृदात्मा योगेश्वरचर्यायां नातिव्युत्पन्नमतिं स्मयमान इव विगतस्मय इदमाह ॥ ९ ॥ ब्राह्मण उवाच—त्वयोदितं व्यक्तमविप्रलब्धं भर्तुः स मे स्याद्यदि वीर भारः। गन्तुर्यदि स्यादधिगम्यमध्वा पीवेति चासौ न विदां प्रवादः ॥ १० ॥ स्थौल्यं कार्श्यं व्याधय आधयश्च क्षुत्तृड् भयं कलिरिच्छा जरा च। निद्राऽरतिर्मन्युरहं मदश्च देहेन जातस्य हि मे न सन्ति ॥११॥ जीवन्मृतत्वं नियमेन राजन्नाद्यन्तवद्यद्विकृतस्य दृष्टम्। स्वस्वामिभावो ध्रुव एष यत्र तर्ह्युच्यतेऽसाविति कृत्ययोगः ॥ १२ ॥ विशेषबुद्धेर्विवरं मनाक् च पश्यामि यत्र व्यवहारतोऽन्यत्। क ईश्वरस्तत्र किमीशितव्यमथाऽपि राजन् करवाम किं ते ॥ ॥ १३ ॥ न विक्रिया विश्वसुहृत्सखस्य साम्येन वीताभिमतेस्तवापि। महद्विमानात् स्वकृतात् हि मादृक् धक्ष्यत्यदूरादपि शूलपाणिः ॥ २६ ॥



## एकादशोऽध्यायः

'[2]न वेदेष्वल्पबुद्धीनां ब्रह्मतत्त्वं समीक्ष्यते। महाबुद्धिस्तु वेदेषु पश्येद्ब्रह्मैव केवलमि'ति च ॥ २ ॥ [5]स मायारचित अन्तरात्मा ...नः ॥ ५ ॥ '[7]क्षेत्रवित्तु हरिः प्राणः साक्षी ताभ्यां पुमान्सरेदि'ति ...॥ ७ ॥ [9]पदं विषयम्। 'एकादशेन्द्रियद्वारा स्युरेकादशवृत्तयः। ...ब्दाद्यास्तदभीमानास्तदिच्छाश्चैव पञ्चशः। स्पर्शान्तर्भावतः कर्मखानां ...व पृथग्गतिः ॥९॥ [10]एकादशैव चेष्टाः स्युरिन्द्रियाणां पृथक्पृथक्। ...गोलकास्तदधिष्ठानं चैकादशनिगद्यते ॥ १० ॥ '[11]एष संसृतिसंभारो ...दशैवाथवा भवेत्। दशकं विषयाणां च ममाहमिति च द्वयम्। ...यमेव ममाहं वा संसृतिस्त्वहमेव वे'ति च ॥ अर्तिरुपस्थविषयः ॥११॥

---

### एकादशोऽध्यायः

ब्राह्मण उवाच—अकोविदः कोविदवादवादान् वदस्यथो नातिविदां वरिष्ठः। न सूरयो हि व्यवहारमेनं तत्वावमर्शेन सहामनन्ति ॥१॥ तथैव राजन्नुरुगार्हमेधवितानविद्योरुविजृम्भितेषु। न वेदवादेषु हि तत्ववादः प्रायेण(शु)सिद्धो नु चकास्ति साधु ॥ २ ॥ ...यावन्मनो रजसा पूरुषस्य सत्वेन वा तमसा वाऽनुरुद्धम्। चेतोभिराकूतिभिरातनोति निरङ्कुशः कुशलं चेतरं वा ॥४॥ स वासनात्मा विषयोपरोक्तो गुणप्रवाहो विकृतः षोडशात्मा। चित्रं पृथङ्नामभी रूपभेदमन्तर्बहिष्ठः ...पुरैस्तनोति ॥ ५ ॥ दुःखं सुखं व्यतिमिश्रं च तीव्रं कालोपपन्नं फलमाव्यनक्ति। आलिङ्ग्य मायारचितान्तरात्मा स्वदेहिनं संसृतिचक्रकूटम् ॥ ६ ॥ तावानयं व्यवहारः सदा वै क्षेत्रज्ञसाक्ष्योर्भवति स्थूलसूक्ष्मः। तस्मात् मनोलिङ्गमदो वदन्ति गुणागुणस्यास्य परावरस्य ॥७॥ गुणानुरक्तं व्यसनाय जन्तोः क्षेमाय नैर्गुण्यमथो मनः स्यात्। यथा प्रदीपो घृतवर्तिमास्थितो स्थितिं सधूमां भजति ह्यन्यदा स्वम् ॥ ८ ॥ पदं तथा गुणकर्मानुबद्धं बहिर्मनः श्रयतेऽन्यत्र तत्वम्। एकादशासन्मनसो...स्य वृत्तीराकूतयः पञ्च धियोऽभिमानाः ॥९॥ मात्राणि कर्माणि पुरं च तासां वदन्ति हैकादश वीर भूमिम्। गन्धाकृतिस्पर्शरसश्रवांसि विसर्गरत्यर्त्यभिजल्पशिल्पाः ॥१०॥ एकादशं स्वीकरणं ममेति मायामहं द्वादश-

[12]द्रव्यं देहादि । स्वभावो योग्यता । जीवस्य क्षेत्रज्ञतः स्युः मिथः स्वतश्च न स्युः ॥ १२ ॥ [14]स्वमाययाऽऽत्मन्व्यवधीयमानः स्वेच्छया स्वस्मिन्नेव तिरोहितत्वेन स्थितः । 'स्वात्माधारः स्वेच्छयैव जीवदृष्टेस्तिरोहितः । क्षेत्रज्ञेत्युच्यते विष्णुर्जीवस्थः पुरुषोत्तम'इति च ॥१४॥ [18]अभिमानादेव संसारोऽन्यथा नेति परिहारः ॥ १८ ॥ इति पञ्चमतात्पर्ये एकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः

[5]यस्मान्मूलकारणभूतो विष्णुरेव । अतो मुख्यं सर्वकारणत्वं तस्यैव । मूलाश्रयविवक्षा यदि न स्यात्कुतः पृथिव्यां चलतीति व्यवहारः ? यतोऽवान्तराश्रया बहवः सन्त्यङ्घ्र्याद्याः ॥ ५ ॥ [7]एवं मूलगोप्तृत्वं च विष्णोरेव ॥ ७ ॥ [9]आश्रयत्वात्क्षितिरिति निर्वचने क्षितिशब्दोऽपि तस्मिन्नेव । परमाणुमात्रायाः पृथिव्या अयुक्तत्वा-

---

मेकमाहुः ॥११॥ द्रव्यस्वभावाशयकर्मकालैरेकादशामी मनसो विकाराः । सहस्रशः शतशः कोटिशश्च क्षेत्रज्ञतो न मिथो न स्वतः स्युः ॥ १२ ॥ क्षेत्रज्ञ आत्मा पुरुषः पुराणः साक्षात् स्वयं ज्योतिरजः परेशः । नारायणो भगवान् वासुदेवः स्वमाययाऽऽत्मन् व्यवधीयमानः ॥ १४ ॥ भ्रातृव्यमेनं त्वमदभ्रवीर्यमुपेक्षयाऽभ्येधितमप्रमत्तः । गुरोर्हरेश्चरणोपासनास्त्रो जहि व्यलीकं स्वयमात्ममोहम् ॥ १८ ॥

### द्वादशोऽध्यायः

ब्राह्मण उवाच—अयं जनो नाम चलन् पृथिव्यां यः पार्थिवः पार्थिव कस्य हेतोः । तस्याऽपि चाङ्घ्र्योरधिगुल्फजङ्घाजानूरुमध्योरःशिरोधरांसाः ॥५॥ अंसेऽधि दार्वी शिबिका च यस्यां सौवीरराजेत्यपदेश आस्ते । यस्मिन् भवान् रूढनिजाभिमानो राजाऽस्मि सिन्धुष्विति दुर्मदान्धः ॥६॥ शोच्यानिमांस्तानधिकस्तवाधिर्विष्ट्या निगृह्णन् निरनुग्रहोऽसि । जनस्य गोप्तेति विकत्थमानो न शोभसे वृद्धसभासु दुष्टः ॥७॥ एवं निरुक्तं क्षितिशब्दवृत्तमसन्निधानं परमाणवो ये । अविद्यया मनसा



परमाणवोऽप्यस्याविद्ययैवाधारत्वेन कल्पिताः ॥ ९ ॥ [10]एवं सर्वं तथा प्रकृत्यैव कल्पितं विष्णोरन्यत् । एवं प्रकृत्याधारः स्वयमनन्याधारो विष्णुरेव । अतः सर्वशब्दाश्च तस्मिन्नेव । 'राजा गोप्ताऽऽश्रयो भूमिः शरणं चेति लौकिकः । व्यवहारो न तत्सत्यं तयोर्ब्रह्माश्रयो विभुः । गोप्ता च तस्य प्रकृतिस्तस्या विष्णुः स्वयं प्रभुः । तव गोप्त्री तु पृथिवी न त्वं गोप्ता क्षितेः स्मृतः । अतः सर्वाश्रयश्चैव गोप्ता च हरिरीश्वरः । सर्वशब्दाभिधेयश्च शब्दवृत्तेर्हि कारणम् । सर्वान्तरः सर्वबहिरेक एव जनार्दनः । शिर आधारता यद्वद्ग्रीवायास्तद्वदेव तु । आश्रयत्वं च गोप्तृत्वमन्येषामुपचारत'इति च ॥ १० ॥ इति पञ्चमतात्पर्ये द्वादशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः

'[18]ऋते हैहयवैन्यादीनार्षभस्येह कः समः । यस्योपदेशात्सिन्ध्वीशो ददर्श कपिलं प्रभुमि'ति च । युज्यते अनेनेति योगो हरिः ॥ १८ ॥ [29]साङ्ख्यशिरसे उत्तमज्ञानस्वरूपाय ॥ २९ ॥ इति पञ्चमतात्पर्ये त्रयोदशोऽध्यायः ॥ १३ ॥ १४ ॥

---

कल्पितास्ते येषां समूहेन कृतो विशेषः ॥ ९ ॥ एवं कृशं स्थूलमणुर्बृहद्यदसच्च सज्जीवमजीवमन्यत् । द्रव्यस्वभावाशयकालकर्मनाम्न्याऽजयाऽवैहि कृतं द्वितीयम् ॥ १० ॥

### त्रयोदशोऽध्यायः

यज्ञाय धर्मपतये विधिनैपुणाय योगाय साङ्ख्यशिरसे प्रकृतीश्वराय । नारायणाय हरये नम इत्युदारं गायन् मृगत्वमपि यः समुदाजहार ॥ २९ ॥

## पञ्चदशोऽध्यायः

‘[7]प्रियव्रतो गयश्चैव कर्मदेवसमो गुणैरि’ति षाड्गुण्ये ॥ ७ ॥ इति पञ्चमतात्पर्ये पञ्चदशोऽध्यायः ॥ १५ ॥

## षोडशोऽध्यायः

‘[7]यथा भागवते तूक्तं भौवनं कोशलक्षणम् । तस्याविरोधतो योज्यं सर्वग्रन्थान्तरस्थितम् । मण्डोदे पूरणं चैव व्यत्यासं क्षीरसागरे । राहुसोमरवीणां च मण्डलाऽद्विगुणोक्तिताम् । विनैव सर्वमुन्नेयं योजना भेदतोऽत्र त्वि’ति ब्रह्माण्डे ॥ ७ ॥ इति पञ्चमतात्पर्ये षोडशोऽध्यायः ॥ १६ ॥

## सप्तदशोऽध्यायः

‘[1]वाराहे वामपादं तु तदन्येषु तु दक्षिणम् । पादं कल्पे

---

### पञ्चदशोऽध्यायः

तस्येमां गाथां पाण्डवेय पुराविद उपगायन्ति । गयं नृपं क प्रतियाति कर्मभिर्यज्वाऽभिमानी बहुविद्धर्मगोप्ता ॥ सदागतश्रीः सदस स्पतिः सतां सत्सेवकोऽन्यो भगवत्कलामृते ॥ ७ ॥

### षोडशोऽध्यायः

राजोवाच—इत्युक्तस्त्वया भूमण्डलायामविशेषो यावदादित्य स्तपति यत्र चासौ ज्योतिषां गणैश्चन्द्रमाः सह दृश्यते ॥१॥ एषां मध्ये इलावृतं नामाभ्यन्तरवर्षं यस्य नाभ्यामवस्थितः सौवर्णः कुलगिरिराजो मेरुर्द्वीपायामसमुन्नाहः कर्णिकाभूतः कुवलयकमलस्य मूर्धनि द्वात्रिंश त्सहस्रयोजनविततो मूले षोडशसहस्रस्तावतान्तर्भूम्यां प्रविष्टः ॥ ७ ॥

### सप्तदशोऽध्यायः

श्री शुक उवाच—तत्र भगवतः साक्षाद्यज्ञलिङ्गस्य विष्णोर्विक्रमतो वामपादाङ्गुष्ठनखनिर्भिन्नोर्ध्वाण्डकटाहविवरेणान्तः प्रविष्टा या बाह्यजल धारा तच्चरणपङ्कजावनेजनारुणकिञ्जल्कोपरंजिताखिलजगदघमलापहोप स्पर्शनामला साक्षाद्भगवत्पदीत्यनुपलक्षितवचोभिरभिधीयमानाऽति



भगवानुजहार त्रिविक्रम’इति च ॥ १ ॥ ‘[16]अनन्तान्तःस्थितो विष्णुरनन्तश्च सहामुना । पूज्यते गिरिशेनेश इलावृतगतेन त्वि’ति च ॥ ‘जीवव्यपेक्षया चैव तथाऽन्तर्याम्यपेक्षया । मिश्रास्तु स्तुतयो ज्ञेया विष्णोरन्यत्र केवलमि’ति च ॥ १६ ॥ इति पञ्चमतात्पर्ये सप्तदशोऽध्यायः ॥ १७ ॥

## अष्टादशोऽध्यायः

‘[5]अप्रयासेन कर्तृत्वमकर्तृत्वमिहोच्यते । महाशक्तित्वतस्तच्च पूज्यते परमस्य त्वि’ति तन्त्रसारे ॥ ५ ॥ ‘[17]कामदेवस्थितं विष्णुमुपास्ते श्री रतिस्थिता । कामदेवं रतिश्चापि विष्णोस्तु प्राकृतां तनुमि’ति ब्रह्माण्डे ॥ १७ ॥ ‘[27]स्पर्धन्त इव देवास्तु हरिणा यत्र कुत्रचित् । हरेरेवाज्ञया क्वापि दैत्यावेशादथापि वे’ति च ॥ २७ ॥

---

महताकालेन सहस्रोपलक्षणेन दिवो मूर्धन्यवततार ॥१॥ भवानीनाथैः स्त्रीगणार्बुदसहस्रैरवरुध्यमानो भगवतश्चतुर्मूर्तेर्महापुरुषस्य तुरीयां तामसीं मूर्तिं प्रकृतिमात्मनः सङ्कर्षणसंज्ञां आत्मसमाधिरूपेण सन्निधाप्यैतदभिगृणन् भव उपधावति ॥ १५ ॥ ॐ नमो भगवते महापुरुषाय सर्वगुणसंख्यातायानन्तायाव्यक्ताय नम इति ॥ १६ ॥

### अष्टादशोऽध्यायः

विश्वोद्भवस्थाननिरोधकर्म ते ह्यकर्तुरङ्गीकृतमप्यपावृतम् । युक्तं न चित्रं त्वयि कार्यकारणे सर्वात्मनि व्यतिरिक्ते च वस्तुनि ॥ ५ ॥ केतुमाले भगवान् कामदेवस्वरूपेणास्ते लक्ष्म्याः प्रियचिकीर्षया प्रजापतेर्दुहितॄणां च तद्वर्षपतीनां पुरुषायुषाहोरात्रपरिसङ्ख्यानानां यासां गर्भा महापुरुषमहास्त्रतेजसोद्वेजितमनसां विध्वस्ता व्यसवः संवत्सरान्ते निपतन्ति॥१५॥ तद्भगवतो मायामयं रूपं परमसमाधियोगेन रमादेवी संवत्सरस्य रात्रिषु प्रजापतेर्दुहितृभिरुपेता अहस्सु तद्भर्तृभिरुपेतोपास्ते ॥ इदं चोदाहरति ॥ ॥ १७ ॥ यं लोकपालाः किल मत्सरज्वरा हित्वा यतन्तोऽपि पृथक्समेत्य च । पातुं न शेकुर्द्विपदश्चतुष्पदः सरीसृपस्थास्नु यदत्र दृश्यते ॥ २७ ॥

[31]उपलम्भनादयथा । यथा दृष्टं तथा न तिष्ठत्यन्यथाभवतीत्यर्थः ॥ ३१ ॥ '[32]सर्वान्तर्यामिकत्वात्तु सर्वनामा हरिः स्वयम् । न सर्वस्वरूपत्वाद्रूपत्वमुपचारत'इति च ॥ ३२ ॥ [33]दशावतार इत्यादि सङ्ख्या विनीयते विशेषेण नीयते तज्ज्ञानं तद्रूपमेव हि ॥ ३३ ॥ [36]क्रियार्थैर्यज्ञाद्यर्थैरिन्द्रादिनामभिरीरितात्मने ॥ ३६ ॥ [37]मायागुणै स्तदिच्छानुसारिभिः । 'द्रव्येशः शङ्करः प्रोक्तः क्रियेशो गरुडः स्मृतः करणेशस्तथा ब्रह्मा वायुराधारपः स्मृत'इति ब्रह्मतर्के ॥ ३७ ॥ इति पञ्चमतात्पर्ये अष्टादशोऽध्यायः ॥ १८ ॥

## एकोनविंशोऽध्यायः

'[7]यस्य सम्यक्च भवति ज्ञानं भक्तिस्तथैव च । निश्चितस्तस्य मोक्षः स्यात्सर्वपापकृतोऽपि तु । यो ममत्वादिना दोषः स त्वन्यविषय

---

यद्रूपमेतन्निजमायया ऽर्पितमर्थस्वरूपं बहुरूपरूपितम् । सङ्ख्या न यस्या स्त्ययथोपलम्भनात्तस्मै नमस्तेऽव्यपदेशरूपिणे ॥३१॥ जरायुजं स्वेदज मण्डजोद्भिजं चराचरं देवर्षिपितृभूतमेदम् । द्यौः खं क्षितिः शैल सरित्समुद्रद्वीपग्रहर्क्षेत्यभिधेय एकः ॥३२॥ यस्मिन्नसङ्ख्येयविशेषनाम रूपाकृतौ कविभिः कल्पितेयम् । सङ्ख्या यया तत्वदृशा विनीयते तस्मै नमः साङ्ख्यनिदर्शनाय हि ॥ ३३ ॥ यस्य स्वरूपं कवयो विपश्चितो गुणेषु योनिष्विव जातवेदसम् । मथ्नन्ति मथ्ना मनसा दिदृक्षवो गू क्रियार्थैर्नम ईरितात्मने ॥ ३६ ॥ द्रव्यक्रियाहेत्वयनेशकर्तृभिर्मायागुणै र्वस्तुनिरीक्षितात्मने । तथैव तत्रातिशयात्मबुद्धिभिर्निरस्तमायाकृत नमो नमः ॥ ३७ ॥

### एकोनविंशोध्यायः

न जन्म नूनं महतो न सौभगं न चाङ्ग बुद्धिर्नाकृतिस्तोषहेतुः । तै(ति)र्यग्विसृष्टानपि नो वनौकसश्चकार सख्ये च स लक्ष्मणाग्रजः ॥७॥ य थैहिकामुष्मिककामलंपटः सुतेषु दारेषु धनेषु चिन्तयन् । शङ्के विद्वान् कुकलेवरात्ययाद्यस्तस्य यत्नः श्रम एव केवलम् ॥ १४ ॥ तत्र





स्मृत'इति च ॥ ७ ॥ '[28]अनधीकारिणो देवाः स्वर्गस्था भारतोद्भवम् । ...च्छन्त्यात्मविमोक्षार्थमुद्रेकार्थेऽधिकारिण'इति कौर्मे ॥ २८ ॥ इति पञ्चमतात्पर्ये एकोनविंशोऽध्यायः ॥ १९ ॥

## विंशोऽध्यायः

'[5]सूर्यसोमाग्निवारीरविधातृषु यथाक्रमम् । प्लक्षादिद्वीपसंस्थास्तु स्थितं हरिमुपासत'इति च ॥५॥ '[24]अनाम्लं तु दधि क्षीरं क्षीरं सान्द्रं तथा दधी'ति शब्दनिर्णये ॥ २४ ॥ इति पञ्चमतात्पर्ये विंशोऽध्यायः ॥ २० ॥ २१ ॥

---

...भो रवं कुकलेवरार्पितां त्वन्माययाहंममतामधोक्षज । भिन्द्याम येनाशु वयं सुदुर्भिदां विधेहि योगं त्वयि नः सुभावितं इति ॥ १५ ॥ यद्यत्र नः स्वर्गसुखावशेषितं स्विष्टस्य दत्तस्य कृतस्य शोभनम् । तेनाब्जनाभस्मृति जन्मनः स्याद्वर्षे हरिर्यद्भजतां शन्तनोति ॥ २८ ॥

### विंशोऽध्यायः

मणिकूटो वज्रकूट इन्द्रसेनो ज्योतिष्मान् धूम्रवर्णो हिरण्यग्रीवो ...घमाल इति सेतुशैलाः अरुणा अनुगुणा आङ्गिरसी सावित्री सुप्रभाता ऋतम्भरा सत्यम्भरेति महानद्यः यासां जलोपस्पर्शनविधूतरजस्तमसोऽहं ...पतङ्गगोध्यायनसत्याङ्गसंज्ञाश्चत्वारो वर्णा सहस्रायुषो विबुधोपम सन्दर्शनप्रजननाः स्वर्गद्वारं त्रय्या विद्यया भगवन्तं त्रयीमयं सूर्यात्मानं यजन्ते ॥ ४ ॥ प्रत्नस्य विष्णोरूपं यत्सत्यर्तस्य ब्रह्मणः । अमृतस्य च मृत्योश्च सूर्यमात्मानमीमहि ॥ इति ॥ ५ ॥ तथा बहिः क्रौञ्चद्वीपः कुश द्वीपाद्द्विगुणसमानेन क्षीरोदेन परित उपक्लृप्तो यथा कुशद्वीपो घृतोदेन यस्मिन् क्रौञ्चोनाम पर्वतराजो द्वीपनामनिर्वर्तक आस्ते ॥ १८ ॥ एवं परस्तात् क्षीरोदात्परित उपवेशितः शाकद्वीपो द्वात्रिंशल्लक्षयोजनायामः समानेन च दधिमण्डोदेन परित उपक्लृप्तः । यस्मिन् हि शाको नाम महीरुहः स्वक्षेत्रव्यपदेशको, यस्य हि महान् सुरभिगन्धस्तं द्वीपमनु वासयति ॥ २४ ॥

## द्वाविंशोऽध्यायः

'[32]ज्ञानानन्दात्मके विष्णौ शिंशुमारवपुष्यथ। ऊर्ध्वलोकान् संव्याप्त आदित्याद्यास्तदाश्रिता'इति ब्रह्माण्डे ॥ ३२ ॥ इति पञ्चमतात्पर्ये द्वाविंशोऽध्यायः ॥ २२ ॥

## त्रयोविंशोऽध्यायः

[38]इलावृतस्थस्तुतिवत्पातालमूलस्थस्तुतिर्योजनीयाऽनन्तविषया ॥ ॥ ३८ ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते पञ्चमस्कन्धतात्पर्ये त्रयोविंशोऽध्यायः ॥ २३ ॥ २४ ॥ पञ्चमस्कन्धः सम्पूर्णः ॥ ॥ श्रीकृष्णार्पणमस्तु ॥

---

### द्वाविंशोऽध्यायः

ग्रहर्क्षतारामयमादिदैविकं रूपं हरे मन्त्रकृतस्त्रिकालम्। नमस्यतस्तुवतो नश्यते वै स्वयं त्रिकालं कृतमाशु पापम् ॥ ३२ ॥

### त्रयोविंशोऽध्यायः

ध्यायमानः सुरासुरोरगसिद्धगन्धर्वविद्याधर मुनिगणैरनवरतमदमुदितविकृतिविह्वललोचनः सुललितमुखरितामृतेनाप्यायमानः स्वपार्षदविबुधयूथपतीनपरिम्लानरागनवतुलसिकामोदमध्वासवेन माद्यन्मधुकरव्रातमधुरगीतश्रियं वैजयन्तीं स्वां वनमालां नीलवासा एककुण्डलो हलककुदि कृतसुभगसुन्दरभुजो भगवान् माहेन्द्रो वारणेन्द्र इव काञ्चनीं कक्ष्यामुदारलीलो बिभर्ति ॥३८॥ उत्पत्तिस्थितिलयहेतवोऽस्य कल्पाः सत्त्वाद्याः प्रकृतिगुणा यदीक्षयाऽऽसन्। यद्रूपं ध्रुवमकृतं यदेकमात्मन् नानाधात्कथमु ह वेद तस्य वर्त्म ॥ ४१ ॥

---



# षष्ठः स्कन्धः

## प्रथमोऽध्यायः

॥ हरिः ॐ ॥ '[40]वेदानां प्रथमो वक्ता हरिरेव यतो विभुः। अतो विष्ण्वात्मका वेदा इत्याहुर्वेदवादिन'इति शब्दनिर्णये ॥ ४० ॥ इति षष्ठतात्पर्ये प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः

[14]नारायणोऽयमित्यन्यहेलनविषयत्वेनोक्तमघहरम्। 'सर्वथाघहरं विष्णोर्नाम तद्भक्तिपूर्वकम्। अभक्त्योदाहृतं नैव फलदात् भविष्यति। नामस्वामितया तस्य स्मरणं जायते यतः। भक्तस्यातो नामकीर्तिः सङ्केतादावपीरिता। अजामिलोऽपि स्मरणाद्भक्त्या मृत्योर्मुच्यते'ति नारदीये ॥१४॥ इति षष्ठतात्पर्ये द्वितीयोऽध्यायः ॥२॥

## तृतीयोऽध्यायः

[12]ओतं प्रोतं पटवत्। 'यथा कन्थापटाः सूत्र ओताः प्रोताश्च

---

### षष्ठः स्कन्धः

### प्रथमोऽध्यायः

यमदूता ऊचुः—वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः। वेदो नारायणः साक्षात्स्वयम्भूरिति शुश्रुम ॥ ४० ॥

### द्वितीयोऽध्यायः

साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा। वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥ १४ ॥

### तृतीयोऽध्यायः

यम उवाच—परो मदन्यो जगतस्तस्थुषश्च ओतं प्रोतं पटवद्यत्र

संस्थिताः। एवं विष्णाविदं विश्वमोतं प्रोतं च संस्थितमि'ति स्कान्दे।
॥ १२ ॥ इति षष्ठतात्पर्ये तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः

[24]गुणो यथा गुणिनः। कश्चित्पुरस्थितो गुणभूतः प्रधानभूतस्य
राज्ञः ममासौ सखेति राज्ञा चिन्तितमपि न जानाति। 'यथा राज्ञ
प्रियत्वं तु भृत्यो वेद न चात्मनः। तथा जीवो न यत्सख्यं वेत्ति
तस्मै नमोस्तु त'इति स्कान्दे ॥ २४ ॥ '[25]देहमानी वैश्रवणो मरुता
प्राणमानिनः। इन्द्राद्या इन्द्रियात्मानो रुद्रोऽन्तःकरणात्मकः। नैते
विन्दन्ति स्वात्मानं परं वापि विमोहिताः। जीवाभिमानी ब्रह्मा तु
सर्वं वेद प्रजापतिः। सोऽपि वेद हरिं नैव सम्यक्सैव हि सर्वविदि'ति
च ॥ २५ ॥ [26]केवलया स्वसंस्थया। स्वप्नसुषुप्त्यादौ मनस उपरमा
जीवस्यास्वातन्त्र्यदर्शनेऽपि स्वप्नप्रबोधादिदर्शनादन्य ईश्वरस्तन्नियामको
स्तीति ज्ञायते। जीवेच्छाभावात्केवलत्वम्। 'यदोपरामो मनस
स्वप्नसुप्तिलयादिषु। तदावस्थाप्रबोधादिकारणत्वेन केशवः। अस्वतन्त्र्या
जीवस्य विद्यतेऽन्यो नियामकः। जीवप्रवृत्त्यानुकूल्याज्ज्ञायतेऽसौ तद
विभुरि'ति हरिवंशेषु ॥२६॥ [27]इच्छादिरूपेण त्रिवृद्भिः। 'इच्छादित्वे

---

विश्वम्। यदंशतोऽस्य स्थितिजन्मनाशा नस्योतवद्यस्य वशे च लोकाः।
॥ १२ ॥

चतुर्थोऽध्यायः

न यस्य सख्यं पुरुषो वेत्ति सख्युः सखा वसन् संवसतः पुरेऽस्मिन्।
गुणो यथा गुणिनोऽव्यक्तदृष्टिस्तस्मै महेशाय नमस्करोमि ॥ २४ ॥
देहोऽसवोऽक्षा मनवो भूतमात्रा नात्मानमन्यं च विदुः परं यत्। सर्वं
पुमान् वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञमनन्तमीडे ॥ २५ ॥ यदोपरामो
मनसो नामरूपरूपस्य दृष्टिस्मृतिसंप्रमोषात्। य ईयते केवलया
स्वसंस्थया हंसाय तस्मै शुचिसद्मने नमः ॥२६॥ मनीषिणोऽन्तर्हृदि



त्रिविधा विमलाद्यास्तु शक्तयः। विष्णोः स्वरूपभूता यास्ताभ्य-
न्तरात्मिकाः पराः। जायन्ते तत्प्रसादेन ताश्च पीठे प्रपूजयेत्। तद्भिन्न-
जीवास्तस्यैव प्रसादात्तत्समीपगा'इति तन्त्रनिर्णये। 'दशेन्द्रियाणि च
मनो बुद्धिप्राणप्रधनकाः। चतुर्दशैषां परमः पाश्वदृश्यो हरिः स्मृतः।
बुद्धेर्भेदेन चैतेषु पाश्वदृश्योऽथ संस्थितेरि'ति च ॥ २७ ॥ '[28]इयत्ता
तु विशेषः स्यादानन्दादौ तदुज्झितेः। सर्वैर्विशेषै रहित उच्यते हरि-
रव्ययः। अप्राकृतस्वरूपत्वान्निर्मायश्चेति कथ्यत' इति च। 'तद्रूप-
सदृशं रूपं यतः सर्वस्य सर्वदा। सर्वरूपो यतः शब्दमुख्यार्थः सर्व-
नामक'इति च। अलौकिकत्वान्नो विष्णुर्निरुक्तोऽतो निरूपितः।
तथापि वेदेषूक्तत्वादुक्तो रूपी स एव चे'ति व्योमसंहितायाम् ॥२८॥
[30]सप्तविभक्त्यर्थस्य कालस्य प्रकारस्य च हेतुर्ब्रह्मैव। 'विभक्त्यर्थस्य
कालस्य प्रकाराणां च कारणम्। एक एव परो विष्णुः सर्वसत्ताप्रद-
स्तत'इति भविष्यत्पर्वणि ॥ 'अनन्यः सदृशाभावादेको रूपाद्यभेदत'-
इति च ॥ ३० ॥ '[32]मदन्यो नास्ति सर्वेश इति विद्यासुरं मतम्।
अस्तीति दैवमुभयोर्हरिरेव ह्यपेक्षितः। निषेधविध्योर्विषयः फलदाता
च केशवः। तादृग्बुद्धेः कारणं च स्थानयोश्चोच्चनीचयोरि'ति च ॥
॥ ३२ ॥ '[33]तत्कर्मणामदृष्टत्वादनामा चाप्यदर्शनात्। अरूपस्त्ववत-
तारेण रूपकर्माणि दर्शयेत्। नित्यरूपो नित्यकर्माऽप्यव्यक्तत्वमपेक्ष्य

---

सन्निवेशितं स्वशक्तिभिर्नवभिश्च त्रिवृद्भिः। वह्निं यथा दारुणि पाञ्च-
दश्यं मनीषया निष्कृषन्तीह गूढम् ॥ २७ ॥ स वै समाशेषविशेषमाया-
निषेधनिर्वाणसुखानुभूतिः। स सर्वनामा स च विश्वरूपः प्रसीदता-
मनिरुक्तात्मशक्तिः ॥ २८ ॥ यस्मिन् यतो येन च यस्य यस्मै यं यो यथा-
कुरुते कार्यते वा। परावरेषां परमं प्राक् स्वसिद्धं तद्ब्रह्म तद्धेतुरनन्य-
देकम् ॥ ३० ॥ अस्तीति नास्तीति च वस्तुनिष्ठयोरेकस्थयोर्भिन्नविरुद्ध-
धर्मयोः। अपेक्षितं किञ्चन सांख्ययोगयोः समं परं ह्यनुकूलं बृहत्तत् ॥
॥ ३२ ॥ योऽनुग्रहार्थं भजतां पादमूलमनामरूपो भगवाननन्तः।

तु । अरूपकर्मेत्युदितो रूपकर्मोज्झितेर्न त्वि'ति प्रकाशसंहितायाम् 'अनामा सोऽधिकार्थत्वादव्यक्तत्वादरूपकः । कंसारित्वादिसाम्यार्थो व्यक्तरूपोऽवतारग' इति च । 'लोकदृष्ट्याधिकार्थानि मूलनामानि केशवे । अथ दामोदरादीनि लोकदृष्ट्या समानि तु । आनन्दोऽव्यक्तरूपस्तु मूलरूपमुदाहृतम् । स एव व्यक्तिमापन्नः प्रादुर्भाव उदीरित' इति च ॥ ३३ ॥ '[34]स्वदेहस्थं हरिं प्राहुरधमा जीवमेव तु । मध्यमाश्चाप्यनिर्णीतं जीवाद्भिन्नं जनार्दनम् । पूर्णानन्दादिगुणकं सर्वजीवविलक्षणम् । उत्तमास्तु हरिं प्राहुस्तारतम्येन तेषु च । बुद्धिशुद्ध्यनुसारेण यथाप्राणं शरीरगम् । श्वासमात्रं जनाः प्राहुरनिर्णीतं च मध्यमाः । देवदेवेश्वरं सूत्रमानन्दं प्राणवेदिन'इति च ॥ ३४ ॥ '[45]विशेषव्यक्तिपात्रत्वाद्ब्रह्माद्यास्तु विभूतयः । तदन्तर्यामिणश्चैव मत्स्याद्या विभवाः स्मृता'इति तन्त्रनिर्णये ॥ ४५ ॥ '[46]तपोऽभिमानी रुद्रस्तु विष्णोर्हृदयमाश्रितः । विद्यारूपा तथैवोमा विष्णोस्तनुमुपाश्रिता । श्रृङ्गाराद्याकृतिगतः क्रियात्मा पाकशासनः । अङ्गेषु क्रतवः सर्वे मध्यदेहे धर्मराट् । प्राणोवायुश्चित्तगतो ब्रह्माद्याः खेषु देवता'इति च ॥ यदाश्रितं यद्भवति तत्तन्नामकमीरितमि'ति शब्दनिर्णये ॥४६॥ [47]संज्ञानमात्रं यदिदं त्वया तपसा दृष्टं मम रूपं तदेवाग्र आसीत् । 'नानावर्णो हरिस्त्वेको बहुशीर्षभुजोरुपात् । आसील्लये तदन्यत्तु सूक्ष्मरूपं श्रियं विना । असुप्तः सुप्त इव च मीलिताक्षो भवेद्धरिः । अन्यत्रानादराद्विष्णौ श्रीश्च लीनेव कथ्यते । सूक्ष्मत्वेन हरौ स्थानाल्लीनमन्यदपीष्यत'

---

नामानि रूपाणि च जन्मकर्मभिर्भेजे स मह्यं परमः प्रसीदतु ॥ ३३ ॥ यः प्राकृतैर्ज्ञानपथैर्जनानां यथाशयं देहगतो विभाति । यथा... निलः पार्थिवमाश्रितो गुणं स ईश्वरो मे कुरुतान्मनोरथम् ॥ ३४ ॥ ... भवो भवन्तश्च मनवो विबुधेश्वराः । विभूतयो मम ह्येता भूतानां भू... हेतवः ॥ ४५ ॥ तपो मे हृदयं ब्रह्म तनुर्विद्या क्रियाऽऽकृतिः । अङ्गा... क्रतवो जाता धर्म आत्माऽसवः सुराः ॥ ४६ ॥ अहमेवेदमासाग्रे नान्य... त्किञ्चान्तरं बहिः । संज्ञानमात्रमव्यक्तं प्रसुप्तमिव विश्वतः ॥ ४७ ॥



...ति मात्स्ये ॥ ४७ ॥ [48]गुणतः अनन्ते । 'प्रत्येकशो गुणानां तु निःसीमत्वमुदीर्यते । तदानन्त्यं तु गुणतस्ते चानन्ता हि सङ्ख्यया । अतोऽनन्तगुणो विष्णुर्गुणतोऽनन्त एव चे'ति तन्त्रभागवते ॥ ४८ ॥ इति षष्ठतात्पर्ये चतुर्थोऽध्यायः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

## अष्टमोऽध्यायः

[17]सनत्कुमारोऽवतु कामदेवात् । 'सनत्कुमारनामा तु ब्रह्मचर्यवपुर्हरिः । सनत्कुमारमपरं ब्रह्मपुत्रं विवेश यः । स मां योग्येतराकामात्पातु विश्वेश्वरः प्रभुरि'ति च । देवर्षिवर्यः पुरुषान्तरार्चनात् । विष्णोरपरिवारत्वदृष्ट्या देवान्तरार्चनात् । 'महिदासो देवऋषिः पातु मां विष्णुरव्ययः । तदनर्पितकर्मभ्यस्तदस्मरणतस्तथे'ति च ॥ १७ ॥ [31]यथा हि भगवानेव सदसन्नियामकतया सदसद्रूप उच्यते । सत्येनानेन मां देवः पातु विष्णुश्चतुर्भुज' इति च ॥ ३१ ॥ [33]एक एव परो विष्णुर्भूपाहेतिध्वजेष्वजः । तत्तच्छक्तिप्रदत्वेन स्वयमेव व्यवस्थितः । सत्येनानेन मां देवः पातु सर्वेश्वरो हरि'रिति च ॥३३॥

---

...यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे । यदासीत्तत एवाद्यः स्वयम्भूः समभूदजः ॥ ४८ ॥

### अष्टमोऽध्यायः

सनत्कुमारोऽवतु कामदेवाद्धयशीर्षो मां देवहेलनात् । देवर्षिवर्यः पुरुषान्तरार्चनात् कूर्मो हरिर्मां निरयादशेषात् ॥ १७ ॥ यथा हि भगवानेव वस्तुतः सदसच्च यत् । सत्येनानेन नः सर्वे यान्तु नाशमुपद्रवाः ॥ ३१ ॥ यथैकात्म्यानुभावेन विकल्परहितः स्वयम् । भूषणायुधलिङ्गाख्या धत्ते शक्तीः स्वमायया ॥ ३२ ॥ तेनैव सत्यमानेन सर्वज्ञो भगवान् हरिः । पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वदा ॥ ३३ ॥ ...कारयमाणस्तु यं यं पश्यति चक्षुषा । पदा वा संस्पृशेत्सद्यः

'[43]गुरुशिष्ययोरयोग्यत्वाद्गुरुवृत्तेरपूर्तितः। अप्रसादाद्गुरोर्विद्या न तथोक्त
फलप्रदे'ति च ॥ 'विद्याः कर्माणि च सदा गुरोः प्राप्ताः फलप्रदाः।
अन्यथा नैव फलदाः प्रसन्नोक्ताः फलप्रदा'इति च तन्त्रसारे ॥ ४३ ॥
इति षष्ठतात्पर्ये अष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः

'[20]कालोऽन्तकः प्रधानं च मृत्युरव्यक्तमित्यपि। उच्यते
प्रकृतिः सूक्ष्मा श्रीर्भूर्दुर्गेति नामभिः। सैव ब्रह्मादिभयदा विष्णो
वशवर्तिनी। अभयापि बिभेतीव तद्वशत्वादुदीर्यत'इति मात्स्ये ॥२०॥
'[23]यत्र वायूदपद्मादिरूपेण प्रकृतिः स्थिता। एकस्तत्राबिभेद्ब्रह्मा विचा
भयमत्यगात्। अन्तर्गतो हरिस्तस्य ध्यातो भयमपानुददि'ति च ॥
'जनिष्यतां जनानां तु स्वभावानां प्रसिद्धये। ज्ञानादिगुणपूर्ण
ब्रह्मणोऽपि क्षणार्धगाः। भयादिका भवन्तीव कथं तस्मिन्स्थिरालया'
इति च ॥ 'भगवत्प्रीतये नित्यं ब्रह्मणो ये भयादयः। न वृथा त
भावः स्यात्कश्चित्तेऽपि क्षणार्धगाः। अज्ञानं च चतुर्वारं द्विवारं भयमे
च। शोकोऽपि तावान्नान्यत्र कदाचिद्ब्रह्मणो भवेत्। तत्रापि भग
त्प्रीत्या उन्नत्यैवास्य तद्भवेदि'ति ब्रह्मतर्के ॥ २३ ॥ [24]लिङ्गमे
पश्यामः। 'कदाचिदभिमानस्तु देवानामपि सन्निव। प्रायः काले

---

साध्वसात्स विमुच्यते ॥ ३६ ॥ एतां विद्यामधिगतो विश्वरूपात् शत
क्रतुः। त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान् ॥ ४३ ॥

### नवमोऽध्यायः

देवा ऊचुः—वाय्वम्बराग्न्यप्क्षितयस्त्रिलोका ब्रह्मादयो ये वय
मुद्विजन्तः। हराम यस्मै बलिमन्तकोऽसौ बिभेति यस्मादरणं ततो नः
॥ २० ॥ पुरा स्वयम्भूरपि संयमाम्भस्युदीर्णवातोर्मिरवैः कराले
पद्मोऽरविन्दात्पतितस्ततार तस्माद्भयाद्येन स नोऽस्तु पारः ॥२३॥ य ए
ईशो निजमायया नः ससर्ज येनानुसृजाम विश्वम्। वयं च यस्या





…स्त्येव तारतम्येन सोऽपि त्वि'ति च ॥ २४ ॥ '[28]श्रीवत्सः प्रकृति-
…या ब्रह्माख्यः कौस्तुभः पुमान्। तदतीतैः षोडशभिः स्वरूपैरप्यु-
…सत'इति च। श्रीवत्सकौस्तुभौ विनाऽऽत्मतुल्यैः प्रकृतिपुरुषातीत-
…त्सप्तदशरूपाण्यपि तुल्यानीत्यर्थः। आत्मभूतैश्च तुल्यैश्च आत्म-
तुल्यैः। 'अपुंप्रकृत्यधीनत्वाद्वासुदेवादिका हरेः। तुल्याश्च केशवाद्याश्च
… च भिन्नाः कथञ्चने'ति तन्त्रसारे ॥ श्रीवत्सकौस्तुभाभ्यां तु विना-
भावं प्रदर्शयन्। पुंप्रकृत्यात्मकाभ्यां स धत्ते नित्यं जनार्दनः। यदस्याभ्या-
…तीतत्वं यद्वशो नानयोर्हरिः। श्रीवत्सकौस्तुभाभ्यां तु विनाभावः स एव
…त्वि'ति च ॥ 'आत्मैव सप्तदशधा स्वयं भूत्वा जनार्दनः। मध्यस्थावृति-
…रूपेण क्रीडते पुरुषोत्तम'इति च ॥२८॥ '[30]वयः सर्वस्य वयनाद्भगवा-
…पुरुषोत्तम' इति च। 'मा तन्तुश्छेदिव यतो धियं म'इति श्रुतिः ॥
॥ ३० ॥ '[31]देवलोकात्पितृलोकान्निरयाच्चापि यत्परम्। तिसृभ्यः
परमं स्थानं वैष्णवं विदुषां गतिरि'ति माहात्म्ये ॥ ३१ ॥ '[33]अथ
तत्र भगवान् किं देवदत्तवदित्याक्षेपः। अचिन्त्यशक्तेरनन्तगुणस्य कुतः
पारतन्त्र्यादिकमित्यभिप्रायः। उपरतसमस्तमायामये प्राकृतस्वभाव-

---

…रः समेताः पश्याम लिङ्गं पृथगीशमानिनः ॥ २४ ॥ आत्मतुल्यैः
षोडशभिर्विना श्रीवत्सकौस्तुभौ। पर्युपासितमुन्निद्रशरदम्बुरुहेक्षणम् ॥
॥ २८ ॥ देवा ऊचुः—नमस्ते यज्ञवीर्याय वयसे उत ते नमः। नमस्ते
ह्यस्तु चक्राय नमोऽस्तु पुरुहूतये ॥ ३० ॥ यत्ते गतीनां तिसृणामीशितुः
परमं पदम्। नार्वाचीनो विसर्गस्य धातुर्वेदितुमर्हति ॥३१॥ ॐ नमस्तेऽस्तु
भगवन्नारायण वासुदेवादिपुरुष महापुरुष महानुभाव परममङ्गल परम-
कल्याण परमकारुणिक परमहंसपरिव्राजकैः परमेणात्मयोगसमाधिना
परिभावितपरिस्फुटितपारमहंस्यधर्मेणोद्घाटिततमःकपाटद्वारेणापावृते
आत्मलोके स्वयमुपलब्धो निजसुखानुभवो भवान् दुरवबोध इव तव
विहारयोगो यदशरणोऽशरीर इदमनपेक्षितास्मत्समवायः स आत्मनैवा
विक्रियमाणेन सगुणमगुणः सृजसि पासि हंसि ॥३२॥ अथ तत्र भगवान्
किं देवदत्तवदिह गुणविसर्गपतितः पारतन्त्र्येण स्वकृतकुशलाकुशल-

वर्जिते। केवलं स्वात्ममायां निजसामर्थ्यम्। स्वरूपद्वयाभावादित्या समाधानम्। 'स्वतन्त्रः परतन्त्रो वा ज्ञोऽज्ञो दुःखी सुखी नु किम् इत्यादि संशयः क्व स्याज्ज्ञानिनां पुरुषोत्तमे। तस्यानन्तगुणत्वाच्च पूर्ण शक्तित्वतो हरेः। स्वातन्त्र्यादिकमेवास्य विदो जानन्ति निश्चयात् घटकत्वाद्दुर्घटस्य दुर्ज्ञेयत्वाच्च सर्वशः। तच्छक्तेरविदो जीवं परत वदन्त्यमुम्। एवं दुर्घटया शक्त्या ज्ञोऽज्ञानां परमेश्वरः। यथा रज्जु सर्पधिया रज्जुबुद्ध्यावगम्यते। तथा यथार्थबुद्ध्या च मिथ्याबुद्ध्याऽव गम्यते स्वेच्छयैव महाविष्णुः फलदश्चानुसारत'इति तन्त्रभागवते त्रिनयनो नृसिंहरूपी। 'विष्णोर्नृसिंहनामानि त्रिनेत्रोग्रादिका त्वि'ति शब्दनिर्णये। 'विविधं भावपात्रत्वात्सर्वे विष्णोर्विभूतय'इ च ॥ ३३ ॥ '[35]निरुपक्रमो हरिर्नित्यमप्रयत्नो ह्युपक्रमेदि'ति च ॥

---

फलमुपाददाति। अहोस्विदात्माराम उपशमशीलः समञ्जसदर्शन उदा इति ह वाव न विदामः। नहि विरोध उभयं भगवत्यपरिगणितगुणग ईश्वरे अनवगाह्यमाहात्म्ये अर्वाचीनवितर्कविकल्पविचारप्रमाणाभास कुतर्कशास्त्रकलिलान्तःकरणदुरवग्रहवादिनां च विवादानवसरे उपरत समस्तमायामये केवलस्वात्ममायामन्तर्धाय को नु दुर्घट इव भवति स्वरू द्वयाभावात्। समविषममतीनां मतमनुचरसि। यथा रज्जुखण्डः सर्पा धियाम्। स एव पुनः सर्ववस्तुषु वस्तुस्वरूपः सर्वेश्वरः सकलज त्कारणकारणभूतः सर्वप्रत्यगात्मत्वात्सर्वगुणाभासोपलक्षित एक प पर्यवशेषितः। अथ ह वाव तव महिमामहामृतरससमुद्रविप्रुषाऽस लीढया स्वमनसि निष्यन्दमाननिरवरतसुखेन विस्मारितदृष्टश्रुतविषय सुखलेशाभासाः परमभागवता एकान्तिनो भगवति सर्वभूतप्रियसुहृ सर्वात्मनि निरन्तरनिर्वृतमनसः कथमु ह वा एते मधुमथन पुनः स्वा कुशला ह्यात्मप्रियसुहृदः साधवस्त्वच्चरणाम्बुजानुसेवां विसृजन्ति न य पुनरयं संसारपरिवर्तः। त्रिभुवनात्मभवन त्रिविक्रम त्रिनयन त्रिलो मनोहरानुभाव तवैव विभूतयोऽभूवन् दितिजदनुजादयश्चापि तेषामनु क्रमसमयोऽयमिति स्वात्ममायया सुरनरमृगमिश्रितजलचराकृतिभि र्यथापराधं दण्डमधथावतीर्य ॥ ३३ ॥ हंसाय दभ्रनिलयाय निरीक्षका कृष्णाय मृष्टयशसे निरुपक्रमाय। सत्सङ्गूहाय भवपान्थनिजाश्रया



॥३५॥ [39]यदि सोऽपि तथाविधः अत्युत्तमो न भवति चेत् ॥ ३९ ॥ ष्मत्कामो मत्प्रिय एव। अन्यथा न दद्यामिति भावः। 'विष्णोः प्रियं कामयन्ति देवा नैवाप्रियं क्वचित्। यद्यप्रियं कामयन्ति न नीशो हितो हि स'इति तन्त्रभागवते ॥ ४० ॥ '[45]समर्था अपि याचन्ते देवा मुन्यादिकान्क्वचित्। आज्ञयैव हरेस्तेषां यशोऽर्थमपि न्यथे'ति च ॥ ४५ ॥ इति षष्ठतात्पर्ये नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः

'[6]आज्ञयैव महाविष्णोः कार्यार्थमपि च क्वचित्। नीचानपि याचन्ते स्वात्मनो गुणवत्तराः। नीचवाक्यं वदेयुश्च सुरा नैतावता चित्। तेजःक्षितिर्भवेदेषां जनकस्य यथार्भकादि'ति तन्त्रमालायाम् ॥ ॥ ६ ॥ इति षष्ठतात्पर्ये दशमोऽध्यायः ॥ १० ॥ ११ ॥

## द्वादशोऽध्यायः

[11]मन्यतेऽनीशमीश्वरम्। 'अनीशं जीवरूपेण परमात्मानमीश्वरम्।

---

व्यद्वरिष्ठगतये हरये नमस्ते ॥३५॥ न वेद कृपणः श्रेय आत्मनो गुण- स्तुदृक्। तस्य तानिच्छतो यच्छे यदि सोऽपि तथाविधः ॥ ३९ ॥ र्थ निःश्रेयसं विद्वान्न वक्त्यज्ञाय कर्मभिः। न राति रोगिणोऽपथ्यं च्छतोऽपि भिषक्तमः ॥४०॥ मघवन्यात भद्रं वो दध्यंचमृषिसत्तमम्। विद्याव्रततपःसारं गात्रं याचत माचिरम् ॥ ४१ ॥ तस्मिन्विनिहते यूयं ोऽस्त्रायुधसम्पदः। भूयः प्राप्स्यथ भद्रं वो न हिंसन्ति च परान् ॥ ४५ ॥

### दशमोऽध्यायः

तथाभियाचितो देवैर्ऋषिराथर्वणो महान्। मोदमान उवाचेदं हसन्निव भारत ॥ २ ॥ नूनं स्वार्थपरो लोको न वेद परसङ्कटम्। यदि न याचेत नेति नाह यदीश्वरः ॥ ६ ॥

### द्वादशोऽध्यायः

पुरुषः प्रकृतिर्व्यक्तमात्मभूतेन्द्रियाशयाः। शक्नुवन्त्यस्य सर्गादौ

ये मन्यन्ते तान्समीक्ष्य स्नेहान्निरयभाग्भवेदि'ति च । 'हिरण्यगर्भ पुरुष आत्मा वायुरुदाहृतः । शेषोऽव्यक्तस्तथैवेन्द्र आशयः समुदाहृत' इति च ॥११॥ [33]सन्धितः समयेनेन्द्रो वृत्रेणाथो करग्रहः । समुद्रती विचरन्फेनेन वधमस्य तु । नर्मणा जहि फेनेन वाचयित्वा सुरेश्वरः पादस्पर्शविवादं च कृत्वा युद्धाय दंशितः । फेने वज्रं समावेश्य विष्णुयुक्तं व्यसर्जयत् । अपानुदच्छिरस्तस्य ध्यायतो वत्सरेण स इत्याग्नेये ॥ ३३ ॥ इति षष्ठतात्पर्ये द्वादशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः

'[1]प्रारब्धकर्मणैवैषां कृतदुःखस्य सूचकम् । इदानींतनकर्म स्याद्व्रण हेतुर्यथा रणः । देवादीनां स्थितप्रज्ञभावान्नैवान्यथा भवेत् । प्रारब्धमपि तु क्वापि किञ्चिद्विघटितं भवेदि'ति च ॥ १ ॥ इति षष्ठतात्पर्ये त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्दशोऽध्यायः

'[5]नवकोट्यस्तु देवानामृषयः शतकोटयः । नारायणायनाः सर्वे ये केचित्तत्परायणा'इति च । 'नारायणायना देवा ऋष्याद्यास्तत्परायणाः

---

न विना यदनुग्रहम् । अविद्वानेवमात्मानं मन्यतेऽनीशमीश्वरम् ॥ ११ ॥ वज्रस्तु तत्कन्धरमाशुवेगः कृन्तन्समन्तात्परिवर्तमानः । न्यपातयत्ता वदहर्गणेन यो ज्योतिषामयनेवार्त्रहत्ये ॥ ३३ ॥

त्रयोदशोऽध्यायः

वृत्रे हते त्रयो लोका विना शक्रेण भूरिद । सपाला ह्यभवन्सद्यो विज्वरा निर्वृतेन्द्रियाः ॥ १ ॥ श्री शुक उवाच—एवं सञ्चोदितो विप्रै मरुत्वानहनद्रिपुम् । ब्रह्महत्या हते तस्मिन्नाससाद वृषाकपिम् ॥ १० ॥

चतुर्दशोऽध्यायः

मुक्तानामपि सिद्धानां नारायणपरायणः । सुदुर्लभः प्रशान्तात्मा



ब्रह्माद्याः केचनैव स्युः सिद्धो योग्यसुखं लभन्नि'ति तन्त्रभागवते ॥५॥ '[11]सन्तापक्रोधरागादिष्वनर्थकवचः क्वचिदि'ति शब्दनिर्णये ॥ १४ ॥ इति षष्ठतात्पर्ये चतुर्दशोऽध्यायः ॥ १४ ॥

## पञ्चदशोऽध्यायः

'[12]मनसो द्वेषरागाभ्यां पुण्यपापसमुद्भवः । पुत्रादि पुण्यपापाभ्यां तस्मात्सर्वं मनोभवमि'ति नारदीये ॥ १२ ॥ '[29]द्रव्यात्मकः स्थूलदेहः क्रियाकर्मेन्द्रियाणि च । ज्ञानेन्द्रियाणि च मनो ज्ञानात्मकमुदाहृतमि'ति ब्रह्मवैवर्ते ॥ 'कार्यकारणयोरेकशब्दव्यवहृतिर्भवेदि'ति शब्दनिर्णये ॥ २९ ॥ '[30]अनन्यापेक्षतस्त्वेको हरिरन्यद्द्वयं स्मृतम् । अन्यापेक्षत्वतस्तेन प्राप्तत्वाद्द्वैतमुच्यत'इति च ॥ ३० ॥ '[35]रुद्राद्याः शेषदेहस्थं विष्णुं संकर्षणाभिधम् । शेषान्तर्यामिणं ज्ञात्वा स्वपदं प्रापुरञ्जसे'ति तन्त्रभागवते ॥ ३५ ॥ '[36]द्वैतेन बन्धसंत्यागाद्द्वैतत्यागी भवत्युते'ति शब्दनिर्णये । देहाद्येऽहंममाभिमानो भ्रमः । 'तेषां तेषां पदान्येव वैष्णवानि पदानि तु । तेषां महित्वं च तथा हरेस्तद्वशगं

---

कोटिष्वपि महामुने ॥ ५ ॥ तस्यैकदा तु भवनमङ्गिरा भगवानृषिः । लोकाननुचरन्नेतानुपागच्छद्यदृच्छया ॥ १४ ॥

पञ्चदशोऽध्यायः

तस्मादन्यन्मनोमात्रं जह्यहंममतातमः । वासुदेवे भगवति मनो ब्रह्मात्मनीश्वरे ॥१२॥ अधुना पुत्रिणां तापो भवतैवानुभूयते । एवं दारा गृहा रायो विविधैश्वर्यसम्पदः ॥ २५ ॥ दृश्यमाना विनार्थेन न दृश्यन्ते मनोभवाः । कर्माभिध्यायतो नानाकर्माणि मनसोऽभवन् ॥ २८ ॥ अयं हि देहिनो देहो द्रव्यज्ञानक्रियात्मकः । देहिनो विविधक्लेशसन्तापकृदुदाहृतः ॥२९॥ तस्मात्स्वस्थेन मनसा विमृश्य गतिमात्मनः । द्वैते ध्रुवार्थविस्रम्भं त्यजोपशममाविश ॥३०॥ नारद उवाच—इमां मन्त्रोपनिषदं प्रतीच्छ प्रयतो मम । यां धारयन्सप्तरात्राद्द्रष्टा सङ्कर्षणं विभुम् ॥३५॥ यत्पादमूलमुपसृत्य नरेन्द्र पूर्वे शर्वादयो भ्रममिमं द्वितयं विसृज्य ।

यतः। अतुल्यानधिकं चैव तस्य तस्यैव मुक्तिगम्। स्वस्यैव पूर्वं माहात्म्यमपेक्ष्य न हरेः क्वचित्। माहात्म्यमन्यप्राप्यं स्यान्न ते विष्णाविति श्रुतेरि'ति तन्त्रभागवते॥ 'ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते। तद्यत्स्वभावः कैवल्यं स भवान्केवलो हरिरि'ति स्कान्दे॥ तत्प्रसादलभ्यत्वात्तदीयमपि तेनातुलमनधिकं चान्यमाहात्म्यम्॥३६॥

इति षष्ठतात्पर्ये पञ्चदशोऽध्यायः॥ १५॥

## षोडशोऽध्यायः

[9]एष नित्योऽव्ययः:। 'अनित्यसम्बन्धयुताः पित्राद्या नित्ययुग्घरिरि'ति च। आत्मानं चावताररूपेण सृजते॥ ९॥ '[11]भोक्ता सद्गुणभोक्तृत्वान्न भोक्ता तदवृद्धितः। अचिन्त्यशक्तितस्तच्च युज्यते परमेशितुरि'ति च॥ ११॥ [21]बाह्यमनस्युपरते चिन्मात्रमनसा स प्राप्यः॥२१॥ [22]मृन्मयेष्विव मृज्जातिः। 'पृथिवीपर्वताश्चैव मृन्मयाः समुदीरिताः। तेषु मृज्जातयः सर्वे जायन्ते स्थावरादय'इति च॥२२॥ [29]अन्यान्तर्यामिणं विष्णुमुपास्यान्यसमीपगः। भवेद्योग्यतया तस्य पदं वा प्राप्नुयान्नर'इति नारदीये॥ अनेन प्रकारेण मुहुस्तत्सकाशमभ्ययात्। 'शेषान्तर्यामिणं विष्णुं चित्रकेतुरुपास्य तु। शेषाविष्टहरेश्चापि वरा-

---

सद्यस्तदीयमतुलानधिकं महित्वं प्रापुर्भवानपि परं न चिरादुपैति॥ ३६॥

### षोडशोऽध्यायः

एष नित्योऽव्ययः सूक्ष्म एकः सर्वाश्रयः स्वदृक्। आत्ममायागुणैर्विश्वमात्मानं सृजते प्रभुः॥ ९॥ नादत्त आत्मा हि गुणं न दोषं न क्रियाफलम्। उदासीन इवासीनः परावरदृगीश्वरः॥ ११॥ वचस्युपरते प्राप्यो य एको मनसा सह। अनामरूपचिन्मात्रः सोऽव्यान्नः सदसत्परः॥ २१॥ यस्मिन्निदं यतश्चेदं तिष्ठत्यप्येति जायते। मृन्मयेष्विव मृज्जातिस्तस्मै ते ब्रह्मणे नमः॥ २२॥ ततः कतिपयाहोभिर्विद्ययेद्धमनोगतिः। जगाम देवदेवस्य शेषस्य चरणान्तिकम्॥ २९॥



प्राप्याप सद्गतिमि'ति तन्त्रमालायाम्॥ २९॥ '[51]हरिस्तु सर्वभूतानि तदन्तर्याम्यपेक्षया। तिङ्पदान्यपि सर्वाणि सुप्पदानि तथैव च। तस्मिन्नेव प्रवर्तन्ते मुख्यवृत्त्या विशेषत'इति च॥ ५१॥ [52]लोकं चात्मनि सन्ततं वासनारूपेण॥ ५२॥ [54]मायामात्राणि प्रकृतिनिर्मितानि॥ ५४॥ [56]प्रतिबोधेऽन्वेति स्वयमपि प्रतिबुद्धः। सुप्तावस्वपन्व्यतिरिच्येत॥ ५६॥ '[57]सर्वभिन्नं परात्मानं विस्मरन्संसरेदिह। अभिन्नं संस्मरन्याति तमो नास्त्यत्र संशय'इति च॥ ५७॥

इति षष्ठतात्पर्ये षोडशोऽध्यायः॥ १६॥

## सप्तदशोऽध्यायः

[13]एषां पक्षे तदवताराणामनुध्येयपदाब्जयुग्मम्। 'विष्णुर्ब्रह्मप्राणवीन्द्रस्तद्दारानप्यृते हरः। ध्येयो हरेः पार्षदाद्यैर्ध्यायन्हरिचतुर्मुखौ। प्राणमेषां तथा दारान्न स्वतन्त्रतया क्वचिदि'ति तन्त्रमालायाम्॥ १३॥

---

तद्दर्शनध्वस्तसमस्तकिल्बिषः स्वस्थामलान्तःकरणोऽभ्ययान्मुनिः। प्रवृद्धभक्त्या प्रणयाश्रुलोचनः प्रहृष्टरोमा तमनादिपूरुषम्॥ ३१॥ स उत्तमश्लोकपदाब्जविष्टरं प्रेमाश्रुलेशैरुपमेचयन्मुहुः। प्रेमोपरुद्धाखिलवर्णनिर्गमो नैवाशकत्तं प्रसमीडितुं चिरम्॥ ३२॥ अहं वै सर्वभूतानि भूतात्मा भूतभावनः। शब्दब्रह्म परंब्रह्म ममोभे शाश्वती तनू॥५१॥ लोके विततमात्मानं लोकं चात्मनि सन्ततम्। उभयं च मया व्याप्तं मयि चैवोभयं कृतम्॥ ५२॥ एवं जागरणादीनि जीवस्थानानि चात्मनः। मायामात्राणि विज्ञाय तद्द्रष्टारं परं स्मरेत्॥ ५४॥ उभयं स्मरतः पुंसः प्रस्वापप्रतिबोधयोः। अन्वेति व्यतिरिच्येत तज्ज्ञानं ब्रह्म तत्परम्॥५६॥ यदेष विस्मृतः पुंसो मद्भावो भिन्न आत्मनः। ततः संसार एतस्य देहाद्देहो मृतेर्मृतिः॥ ५७॥

### सप्तदशोऽध्यायः

एषामनुध्येयपदाब्जयुग्मं जगद्गुरुं मङ्गलमङ्गलं स्वयम्। यः क्षत्रबन्धुः परिभूय सूरीन् प्रशास्ति धृष्टस्तदयं हि दण्ड्यः॥ १३॥ नैवात्मा

'[22]सेवायोग्यातिरेकेण स्वानामपि न दास्यति । अपराधातिरेकेण नान्यस्यातः समो हरिरि'ति माहात्म्ये ॥ २२ ॥ '[19]यत्तद्भगवता कृतं तदेव नियतं भवेत् ॥ १९ ॥ [20]अतोऽन्येषां वरः शापो गुणदोषप्रकर्तृता । स्वतः प्राप्ता भेदकृतिर्वासनारूपिणो यथा । विद्यमानस्य मनसि पुनः स्वप्नेषु दर्शनम् । भगवद्वशता यस्मात्सर्वेषां ज्ञेयमेव तदि'ति प्रकाशसंहितायाम् ॥२०॥ [37]प्रतिशप्तुमलं तमः । 'देवा एव तदन्येभ्यः शक्ता नास्त्यत्र संशयः । अशक्ता अपि शक्तानां शक्ताः शापादिषु स्फुटम् । तथाप्यशक्तैर्विहिताः शापाद्याः शक्तिमत्सु वै । अत्यल्पाश्चाल्पकालाश्च न सम्यक्प्रभवन्ति च । यत्नेनापोहितुं शक्या उत्तमैस्तु न संशयः । उत्तमेषु कृताः शापाः कर्तॄणां ज्ञानपुण्ययोः । निःशेषेण निहन्तारस्तदनुग्रहमन्तरा । सदारयोर्ब्रह्मविष्ण्वोर्वरशापादयोऽखिलाः । तदन्येन कृताः सर्वे निष्फला एव निश्चयात् । न चाप्यवान्तराः शापा भवन्त्येषां तु कुत्रचित् । वरा विष्णोः श्रियश्च स्युर्ब्रह्मणश्च यथाक्रमम् । उत्तमैरधमानां तु वराः शापा यथोदितम् । सम्पूर्णफलदा एव नात्र कार्या विचारणे'ति स्कान्दे ॥ ३७ ॥ इति षष्ठतात्पर्ये सप्तदशोऽध्यायः ॥ १७ ॥ १८ ॥

---

न परश्चापि कर्ता स्यात्सुखदुःखयोः । कर्तारं मन्यतेऽत्राज्ञ आत्मानं परमेव च ॥ १९ ॥ गुणप्रवाह एतस्मिन्कः शापः को न्वनुग्रहः । कः स्वर्गो नरकः को वा किं दुःखं सुखमेव च ॥ २० ॥ न चास्य कश्चिद्दयितः प्रतीपो न ज्ञातिबन्धुर्न परो न च स्वः । समस्य सर्वत्र निरञ्जनस्य कुतोनुरागः कुत एव रोषः ॥२२॥ देहिनां देहसंयोगाद्द्वन्द्वानीश्वरलीलया । सुखं दुःखं मृतिर्जन्म शापोऽनुग्रह एव च ॥ २९ ॥ अविवेककृतः पुंसो ह्यर्थभेद इहात्मनि । गुणदोषविकल्पश्च भिदेव स्वप्नकल्पिता ॥ ३० ॥ इति भागवतो देव्याः प्रतिशप्तुमलं तमः । मूर्ध्ना सञ्जगृहे शापमेतावत्साधुलक्षणम् ॥ ३७ ॥





## एकोनविंशोऽध्यायः

[11]इज्या क्रिया । 'अन्तर्यामी तु यज्ञादेर्विष्णुरिज्यादिनां रमा । तत्तच्छब्दैस्ततो वाच्यौ न तु सर्वस्वरूपतः । अन्तर्यामी श्रियश्चापि विष्णुरेव न संशयः । नान्तर्यामी कश्चिदस्ति विष्णोः क्वापि कुतश्चने'ति ब्रह्मतर्के ॥ ११ ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भागवतषष्ठस्कन्धतात्पर्ये एकोनविंशोऽध्यायः ॥ १९ ॥ षष्ठस्कन्धः सम्पूर्णः ॥

---

## सप्तमः स्कन्धः

### प्रथमोऽध्यायः

श्रीगुरुभ्यो नमः ॥ '[6]बाध्यादिस्थो हरिर्नित्यं बाध्यतादिगतेष्वपि । गीयते न तु बाध्यत्वाद्यददोषयुतत्वत'इति भविष्यत्पर्वणि ॥ ॥६॥ [6-9]दधिस्थघृतवत्काष्ठे वह्निवच्च जनार्दनः । देहेन्द्रियासुजीवेभ्यो

---

एकोनविंशोध्यायः

तस्या अधीश्वरः साक्षात्त्वमेकः पुरुषः परः । त्वं सर्वयज्ञ इज्येयं क्रियेयं फलभुग्भवान् ॥११॥ गुणव्यक्तिरियं देवी व्यञ्जको गुणभुग्भवान् । त्वं हि सर्वशरीरात्मा श्रीः शरीरेन्द्रियाशया ॥ १२ ॥ नामरूपे भगवती प्रत्ययस्त्वमपाश्रयः । यथा युवां त्रिलोकस्य वरदौ परमेष्ठिनौ । तथेमा उत्तमश्लोक सन्तु सत्या महाशिषः ॥ १३ ॥

---

सप्तमः स्कन्धः

प्रथमोऽध्यायः

निर्गुणोऽपि ह्यजोऽव्यक्तो भगवान् प्रकृतेः परः । स्वमायागुणमाविश्य बाध्यबाधकतां गतः ॥ ६ ॥ ज्योतिरादिरिवाभाति सङ्घातान्न

विविच्य ज्ञायते न त्वि'ति च ॥ ६, ९ ॥ [11]प्रधानपुंभ्यां सह ॥११॥ [12]काले कालविषयेऽपीशिता । देहादिकारणत्वात्सुरानीकमिव स्थितं सत्वम् । 'स्वभावतः प्रियत्वात्तु सदा देवप्रियो हरिः । अप्रियश्चासुराणां स स्वभावात्तूभयं नृणाम् । देशकालौ गुणाश्चैव भक्त्यादीनप्यपेक्ष्य तु । योग्यतां च तथा कर्म सम इत्यभिधीयते । स्वतः प्रियोऽपि देवाना-मुत्पाद्यैव गुणानिमान् । इतरेषां तथा दोषान्सुखदुःखे ददात्यजः । उभयं तु मनुष्याणामतः सम इतीरितः । अनादिनियताश्चैव गुणदोषाः सुरादिषु । यथाक्रमं पुनश्चैव नियमाद्वर्धितास्तथा । विष्णुनैव ततो नित्यं विषमश्च जनार्दन'इति ब्रह्मतर्के ॥ 'न विष्णोर्विषमत्वं तु योग्यता-पेक्षया क्वचित् । योग्यतायास्तन्नियत्या विषमत्वं भवेदिती'ति स्कान्दे ॥ 'विषमत्वं तु दोषाय शुभाशुभविपर्यये । अतस्तादृशवैषम्यं ब्रह्मसूत्रे निराकृतम् । शुभाशुभनियन्तृत्वं न दोषो गुण एव सः । अतस्तद्दिष्टं कृष्णस्य ब्रह्मसूत्रकृतो विभोरि'ति तन्त्रनिर्णये ॥ १२ ॥ '[21]नियमा-द्भुज्यते पुंभिर्धर्माधर्मफलं मृतौ । कैश्चिदत्रापि भुज्येत तस्मान्नाधर्म-माचरेदि'ति भारते ॥ २० ॥ [26]कैवल्याद्देहाद्यभावादेव ॥ २६ ॥ [27]अकर्तुस्तस्यान्यः कर्ता न विद्यते । इदं एषा (हिंसा) । 'व्यत्ययोऽतिशय-कुत्सनभेदेष्वि'ति सूत्रात् । कथञ्चिन्नेक्षते पृथक् । तत्रैव मनसोऽभि-निवेशेन तदन्यं नेक्षते । वैरादीनामेकतमेनापि यो युञ्ज्यात् स नेक्षत

---

विद्यते । विदन्त्यात्मानमात्मस्थं मथित्वा कवयोऽन्ततः ॥ ९ ॥ कालं चरन्तं सृजतीश आश्रयः प्रधानपुम्भ्यां नरदेव सत्यकृत् । स तत्र-तत्रोभयसिद्धिमाप्नुयाल्लिङ्गात्मनो लिङ्गगुणाश्च सन्ति ॥ ११ ॥ य एष राजन्नपि काल ईशिता सत्वं सुरानीकमिवैधयत्यजः । तत्प्रत्यनीकानसुरा-न्सुरप्रियो रजस्तमस्कान्प्रमिणोत्युरुश्रवाः ॥ १२ ॥ शपतोरसकृद्विष्णुं यद्ब्रह्म परमव्ययम् । श्वित्रो न जातो जिह्वायां नान्धं विविशतुस्तमः ॥२०॥ यन्निबन्धोऽभिमानोऽयं तद्वधात्प्राणिनां वधः । तथा न यस्य कैवल्यादभि-मानोऽखिलात्मनः ॥ २६ ॥ परस्येदमकर्तुर्हि हिंसा केनास्य कल्प्यते ।



इति स्वभावकथनं न विधिः । 'कर्मणा मनसा वाचा यो द्विष्या-द्विष्णुमव्ययम् । मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः' । 'तानहं द्विषतः क्रूरान्संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु । आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्' ॥ 'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । परंभावमजानन्तो मम भूतमहेश्वरम्' ॥ 'मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः । राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः' ॥ 'यदनिन्दत्पिता मे त्वामविद्वांस्तेज ऐश्वरम् । तस्मात्पिता मे पूयेत दुरन्ताद्दुस्तरादघात् । हिरण्यकशिपुश्चापि भगवन्निन्दया तमः । विविक्षुरत्यगात्सूनोः प्रह्लादस्यानुभावतः' ॥ 'वरतोऽपि न मुच्यन्ते द्वेषिणः शापतोऽपि तु । भक्ता नैव निपात्यन्ते धर्माधर्मैस्तथेतरैः । अन्यावेशकृतं यत्तु तद्वराद्यैरपोह्यते । तद्विरुद्धस्वभावानामन्यथा न कथञ्चने'त्यादेः ॥ यस्मादेव कोऽप्युपद्रवो नास्ति भगवतस्तस्मादेव द्वेषादिनापि मनो योक्तुं शक्यते तत्प्रेरणया । तादृशानां तदेव चिन्तयति च । अन्यथा आत्मनो दुःखकारणं द्वेषादिकं कथं सर्व-नियामको हरिरुत्पादयेत् ॥ २७ ॥ [28]तत्रैव हेतुः । यथा वैरानुबन्धे-नेति । यथा वैराभिनिवेशिनः तथा भक्त्याभिनिवेशिनो न सन्ति । तत्कथमन्यथा भक्तानेव बहून्हरिः कुर्यादिति भावः ॥ २८ ॥ [29]कीटः पेशस्कृतेत्यादि चैद्यादीनां भक्तियुतत्वप्रतिपादनम् ॥ २९ ॥ [27]स्नेहा-यतननाशादिनाऽप्युपद्रवोऽस्य नास्तीति निर्वैरेणेत्याद्युक्तम् ॥ २७ ॥ [30]'ततः कनीयसा एव देवा ज्यायसा आसुरा' इति श्रुतिः । तन्मयतां मनसस्तत्राभिनिवेशनम् । 'मागधाद्या यथा नित्यं द्वेषादाग्रहिणो हरौ ।

---

तस्माद्वैरानुबन्धेन निर्वैरेण भयेन वा । स्नेहात्कामेन वा युञ्ज्यात्कथञ्चि-न्नेक्षते पृथक् ॥ २७ ॥ यथा वैरानुबन्धेन मर्त्यस्तन्मयतामियात् । न तथा

न तथाऽऽग्रहिणो भक्ता ऋते ब्रह्माणमव्ययमि'ति हरिवंशेषु ॥ २८ ॥ [29]योगः स्नेहः । संरम्भभययुक्तस्नेहेन । 'प्रीतिः स्नेहस्तथा योग प्रेमबन्ध इतीर्यत'इति शब्दनिर्णये ॥२९॥ [30]वैरयुक्तयाऽप्यनुचिन्तया तमापुः । 'अनुचिन्तेति तामाहुर्भक्तिपूर्वा तु या स्मृतिरि'ति च ॥ 'स्नेहादन्नं ददातीति स्वाकर्षणभयेऽपि च । विद्यमानेऽप्यल्पकोपे सङ्गतिस्नेहतस्तथा ॥ पेशस्कृद्रूपतां कीटो यथा याति तथैव तु । चैद्यादयोऽसुरावेशाद्धरौ द्वेषयुता अपि ॥ निजस्वभावया भक्त्या नीता हरिसरूपताम् । तथा हि करुणो विष्णुरन्यावेशाद्यदि द्विषन् ॥ हीयते किं ममानेन नित्यानन्दस्वरूपिणः । देहबन्धयुतानां हि द्वेषिणाऽपकृतं भवेत् ॥ मम को ह्यपराध्येत निर्दोषसुखरूपिणः । अतो मय्यपराधस्तु स्वस्मिन्नेव न मे भवेत् ॥ अतो यच्चासुरावेशात्कृतमेतेन दुष्कृतम् । अनादिभक्तो यस्मान्मे मोचयिष्ये ततस्त्वहम् ॥' इति मत्वा मोचयति चैद्यादीनपि केशव'इति ब्रह्माण्डे ॥ ३० ॥ [31]कामादिभिरपि यथाव-द्भक्त्या सहैव मन आवेश्य तदघं यत्तु द्वेषादिकृतमघं यथाभूतया भक्त्या हित्वा ॥ ३१ ॥ '[32]गोप्यः कामयुता भक्ताः कंसाविष्टः स्वयं भृगुः । ज्ञेयो भययुतो भक्तश्चैद्यादिस्था जयादयः । विद्वेषसंयुता भक्ता वृष्णयो बन्धुसंयुताः । बहुमानस्नेहसाम्याद्देवा भक्ताः प्रकीर्तिताः । स्नेहोप-सर्जना देवबहुमानान्मुनीश्वराः । बहुमानोऽपि देवानामृषिभ्योऽप्यधिको मतः । ब्रह्मवीन्द्रेन्द्रकामादेरितरेषां यथाक्रममि'ति ब्रह्मतर्के ॥ ३२ ॥

---

भक्तियोगेन इति मे निश्चिता मतिः ॥ २८ ॥ कीटः पेशस्कृता रुद्धः कुड्ये यान्तमनुस्मरन् । संरम्भभययोगेन विन्दते तत्स्वरूपताम् ॥ २९ ॥ एवं कृष्णे भगवति मायामनुज ईश्वरे । वैरेण धूतपाप्मानस्तमापुरनु-चिन्तया ॥ ३० ॥ कामात्स्नेहाद्भयाद्द्वेषाद्यथा भक्त्येश्वरे मनः । आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः ॥ ३१ ॥ गोप्यः कामाद्भयात्कंसो द्वेषा-च्चैद्यादयो नृपाः । सम्बन्धाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभो ॥३२॥



न्तमोऽपि भक्तियोगो न वेनस्य । तस्मात्केनापि प्रकारेण उपायेनैव नो निवेशयेत् । नानुपायेन । 'उपायो भक्तिरुद्दिष्टो द्वेषाद्या नुपायका'इति शब्दनिर्णये ॥ ३३ ॥ [34]स्वतो भक्ताश्चैद्यादयोऽपि रावेशाद्द्वेषिण इत्यत्र हेतुर्मातृष्वस्रेय इत्यादि ॥ ३४ ॥ [38-39]द्वास्था-त्यनेनाधिकारस्थत्वमुक्तम् । 'अधिकारस्थिताश्चैव विमुक्ताश्च द्विधा नाः । विष्णुलोकस्थितास्तेषां वरशापादियोगिनः । अधिकारस्थिता क्तिं नियतं प्राप्नुवन्ति च । विमुक्त्यनन्तरं तेषां वरशापादयो न तु । देहेन्द्रियासुयुक्ताश्च पूर्वं पश्चान्न तैर्युताः । अप्यभीमानिभिस्तेषां देवैः ात्मोत्तमैर्युता'इति तन्त्रसारे ॥ ३८, ३९ ॥ [44]सर्वभूतात्मनि भूतम् ॥ ॥४४॥ '[45]हिरण्यकशिपुर्भूतममन्यत मृतौ हरिम् ॥ अतो भयानको तस्तत्र राजानमेव च । मत्वा राजैव सञ्जातः कृष्णं चक्रादिलक्षणैः । तिकाले हरिं चैव मत्वा भक्त्यैव केवलम् । द्वास्थत्वं हरिमाविश्य पैव मनुजोऽपि त्वि'ति गारुडे ॥ (वि० अ० २ श्लो० ९) 'विष्णु-क्तेश्च तज्ज्ञानादन्यतो मुक्तिवाचकाः । विष्णोर्गुणह्रासवाचः श्रीब्रह्मादे-था क्रमात् । विष्ण्वादिद्वेषतश्चैव सुखवाचस्तथाऽखिलाः । मोहनार्थाः मुद्दिष्टा यथार्थद्योतकास्तथे'ति प्रकाशसंहितायाम् ॥ ४५ ॥ [48]वैरानु-न्धः वैरयुक्ता भक्तिः । 'अनुबन्धस्तु भक्तिः स्याद्बन्धः स्नेह उदाहृत'-ति च ॥ ४८ ॥ इति सप्तमतात्पर्ये प्रथमोऽध्यायः ॥ १ ॥

---

तमोऽपि न वेनस्य पश्चानां पूरुषं प्रति । तस्मात्केनाप्युपायेन मनः कृष्णे निवेशयेत् ॥ ३३ ॥ मातृष्वस्रेयो वश्चैद्यो दन्तवक्त्रश्च पार्थिव । पार्षद-वरौ विष्णोर्विप्रशापात्पदच्युतौ ॥ ३४ ॥ पञ्चषड्ढायनार्भाभाः पूर्वेषामपि पूर्वजाः । दिग्वाससः शिशून्मत्वा द्वाःस्थौ तान्प्रत्यषेधताम् ॥ ३८ ॥ शापन्कुपिता एवं युवां वासं न चार्हथः । रजस्तमोभ्यां रहिते पाद-मूले मधुद्विषः ॥ ३९ ॥ तं सर्वभूतात्मभूतं प्रशान्तं समदर्शनम् । भगवत्तेजसा स्पृष्टं नाशक्नोद्धन्तुमुद्यमैः ॥ ४४ ॥ ततस्तौ राक्षसौ जातौ केशिन्यां विश्रवः सुतौ । रावणः कुम्भकर्णश्च सर्वलोकप्रतापिनौ ॥४५॥ वैरानुबन्धतीव्रेण ध्यानेनाच्युतसाम्यताम् । नीतौ पुनर्हरेः पार्श्वं जग्मतु-र्विष्णुपार्षदौ ॥ ४८ ॥

## द्वितीयोऽध्यायः

[23-24]विप्रयज्ञादिमूलं तु हरिरित्यासुरं मतम्। हरिरेव हि सर्वस्य मूलं सम्यञ्चतो नृपे'ति ब्राह्मे ॥ २३, २४ ॥ [22]धत्तेऽसा वात्मनो लिङ्गं जीवमनआदीनामाधारं ब्रह्म ॥२२॥ [23-24]लिङ्गवानिव जीव इव। 'असमं समतामेति भ्रान्तिदृष्टचैव केवलम्। जीवेन ब्रह्म न समं तत्त्वदृष्टया कथञ्चने'ति पाङ्गुण्ये ॥ 'यथोदचलनाद्वृक्षप्रतिबिम्ब प्रचालनात्। तटस्थवृक्षचलनं कल्पयेदबुधो नरः। तथा मनसिजै दोषैराभासे दूषिते नरः। आभासिनो ब्रह्मणश्च दोषमज्ञः प्रकल्पयेत्। आत्मनश्चक्षुषो भ्रान्त्या यथा पश्येद्भ्रमं भुवः। तथैव स्वात्मनो दोषा दोषवद्ब्रह्म पश्यती'ति ब्रह्मतर्के ॥ २३, २४ ॥ [26]विवेकस्मृतिः अविवेकिन एव विवेकित्वभ्रान्तिः। 'अन्तर्हिरण्यकादीनां भक्तिरस्त्येव केशवे। असुरावेशतस्त्वन्यान्हरिस्तोवृन्द्विषन्ति चे'ति पाद्मे ॥ २६ ॥ [37]यत्रोद्भवस्तत्र गतं अदर्शनं गतम्। 'अदर्शनादिहायातः पुनश्चादर्शनं गत'इति भारते ॥ ३७ ॥ [41]अन्यतम आत्मा परमात्मा। 'सुविरुद्ध

---

द्वितीयोऽध्यायः

तावद्यात भुवं यूयं ब्रह्मक्षत्रसमेधिताम्। सूदयध्वं तपो यज्ञ स्वाध्यायव्रतदानकान् ॥ १० ॥ विष्णुर्द्विजक्रियामूलो यज्ञो धर्ममयः पुमान्। देवर्षिपितृभूतानां धर्मस्य च परायणम् ॥११॥ नित्य आत्माऽव्ययः शुद्धः सर्ववित्सर्वगः परः। धत्ते वासात्मनो लिङ्गं मायया विसृजन्गुणान् ॥२२॥ यथाम्भसा प्रचलता तरवोऽपि चला इव। चक्षुषा भ्राम्यमाणेन दृश्यते भ्रमतीव भूः ॥ २३ ॥ एवं गुणैर्भ्राम्यमाणे मनस्य विकलः पुमान्। याति तत्साम्यतां भद्रे ह्यलिङ्गो लिङ्गवानिव ॥ २४ ॥ सम्भवश्च विनाशश्च शोकश्च विविधः स्मृतः। अविवेकश्च चिन्ता च विवेकः स्मृतिरेव च ॥ २६ ॥ यम उवाच—अहो अमीषां वयसाधिकानां विपश्यतां लोकविधिं विमोहः। यत्रोद्भवस्तत्र गतं मनुष्यं स्वयं सधर्मा अनुशोचन्त्यपार्थम् ॥३७॥ भूतानि तैस्तैर्निजयोनिकर्मभिर्भवन्ति काले न भवन्ति सर्वशः। न तत्र ह्यात्मा प्रकृतावपि स्थितस्तस्या गुणैरन्यतमो



स्वरूपत्वाजीवादन्यतमो हरिरि'ति वामने ॥४१॥ [43]भगवन्माहात्म्यकथनेन सर्वस्य तद्वशत्वात्स एव भजनीयो न शोकेन प्रयोजनमि'ति फलितार्थः। 'देहदारुगतौ प्राणवह्नी सर्वगतं नभः। देहादिभ्यो यथा भिन्ना न लिप्यन्ते च तद्गुणैः। तथा जीवगतो विष्णुर्जीवाद्भिन्नो न तद्गुणैरि'ति च ॥ ४३ ॥ [44-48]इन्द्रियवान् जीवः। भजत्युत्सृजति अन्यः परमात्मा। स एव श्रोताऽनुवक्ता च। 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता स योऽतोऽश्रुत'इत्यादेः ॥ मुख्यप्राणोऽपि स्वतो न श्रोता किमु जीव इति। अयं ननु सुयज्ञ इत्याक्षेपः। यश्च सुयज्ञः सोऽपि स्वतः श्रोतुं वक्तुं न च शक्तः। अतस्तस्यानुशोकेन किमित्यर्थः। 'अन्यो जीवो चितो देहात्तद्वशो देह उच्यते। पश्यामीत्यभिमानोऽस्य चक्षुराद्यभिमानवान् ॥ न तद्वशाश्चक्षुराद्या न दृष्टचादौ स ईश्वरः। चक्षुराद्या मनो जीवो दृष्टचादिश्चापि यद्वशे ॥ स प्राण इति विज्ञेयो ज्ञाता मन्ता च स प्रभुः। तस्यापि ज्ञातृमन्तृत्वं न स्वतः शक्यते क्वचित् ॥ यस्तस्य ज्ञातृमन्तृत्वदाता स भगवान्हरिः। स्वतो ज्ञाता च मन्ता च द्रष्टा श्रोता च केशवः ॥ ज्ञानादिदो न तस्यान्यः सर्वस्य ज्ञानदो हरिः। स देहान्भजते विष्णुः स्वेच्छयैवोत्सृजत्यपि ॥ यावद्देहस्थितो विष्णुस्तावज्जीवो विपर्ययः। तावत्क्लेशादयश्चास्य वृथा चेन्द्रियवृत्तयः ॥ यदोत्सृजति देहं स हरिः सर्वात्मना विभुः। तदा तदभिमानी तु जीवो मुच्येत संसृतेः ॥ अतिभिन्नस्वरूपौ तौ जीवेशावेकदेहगौ। देहाभिमानी त्वेकोऽत्र न मानी मानदः पर'इति गारुडे। 'इन्द्रियाद्यभिमानेन तद्वान् जीव उदीर्यते। अतन्मानाद्धरिः प्रोक्त-

---

निबध्यते ॥४१॥ यथाऽनलो दारुषु भिन्न ईयते यथाऽनलो देहगतः पृथक् स्थितः। यथा नभः सर्वगतं न सज्जते तथा गुणैः सर्वगुणाश्रयः परः ॥ ४३ ॥ सुयज्ञो नन्वयं शेते मूढा यमनुशोचथ। यः श्रोता योऽनुवक्तेह न स दृश्येत कर्हिचित् ॥ ४४ ॥ वितथाभिनिवेशोऽयं

स्त्वदेहोऽनिन्द्रियस्तथा । जीवानभिमते देहे न विष्णुर्जीवति स्थितः
अतश्चादेह उद्दिष्टः परमात्मा सनातन'इति प्रकाशसंहितायाम् ॥ स चान्य
श्रोतुर्वक्तुश्चेति चशब्दः । भूतेन्द्रियमनोरूपान् । 'लिङ्गं स्वरूपमुद्दि
लिङ्गं ज्ञापकमेवचे'ति शब्दनिर्णये ॥ ४४-४८ ॥ [47]आत्मा परमात्मा
कर्मबन्धनो जीवः । ततः परमात्मनो विपरीतः ॥ ४७ ॥ [48]मृषा
वृथा । स्वप्नदृष्टवित्तादिवत् । 'लेपाभिमानी जीवस्तु स्वरूपानुभवी
च । मुक्तेः प्राक्तेन मान्युक्तो न मानी विष्णुरुच्यते । सर्वं ममेति
पश्यन्नप्यलेपाभिमतिर्यतः । सम्यक्स्वरूपानुभवात्स्वतन्त्रत्वाददोषत' इति
ब्रह्मतर्के ॥ ४८ ॥ '[58]अहंममाभिमानादि त्वयथोत्थमनित्यकम् ।
महदादि यथोत्थं च नित्या चापि यथोत्थिता । अस्वतन्त्रैव प्रकृति
स्वतन्त्रो नित्य एव च । यथार्थभूतश्च पर एक एव जनार्दन' इति
च ॥ ५८ ॥ '[60]क आत्मा कः पर' इति देहाद्यपेक्षया । 'न हि
देहादिरात्मा स्यान्न च शत्रुरुदीरितः । अतो दैहिकवृद्धौ वा क्षये वा
किं प्रयोजनम् । यस्तु देहगतो जीवः स हि नाशं न गच्छति । तत
शत्रुविवृद्धौ वा स्वनाशे शोचनं कुतः । देहादिव्यतिरिक्तौ तु जीवेशौ
प्रतिजानताम् । अत आत्मविवृद्धिस्तु वासुदेवे रतिः स्थिरा । शत्रुनाश
स्तथाऽज्ञाननाशो नान्यः कथञ्चने'ति ब्रह्मवैवर्ते ॥ ६० ॥ इति सप्तम
तात्पर्ये द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः

'[11]जानतामपि कर्तव्यं कर्मात्मसदृशं सदा । तत्रात्मसदृशा

---

यद्गुणेष्वर्थदृग्वचः । यथा मनोरथः स्वप्नः सर्वमैन्द्रियकं मृषा ॥ ४८ ॥
हिरण्यकशिपुरुवाच—बाल एवं प्रवदति सर्वे विस्मितचेतसः । ज्ञातयो
मेनिरे सर्वमनित्यमयथोत्थितम् ॥ ५८ ॥ क आत्मा कः परो वात्र स्वीय
पारक्य एव च । स्वपराभिनिवेशेन विना ज्ञानेन देहिनः ॥ ६० ॥

### तृतीयोऽध्यायः

श्रूयतां किं न विदितं तवाथापि निवेद्यते । दृष्ट्वा चराचरमिदं तपो





ज्ञानाद्रागाद्यैर्वा विमोहिताः । जानन्तोऽपि ह्यसदृशं कर्म कुर्युर्ऋते विभुम् ।
चतुरास्यं स नायोग्यं कर्म कुर्यात्कथञ्चने'ति नारदीये ॥ 'तपसा विद्यया
वापि ज्ञानध्यानादिनाऽथवा । व्यस्तैः समस्तैरपि वा कुर्वतां यत्नमुत्तमम् ।
संहारविक्षेपशतैर्बहुकोटिभिरेव वा । न शक्यन्ते समारोढुं स्वात्मा-
योग्यपदानि तु । तथाप्याचरतां कुर्युर्दैत्यानां सुरनायकाः । विघ्नं तु
तपआदीनां वैयर्थ्यस्यापनुत्तय'इति प्रकाशसंहितायाम् ॥ ११ ॥
[12]वैष्णवादिभिर्ब्रह्मनिर्मितैः । 'ब्रह्मा स्वयम्भूर्द्रुहिणो वैष्णवः शत-
क्रतुरथे'ति शब्दनिर्णये ॥ १२ ॥ '[14]भवाय श्रेयसे चैव न कश्चित्तद-
पेक्षते । मधुकैटभयोश्चैव हिरण्यादेस्तथैव च । नान्यो ब्रह्मपदं वाञ्छ-
त्यृजून्योग्यान्विना क्वचित् । ततः श्रेयांसि वाञ्छन्ति न तु तत्पद-
माप्नुयुरि'ति ब्रह्माण्डे ॥ 'भवो वृद्धिः समुद्दिष्टा श्रेयो मोक्ष उदाहृतः ।
वृद्धस्य न पुनर्ह्रासो भूतिरित्येव कथ्यत'इति शब्दनिर्णये ॥ 'सकामं
तु तपः क्रूरं लोकानां भयकृद्भवेत् । इतरच्छान्तये सर्वलोकानां भवति
ध्रुवमि'ति प्रकाशिकायाम् ॥ 'ब्रह्माणभजद्ब्रह्मपदार्थं स हिरण्यक'-
इति स्कान्दे ॥ १४ ॥ [21]जितः वशीकृतः । 'पराभूतं वशस्थं च

---

योगसमाधिना ॥ ९ ॥ अध्यास्ते सर्वधिष्ण्येभ्यः परमेष्ठी निजासनम् ।
तदहं वर्धमानेन तपो यज्ञसमाधिना ॥ १० ॥ कालात्मनोश्च नित्यत्वा-
त्साधयिष्ये तथाऽऽत्मनः ॥११॥ अन्यथेदं विधास्येऽहमयथापूर्वमोजसा ।
किमन्यैः कलिनिर्धूतैः कल्पान्तैर्वैष्णवादिभिः ॥१२॥ इति शुश्रुम निर्बन्धं
तपः परममास्थितः । विधत्स्वानन्तरं युक्तं स्वयं त्रिभुवनेश्वर ॥ १३ ॥
तवासनं हि जगतां पारमेष्ठ्यं जगत्पते । भवाय श्रेयसे भूत्यै क्षेमाय
विजयाय च ॥ १४ ॥ तपन्तं तपसा लोकान् यथा भावितलं रविम् ।
विलक्ष्य विस्मितः प्राह हसंस्तं हंसवाहनः ॥१७॥ ब्रह्मोवाच—उत्तिष्ठो-
त्तिष्ठ भद्रं ते तपःसिद्धोऽसि काश्यप । वरदोऽहमनुप्राप्तो व्रियतामीप्सितो
वरः ॥ १८ ॥ व्यवसायेन तेऽनेन दुष्करेण मनस्विभिः । तपोनिष्ठेन
भवता जितोऽहं दितिनन्दन ॥ २१ ॥ ततस्त आशिषः सर्वा ददाम्यसुर
पुङ्गव । मर्त्यस्य ते ह्यमर्त्यस्य दर्शनं न च निष्फलम् ॥ २२ ॥ स

जितमित्युच्यते बुधैरि'ति शब्दनिर्णये ॥ २१ ॥ '[27]प्रायस्तु स्तुति-
शब्देषु मिश्रा वाचो हरिं विना । केचिज्जीवगुणास्तत्र तन्नियन्तुर्हरेः
परे । एकस्थानैककार्यत्वाद्विष्णोः प्राधान्यतस्तथा । जीवस्य तदधीन-
त्वान्न भिन्नाधिकृतं वच'इति ब्रह्मतर्के ॥ २७ ॥ [28]त्रिवृता प्रकृत्या ॥
॥ २८ ॥ [30]प्राणेन सह ॥ ३० ॥ [31]सप्ततन्तून्सप्तक्रतून् ॥ ३१ ॥
[32]जीवानां प्राणधारकः ॥ ३२ ॥ '[33]परावरेषु यस्मात्त्वं व्याप्तो विष्णुः
सनातनः । तस्मान्न व्यतिरिक्तं त्वदित्याहुर्वेदवेदिन'इति पाद्मे ।
विद्याश्च कलाश्च विद्याकलाः । 'महाविद्याः कलाश्चैव त्वत्तनावाश्रिता
यतः । विद्यातनुरिति प्राहुरतस्त्वां तत्त्ववेदिन'इति च । त्रिपृष्ठः तुरीयः ।
'ब्रह्मणोऽप्यधिकं विष्णुं जानन्नपि हिरण्यकः । ब्रह्माणं तद्गुणैः स्तौति
तद्वद्विष्णुविवक्षये'ति च ॥३३॥ इति सप्तमतात्पर्ये तृतीयोऽध्यायः ॥३॥

---

निरीक्ष्याम्बरे देवं हंसवाहनमास्थितम् । ननाम शिरसा भूमौ तद्दर्शन
महोत्सवः ॥२५॥ उत्थाय प्राञ्जलिः प्रह्व ईक्षमाणो दृशा विभुम् । हर्षाश्रु
पुलकोद्भेदो गिरा गद्गदयाऽगृणत् ॥२६॥ हिरण्यकशिपुरुवाच—कल्पान्ते
कालसृष्टेन योऽन्धेन तमसाऽऽवृतम् । अभिव्यनक् जगदिदं स्वयं ज्योति
स्वरोचिषा ॥२७॥ आत्मना त्रिवृता चेदं सृजत्यवति लुम्पति । रजः
सत्वतमोधाम्ने पराय महते नमः ॥ २८ ॥ नम आद्याय बीजाय ज्ञान
विज्ञानमूर्तये । प्राणेन्द्रियमनोबुद्धिविकारैर्व्यक्तिमीयुषे ॥२९॥ त्वमीशिषे
जगतस्तस्थुषश्च प्राणेन मुख्येन पतिः प्रजानाम् । चित्तस्य चित्तिर्मन
इन्द्रियाणां पतिर्महाभूतगुणाशयेशः ॥ ३० ॥ त्वं सप्ततन्तून्वितनोषि
तन्वा त्रय्या चतुर्होत्रकविद्यया च । त्वमेक आत्माऽऽत्मवतामनादि
रनन्तपारः कविरव्ययात्मा ॥ ३१ ॥ त्वमेव कालोऽनिमिषो जनाना
मायुर्लवाद्यावयवैः क्षिणोषि । कूटस्थ आत्मा परमेष्ठ्यजो महान् त्वं
जीवलोकस्य च जीव आत्मा ॥ ३२ ॥ त्वत्तः परं नापरमप्यनेजदेज
किञ्चिद्व्यतिरिक्तमस्ति । विद्याकलास्ते तनवश्च सर्वा हिरण्यगर्भोऽसि
बृहत्त्रिपृष्ठः ॥ ३३ ॥



## चतुर्थोऽध्यायः

'[4]स्वतो भक्ता हिरण्याद्याः परावेशाद्धरौ द्विष'इति च ॥ ४ ॥
'[13]आदित्या वसवो रुद्रास्त्रिविधा हि सुरा यतः । मरुतश्चैव विश्वे च
साध्याश्चैव च तद्गताः । अतस्त्रय इति प्रोक्ताश्चत्वारो मानुषाः स्मृता'-
इति स्कान्दे ॥ 'उपायनं ददुः सर्वे विना देवान्हिरण्यक'इति च ।
'अयज्ञभागेष्वपि तु सुरशब्दः प्रदृश्यते । यज्ञभागभुजस्त्वेव त्रय
इत्यभिशब्दिता'इति च ॥ 'यत्र क्व च यशस्थानमन्येषामिति केशवः ।
सर्वत्रापि तु देवानामित्यन्यान्पूजयेत्क्वचिदि'ति च ॥ १३ ॥
'[32-35]अन्येषां हरिसाम्यं तु किञ्चित्साम्यमुदीरितम् । सम्यक्साम्यं तु
मत्स्यादेरिति शास्त्रस्य निर्णय'इति च ॥ ३२-३५ ॥ इति सप्तम-
तात्पर्ये चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः

'[12]स्वातन्त्र्येणान्यसद्भावनिषेधाय श्रुतिस्त्वियम् । अन्योऽसा-

---

## चतुर्थोऽध्यायः

एवं लब्धवरो दैत्यो बिभ्रद्धेममयं वपुः । भगवत्यकरोद्द्वेषं भ्रातुर्वध-
मनुस्मरन् ॥ ४ ॥ तस्मिन् महेन्द्रभवने महाऽसुरो महाबलो निर्जित-
लोक एकराट् । रेमेऽभिवन्द्याङ्घ्रियुगः सुरादिभिः प्रतापितैरूर्जितचण्ड-
शासनः ॥ १२ ॥ तमङ्ग मत्तं मधुनोरुगन्धिना विवृत्तताम्राक्षमशेषधि-
ष्ण्यपाः । उपासतोपायनपाणिभिर्विना त्रिभिस्तपोयोगबलौजसाम्पदम् ॥
॥ १३ ॥ निर्वैराय प्रशान्ताय स्वसुताय महात्मने । प्रह्लादाय यदा द्रुह्ये-
द्धनिष्येऽपि वरोर्जितम् ॥२९॥ आत्मवत्सर्वभूतानामेकः प्रियसुहृत्तमः ।
दासवत्सन्नतार्याङ्घ्रिः पितृवद्दीनवत्सलः ॥ ३२ ॥ यस्मिन् महागुणा
राजन् गृह्यन्ते कविभिर्मुहुः । न तेऽधुनाभिधीयन्ते यथा भगवतीश्वरे ॥
॥ ३५ ॥

## पञ्चमोऽध्यायः

प्रह्लाद उवाच—परः स्वश्चेत्यसद्ग्राहः पुंसां यन्मायया कृतः ।

वन्योऽहमि'तिपश्यन्नज्ञ इति स्म ह। आत्मानमन्तर्यमयेदिति भेदं स्वरूपतः। आह तद्ब्रह्मणोऽधीना भिन्ना जीवाः सदैव तु। स्वरूपसत्ता कर्तृत्वं भोगो मोक्षस्तथैव च। मुक्तस्यावस्थितिश्चैव सर्वं विष्णोर्वशे सदे'ति ब्रह्मतर्के ॥ १२ ॥ [23]आत्मस्थत्वेन वेदनमात्मनिवेदनम्। 'मुक्तस्यापि ममान्तस्थो नियन्तैव हरिः सदा। इति ज्ञानं समुदिष्टं सम्यगात्मनिवेदनमि'ति च ॥ २३ ॥ [28]क्व तदात्ममानो मम ? ॥ ॥ २८ ॥ इति सप्तमतात्पर्ये पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः

'[28]अन्तर्यामी प्रत्यगात्मा व्याप्तः कालो हरिः स्मृत'इति च ॥ ॥ २८ ॥ [29]प्रकृत्या तमसाऽऽवृतत्वाद्धरेरैश्वर्यं न ज्ञायते ॥ २९ ॥ '[30]विष्णोर्गृहत्वाद्भूतेषु दया कार्या विजानते'ति च ॥३०॥ '[31]काङ्क्षतो

विमोहितधियां दृष्टस्तस्मै भगवते नमः ॥ ११ ॥ स यदाऽनुगतः पुंसां पशुबुद्धिर्विभिद्यते। अन्य एष तथान्योऽहमिति देहगता सती ॥ १२ ॥ प्रह्लाद उवाच—श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्। अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ २३ ॥ गुरुपुत्र उवाच—न मत्प्रणीतं न परप्रणीतं सुतो वदत्येष तवेन्द्रशत्रो। नैसर्गिकीयं मतिरस्य राजन् नियच्छ मन्युं क्व तदात्ममानः ॥ २८ ॥

### षष्ठोऽध्यायः

परावरेषु भूतेषु ब्रह्मान्तस्थावरादिषु। भौतिकेषु विकारेषु भूतेष्वथ महत्सु च ॥ २६ ॥ गुणेषु गुणसाम्ये च गुणव्यतिकरे तथा। एक एव परो ह्यात्मा भगवान् ईश्वरोऽव्ययः ॥२७॥ प्रत्यगात्मस्वरूपेण कालरूपेण च स्वयम्। व्याप्यव्यापकनिर्देश्यो ह्यनिर्देश्यो विकल्पितः ॥ २८ ॥ केवलानुभवानन्दस्वरूपः परमेश्वरः। माययान्तर्हितैश्वर्य ईड्यते गुणसर्गया ॥ २९ ॥ तस्मात् सर्वेषु भूतेषु दयां कुरुत सौहृदम्। भावमासुरमुन्मुच्य यया तुष्यत्यधोक्षजः ॥ ३० ॥ तुष्टे च तत्र किमलभ्यमनन्त



मोक्षगमपि सुखं नाकाङ्क्षतो यथे'ति च ॥ ३१ ॥ इति सप्तमतात्पर्ये षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः

'[18]षड्विकाराः शरीरस्य न विष्णोस्तद्गतस्य तु। तदधीनं शरीरं च ज्ञात्वा तन्ममतां त्यजेदि'ति च ॥ १८ ॥ [19]हेतुत्वाद्विष्ण्वधीनत्वं शरीरस्य ॥१९॥ '[23]अभिमान्यपेक्षया विष्णुः पञ्चविंश इति स्मृतः। जडव्यपेक्षया जीवः सम्यग्ज्ञेयो हरिः स्मृत'इति च ॥ २३ ॥ [25]बुद्धेर्जीवस्य। 'सत्वबुद्ध्यादिशब्दैस्तु जीवोऽपि क्वचिदीर्यते। जागृ(ग्र)दाद्याः कर्म चैव सुखदुःखे च तस्य हि। जागृ(ग्र)दादेः परो द्रष्टा सुखनिष्ठो हरिः स्मृतः ॥ २५ ॥ '[26]स जीवेन सह स्थानात्तत्स्वरूपः प्रदृश्यते। अज्ञदृष्ट्या न ज्ञदृष्ट्या यथा गन्धयुतोऽनिलः ॥ २६ ॥ '[27]अदृष्टेर्जीवपरयोर्भेदस्याप्नोति संसृतिम्। अभेदनिश्चयाद्याति तमो नास्त्यत्र संशय' इति च ॥ २७ ॥ [26]बुद्धिभेदैर्जीवानां तारतम्यज्ञापकैः ॥ २६ ॥ '[27]दुःखरूपोऽपि संसारो बुद्धिपूर्वमवाप्यते। यथा स्वप्ने शिरश्छेदं

आद्ये किं तैर्गुणव्यतिकरैरिह येऽनुसिद्धाः। धर्मादिभिः किमगुणेन च काङ्क्षितेन सारं जुषां चरणयोरुपगायतां नः ॥ ३१ ॥

### सप्तमोऽध्यायः

जन्माद्याः षडिमे भावा दृष्टा देहस्य नात्मनः। फलानामिव वृक्षस्य कालेनेश्वरमूर्तिना ॥ १८ ॥ आत्मा नित्योऽव्ययः शुद्ध एकः क्षेत्रज्ञ आश्रयः। अविक्रियः स्वदृग्वश्यो व्यापकोऽसङ्ग्यनावृतः ॥ १९ ॥ अष्टौ प्रकृतयः प्रोक्तास्त्रय एव हि तद्गुणाः। विकाराः षोडशाचार्यैः पुमानेकः समन्वयात् ॥२२॥ देहस्तु सर्वसङ्घातो जगत्तस्थुरिति द्विधा। अत्रैव मृग्यः पुरुषो नेति नेतीत्यतत्त्यजन् ॥ २३ ॥ बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति वृत्तयः। ता येनैवानुभूयन्ते सोऽध्यक्षः पुरुषः परः ॥२५॥ एभिस्त्रिवर्णैः पर्यस्तैर्बुद्धिभेदैः क्रियोद्भवैः। स्वरूपमात्मनो धत्ते गन्धैर्वायुरिवान्वयात् ॥२६॥ एतद्द्वारो हि संसारो गुणकर्मनिबन्धनः। अज्ञान-

स्वयं कृत्वाऽऽत्मनो वशः । ततो दुःखमवाप्येत तथा जागरितेऽपि तु । जानन्नप्यात्मनो दुःखमवशस्तु प्रवर्तत'इति च ॥ २७ ॥ [30]धियः प्रवाहस्योपरमः परमेश्वरे रमणम् ॥ ३० ॥ [38]तद्भावभावः । तद्यथा-स्वरूपम् भक्तिः ॥ ३८ ॥ '[36]केचिद्भक्ता विनृत्यन्ति गायन्ति च यथेप्सितम् । केचित्तूष्णीं जपन्त्येव केचिच्चोभयकारिण'इति च ॥३६॥ [39]ब्रह्मनिर्वाणसुखं ब्रह्मनिमित्तनिर्वाणसुखम् ॥ ३९ ॥ [40]अशेषदेहिनां सामान्यतो हृदिस्थत्वेन ॥ ४० ॥ '[44]अप्रयासेन करणमनीहा प्रोच्यते बुधैरि'ति च ॥ ४४ ॥ '[51]व्यञ्जनाज्जगतो विष्णुर्बीजं न परिणामत' इति च ॥ ५१ ॥ [56]अच्युततां च्युतिवर्जनम् ॥ ५६ ॥ इति सप्तमतात्पर्ये सप्तमोऽध्यायः ॥ ७ ॥

---

मूलोऽपार्थोऽपि पुंसः स्वप्न इवाप्यते ॥ २७ ॥ तस्मात् भवद्भिः कर्तव्यं कर्मणां त्रिगुणात्मनाम् । बीजनिर्हरणे योगः प्रवाहो परमो धियः ॥३०॥ निशम्य कर्माणि गुणानतुल्यान्वीर्याणि लीलातनुभिः कृतानि । यदाऽति हर्षोत्पुलकाश्रुगद्गदः प्रोत्कण्ठ उद्गायति रौति नृत्यति ॥ ३६ ॥ यदा ग्रहग्रस्त इव क्वचिद्धसत्याक्रन्दते ध्यायति वन्दते जनम् । मुहुः श्वसन् वक्ति हरे जगत्पते नारायणेत्यात्मगतिर्गतत्रपः ॥ ३७ ॥ तदा पुमान् मुक्तसमस्तबन्धनस्तद्भावभावानुकृताशयाकृतिः । निर्दग्धबीजानुशयो महीयसा भक्तिप्रयोगेण समेत्यधोक्षजम् ॥ ३८ ॥ अधोक्षजालापमिहाशुभात्मनः शरीरिणः संसृतिचक्रशातनम् । तद्ब्रह्म निर्वाणसुखं विदुर्बुधास्ततो भजध्वं हृदये हृदीश्वरम् ॥ ३९ ॥ कोऽतिप्रयासोऽसुरबालका हरेरुपासने स्वे हृदि छिद्रवत्सतः । स्वस्यात्मनः सख्युरशेषदेहिनां सामान्यतः किं विषयोपपादनैः ॥ ४० ॥ सुखाय दुःखमोक्षाय सङ्कल्प इह कर्मणः । सदाऽऽप्नोतीह या दुःखमनीहायां सुखोन्नतिम् ॥४४॥ सर्वेषामपि भूतानां हरिरात्मेश्वरः प्रियः । भूतैर्महद्भिः स्वकृतैः कृतानां बीजसंज्ञितः ॥५१॥ दैतेया यक्षरक्षांसि स्त्रियः शूद्रा व्रजौकसः । खगा मृगाः पापजीवाः सन्ति ह्यच्युततां गताः ॥ ५६ ॥



## अष्टमोऽध्यायः

[44]तद्विप्रलुप्तमिति सादृश्याभेदवचनम् । आलोचनमेव तपः । 'यस्य ज्ञानमयं तप'इति श्रुतेः ॥४४॥ [51]नटनं तु कथाबन्धो नाट्यकं भावदर्शनमि'ति गान्धर्वे ॥ ५१ ॥ इति सप्तमतात्पर्ये अष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः

'[2]अदृष्टाश्रुतपूर्वत्वादन्यैः साधारणैर्जनैः । नृसिंहं शङ्कितेव श्रीर्लोकमोहाय नो ययौ ॥ २ ॥ '[3]प्रह्लादे चैव वात्सल्यदर्शनाय हरेरपि । ज्ञात्वा मनस्तथा ब्रह्मा प्रह्लादं प्रेषयत्तदा । एकत्रैकस्य वात्सल्यं विशेषाद्दर्शयेद्धरिः । अवरस्यापि मोहाय क्रमेणैवापि वत्सल'-इति ब्रह्माण्डे ॥ ३ ॥ [10]द्विषड्गुणयुतात् । 'ज्ञानं च सत्यं च दमः शमश्च ह्यमात्सर्यं ह्रीस्तितिक्षाऽनसूया । दानं च यज्ञश्च तपः श्रुतं च महाव्रता द्वादश ब्राह्मणस्ये'ति भारते ॥ १० ॥ [20]कर्तृकर्मक्रियादीनां

---

### अष्टमोऽध्यायः

ऋषय ऊचुः—त्वं नस्तपः परममात्थ यदात्मतेजो येनेदमादिपुरुषात्मगतं ससर्ज । तद्विप्रलुप्तममुनाद्यशरण्यपाल रक्षागृहीतवपुषा पुनरन्वमंस्थाः ॥ ४४ ॥ गन्धर्वा ऊचुः—वयं विभो ते नटनाट्यगायका येनात्मसाद्वीर्यबलौजसा कृताः । स एष नीतो भवता दशामिमां किमुत्पथस्थः कुशलाय कल्पते ॥ ५१ ॥

### नवमोऽध्यायः

साक्षाच्छ्रीः प्रेषिता देवैर्दृष्ट्वा तन्महदद्भुतम् । अदृष्टाश्रुतपूर्वत्वात्सा नोपेयाय शङ्किता ॥ २ ॥ प्रह्लादं प्रेषयामास ब्रह्माऽवस्थितमन्तिके । तात प्रशमयोपेहि स्वपित्रे कुपितं प्रभुम् ॥ ३ ॥ विप्राद्द्विषड्गुणयुतादरविन्दनाभपादारविन्दविमुखाच्छ्वपचं वरिष्ठम् । मन्ये तदर्पितमनोवचनात्मगेहप्राणः पुनाति सकलं न तु भूरिमानः ॥ १० ॥ यस्मिन् यतो

सत्ताद्वृत्तिस्तथैव च । विष्ण्वधीनं यतः सर्वं सर्वरूपस्तदुच्यत'इति ब्रह्म तर्के ॥ २० ॥ [21]दशेन्द्रियप्राणमनोऽरम् । मूलं मन एव संसार चक्रस्य ॥ २१ ॥ [26]रमादीनामिदानीं नार्पितः ॥२६॥ [27]रमादीना मधिकोदयोऽपि सेवाधिकत्वादेव ॥ २७ ॥ '[26-27]श्रीब्रह्मब्राह्मी वीन्द्रादित्रिकतत्स्त्रीपुरुष्टुताः । तदन्ये च क्रमादेव सदा मुक्तौ सृता वपि । हरिभक्तौ च तज्ज्ञाने सुखे च नियमेन तु । परतः स्वत कर्मतो वा न कथञ्चित्तदन्यथे'ति ब्रह्मतर्के ॥ २६-२७ ॥ [31]यथा वृक्षश्च वृक्षदाहश्च दैवकालाधीनत्वाद्दैवं कालश्चेत्युच्यते एवं त्वदधीनत्वा त्सर्वस्य सर्वं त्वमित्युच्यसे, स्वतस्तद्भिन्नोऽपि ॥ अहं चान्यश्च परमेश्व एवेत्यपार्था भ्रान्तिः । तदधीनत्वादेव स इत्युच्यते । न स्वरूपत्वा दित्यर्थः ॥ ३१ ॥ [32]तुर्यस्थितः ॥ ३२ ॥ [33]जगदात्मकमब्जमपि भगवद्वशत्वात्तद्वपुः । स्थावराणां तु सर्वेषां देवता याऽभिमानिनी । विशेषाद्वटबीजे च साऽश्वत्थे च व्यवस्थिता ॥ अदृश्या कणिका नाम

---

यर्हि च येन यस्य यस्मै यथायमुत यस्त्वपरः परो वा । भावं करोति विकरोति पृथक् स्वभावः सञ्चोदितस्तदखिलं भवतः स्वरूपम् ॥ २० ॥ मायामनः सृजति कर्ममयं बलीयः कालेन चोदितगुणानुमतेन पुंसः । छन्दोमयं यदजयाऽर्पितषोडशारं संसारचक्रमज कोऽतितरेत्त्वदन्यः ॥२१॥ काऽहं रजः प्रभव ईश तमोऽधिकेऽस्मिन् जातः सुरेतरकुले क्व तवानु कम्पा । न ब्रह्मणो न तु भवस्य न वै रमाया यन्मेऽर्पितः शिरसि पद्मकर प्रसादः ॥ २६ ॥ नैषा परावरमतिर्भवतो ननु स्याज्जन्तोर्यथात्मसुहृदो जगतस्तथापि । संसेवया सुरतरोरिव ते प्रसादः सेवानुरूप उदयो न परावरत्वम् ॥२७॥ त्वं वा इदं सदसदीश भवांस्ततोऽन्यो माया यदात्म परबुद्धिरियं ह्यपार्था । यद्यस्य जन्मनिधनं स्थितिरीक्षणं च तद्वै तदेव खलु कालवदुष्टितर्वोः ॥ ३१ ॥ न्यस्येदमात्मनि जगद्विलयाम्बुमध्ये शेषासनो निजसुखानुभवो निरीहः । योगेन मीलितदृगात्मनि नीत निद्रस्तुर्यस्थितो ननु तमोऽनुगुणांश्च युङ्क्ते ॥ ३२ ॥ तस्यैव ते वपुरिदं निजकाल शक्त्या सञ्चोदितं प्रकृतिधर्मिणि आत्मगूढम् । अम्भस्यनन्त





…सा वृक्षान्व्यञ्जयत्यपि । अतो बीजमिति प्रोक्ता सा जातेऽप्यङ्कुरे स्थिता ॥ एवं हरिः कारणेषु स्थितः कार्यजनेरनु । कार्याण्यनुप्रविष्टः सन् प्रथमं …त्र दृश्यत'इति च ॥ ३३ ॥ [36]मायामयं ज्ञानस्वरूपम् । सदुप-लक्षणसन्निवेशं आनन्दादिलक्षणसमुदायरूपम् ॥ ३६ ॥ '[35]गन्धाख्या देवता यद्वत्पृथिवीं व्याप्य तिष्ठति । एवं व्याप्तं जगद्विष्णुं ब्रह्माऽऽत्मस्थं ददर्श हे'ति च ॥ ३५ ॥ [44]प्रायेण देवमुनयः । 'आश्रितेषु कृपा कार्या विशेषात्तात्त्विकैः सुरैः । मुनिभिश्च तथा कैश्चित्कैश्चित्कार्याऽ-खिलेष्वपि । तथापि तात्त्विकसुरकृपाविषयतां गताः । एत एव विमुच्यन्ते तदन्ये न कथञ्चने'ति च ॥ ४४ ॥ [47]कार्यकारणरूपे तद्वशत्वापेक्षया साक्षात्स्वरूपापेक्षया स्वरूपादन्यद्रूपं न ॥ ४७ ॥ इति …मतात्पर्ये नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः

[19]जन्मान्तरपितृभिस्त्रिसप्तभिः ॥ १९ ॥ '[22]ऋते तु तात्त्विका-

---

…यनाद्विरमत्समाधेर्नाभेरभूत्स्वकणिकावटवन्महाब्जम् ॥३३॥ तत्सम्भवः कविरतोऽन्यदपश्यमानस्त्वां बीजमात्मनि ततं स बहिर्विचिन्त्य । नाविन्ददब्दशतमप्सु निमज्जमानो जातेऽङ्कुरे कथमिहोपलभेत बीजम् ॥ ॥ ३४ ॥ स त्वात्मयोनिरतिविस्मित आश्रितोऽब्जं कालेन तीव्रतपसा परिशुद्धभावः । त्वामात्मनीश भुवि गन्धमिवातिसूक्ष्मं भूतेन्द्रियाशयमये विततं ददर्श ॥३५॥ एवं सहस्रवदनाङ्घ्रिशिरःकरोरुनासास्यकर्णनयना-भरणायुधाढ्यम् । मायामयं सदुपलक्षणसन्निवेशं दृष्ट्वा महापुरुषमाप मुदं विरिञ्चः ॥ ३६ ॥ प्रायेण देवमुनयः स्वविमुक्तिकामा मौनं चरन्ति विजनेन परार्थनिष्ठाः । नैतद्विहाय कृपणान्विमुमुक्ष एको नान्यं त्वदस्य शरणं भ्रमतोऽनुपश्ये ॥४४॥ रूपे इमे सदसती तव वेददृष्टे बीजाङ्कुराविव न चान्यदरूपकस्य । युक्ताः समक्षमुभयत्र विचिन्वते त्वां योगेन वह्निमिव दारुषु नान्यतः स्यात् ॥ ४७ ॥

### दशमोऽध्यायः

श्री भगवान् उवाच—त्रिसप्तभिः पिता पूतः पितृभिः सह तेऽनघ । यत्साधोऽस्य कुले जातो भवान् वै कुलपावनः ॥ १९ ॥ भवन्ति पूरुषा

न्देवान्नारदादींस्तथैव च । प्रह्लादादुत्तमः को नु विष्णुभक्तौ जगत्त्रय'
इति स्कान्दे ॥ २२ ॥ [29]मधुकैटभौ भक्त्यभावादूरौ भगवतो मृतौ ।
तम एव क्रमादाप्तौ भक्त्या चैद्यो हरिं ययौ ॥ २३ ॥ '[31]यथा
हिरण्यकस्यादादन्तःस्थितहरीरितः । तथा नादात्तदन्यस्य ब्रह्मा दैत्यस्य
कस्यचिदि'ति च ॥ ३१ ॥ '[40]पौण्ड्रके नरके चैव साल्वे कंसे च
रुग्मिणि । आविष्टास्तु हरेर्भक्तास्तद्भक्त्या हरिमापिरे । असुरास्तु
स्वयं ते तु महातमसि पातिता'इति च । तदात्मानस्तत्राविष्टास्तद्भक्ताः ।
वैरोपसर्जनेनानुबन्धेनेत्यन्वयः ॥ ४० ॥ [46]भगवान्येन गम्यत इत्यनेन
भागवतधर्मेणैव भगवान् गम्यते न द्वेषादिनेत्युपसंह्रियते ॥ वृत्तानुकथनं
च तदर्थत्वेनैव । ज्ञानस्य विशेषा याथात्म्यादयः । 'भक्तिर्ज्ञानं
विरक्तिश्च नवकः श्रवणादिकः । धर्मो भागवतः प्रोक्तस्तद्भक्तेषु तथा
नवे'ति तन्त्रसारे ॥ ४६ ॥ [50]निर्वाणसुखं अशरीरसुखम् । 'एतद्ब्राण-
मवष्टभ्ये'ति श्रुतेः ॥५०॥ इति सप्तमतात्पर्ये दशमोऽध्यायः ॥१०॥

## एकादशोऽध्यायः

[1]तदधीनं वा सर्वं न वेति संशयं रुद्रस्याहनत् । अल्पकेनैव

---

लोके मद्भक्तास्त्वामनुव्रताः । भवान् मे खलु भक्तानां सर्वेषां प्रतिरूपधृक् ॥ २२ ॥ कुरु ते प्रेतकार्याणि पितुः पूतस्य सर्वशः । मदङ्गस्पर्शनेनाङ्ग लोकान् यास्यति सुप्रजाः ॥ २३ ॥ श्री भगवान् उवाच—मैवं विभोऽसुराणां ते प्रदेयः पद्मसम्भव । वरः क्रूरनिसर्गाणामहीनाममृतं यथा ॥ ॥३१॥ एनः पूर्वकृतं यत्तद्राजानः कृष्णवैरिणः । जहुस्ते ते तदात्मानः कीटाः पेशस्कृतो यथा ॥४०॥ एषा ब्रह्मण्यदेवस्य कृष्णस्य च महात्मनः । अवतारकथा पुण्या वधो यत्रादिदैत्ययोः ॥ ४३ ॥ धर्मो भागवतानां च भगवान् येन गम्यते । आख्यानेऽस्मिन् समाख्यातमाध्यात्मिकमशेषतः ॥ ॥४६॥ स वा अयं ब्रह्म महद्विमृग्यं कैवल्यनिर्वाणसुखानुभूतिः । प्रियः सुहृद्वः खलु मातुलेय आत्माऽर्हणीयो विधिकृद्गुरुश्च ॥ ५० ॥

एकादशोऽध्यायः

नारद उवाच—स एष भगवान् राजन् व्यतनोद्विततं यशः । पुरा



मयेन रुद्रस्य प्रतीकारं कृत्वा ॥ १ ॥ [2]कस्मिन्कर्मणि मयो विपरीतं
चकार ॥ २ ॥ '[3]सापेक्षं न तु दोषाय यत्र सिद्धमपेक्षितमि'ति
शब्दनिर्णये ॥ ३ ॥ [14]विष्णुनाऽऽदिष्टं व्यपोहितुं देवोऽसुरोऽन्यो वा
न समर्थः ॥ १४ ॥ इति सप्तमतात्पर्ये एकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः

[11]अनाद्यनन्तकालेषु मुक्तौ संसार एव च । मयिस्थश्चोदयत्येको
विष्णुर्मां सर्वदैव तु । इति सम्प्रीतिकं ज्ञानं विद्यादात्मसमर्पणम् ।
बहिस्थेश्वरदासत्वं दास्यमित्युच्यते बुधैरि'ति तन्त्रमालायाम् ॥ ११ ॥
'[30]हरिरस्मिंस्थित इति स्त्रीणां भर्तरि भावना ॥ शिष्याणां च गुरौ
नित्यं शूद्राणां ब्राह्मणादिषु । भृत्यानां स्वामिनि तथा हरिभाव
उदीरित'इति च ॥ ३० ॥ इति सप्तमतात्पर्ये द्वादशोऽध्यायः ॥१२॥

## त्रयोदशोऽध्यायः

'[10]बहुत्वेनैव वस्तूनां यथार्थज्ञानमुच्यते । अद्वैतज्ञानमित्येत-
द्वैतज्ञानं तदन्यथा । यथाज्ञानं तथा वस्तु यथावस्तु तथा मतिः ॥

---

रुद्रस्य देवस्य मयेनानन्तमायिना ॥ १ ॥ राजोवाच—कस्मिन् कर्मणि देवस्य यशोऽभूज्जगदीशितुः । यथा चोपचिता कीर्तिः कृष्णेनानेन कथ्यताम् ॥ २ ॥ नारद उवाच—निर्जिता असुरा देवैर्युध्यनेनोपबृंहितैः । मायिनां परमाचार्यं मयं शरणमाययुः ॥ ३ ॥ देवोऽसुरो नरोऽन्यो वा नेश्वरोऽस्तीह कश्चन । आत्मनोऽन्यस्य वाऽऽदिष्टं दैवेनापोहितुं द्वयोः ॥ ॥ १४ ॥

द्वादशोऽध्यायः

श्रवणं कीर्तनं चास्य स्मरणं महतां गतेः । सेवेज्याऽवनतिः सख्यं दास्यमात्मसमर्पणम् ॥ ११ ॥ या पतिं हरिभावेन भजेच्छ्रीरिव तत्परा । हर्यात्मना हरेर्लोके पत्या श्रीरिव मोदते ॥ ३० ॥

त्रयोदशोऽध्यायः

कल्पयेदात्मनो यावदाभासमिदमीश्वरः । द्वैतं तावन्न विरमेत्ततो

नैव ज्ञानार्थयोर्भेदस्तत एकत्ववेदनमि'ति च ॥ १० ॥ '[14]गुरोराज्ञानुरोधेन दूरस्थो वा गृही भवेदि'ति च ॥ १४ ॥ '[15]अप्रविष्टः सर्वगतः प्रविष्टस्त्वनुरूपवान् । एवं द्विरूपो भगवान्हरिरेको जनार्दन' इति च ॥ ॥ १५ ॥ '[24]कार्यस्य कारणलयज्ञानमात्रं विलापनमि'मि च ॥२४॥ [28]परः कविर्बृहस्पतिः ॥ २८ ॥ '[29]चित्तं हिरण्यगर्भे तु विलाप्य परमात्मनि । क्षेत्रज्ञाख्ये लापयेच्च ततो नान्यत्स्मरेद्बुध'इति च ॥२९॥ [31]आत्मानं परमात्मानम् । अद्वयः ततोऽन्यस्मृतिवर्जितः । दग्धयोनिर्यथानलइति कृत्याभावमात्रम् । 'न हरिं स्मरतः कृत्यं दग्धेन्धनहुताशवदि'ति च ॥३१॥ इति सप्तमतात्पर्ये त्रयोदशोऽध्यायः ॥१३॥

## चतुर्दशोऽध्यायः

[4]आत्मनि परमात्मनि ॥ ४ ॥ [7]अप्रयोजनपक्षं न संश्रयेत् । 'नाप्रयोजनपक्षी स्यान्न वृथा शिष्यबन्धकृत् । न चोदासीनशास्त्राणि

---

ह्यस्य विपर्ययः ॥१०॥ एतच्चान्यद्गृहस्थस्य समाम्नातं यतेरपि । गुरुवृत्तिर्विकल्पेन गृहस्थस्यर्तुगामिनः ॥ ११ ॥ दत्त्वा वरमनुज्ञातो गुरोः कामं यदीश्वरः । गृहं वनं वा प्रविशेत्प्रव्रजेत्तत्र वा वसेत् ॥ १३ ॥ अग्नौ गुरावात्मनि च सर्वभूतेष्वधोक्षजम् । भूतैः स्वधामभिः पश्येदप्रविष्टं प्रविष्टवत् ॥ १५ ॥ आत्मन्यग्नीन् समारोप्य संन्यस्याहं ममात्मताम् । कारणेषु न्यसेत् सम्यक् सङ्घातं तु यथार्हतः ॥ २४ ॥ अप्सु प्रवेशयेज्जिह्वाङ्कृयैर्घ्राणं क्षितौ न्यसेत् । मनोमनोरथैश्चन्द्रे बुद्धिं बोध्यैः कवौ परे ॥ २८ ॥ कर्माण्यध्यात्मना रुद्रे यदहंसम्मताः क्रियाः । सत्त्वेन चित्तं क्षेत्रज्ञे गुणैर्वैकारिकं परे ॥ २९ ॥ इत्यक्षरतयात्मानं चिन्मात्रमवशेषितम् । ज्ञात्वा द्वयोथ विरमेद्दग्धयोनिरिवानलः ॥ ३१ ॥

### चतुर्दशोऽध्यायः

एक एव चरेद्भिक्षुः आत्मारामोऽनपाश्रयः । सर्वभूतसुहृच्छान्तो नारायणपरायणः ॥ ३ ॥ पश्येदात्मन्यदो विश्वं परे सदसतोऽव्यये । आत्मानं च परं ब्रह्म सर्वत्र सदसन्मये ॥ ४ ॥ नासच्छास्त्रेषु सज्जेत नोपजीवेत जीविकाम् । अतिवादांस्त्यजेत्तर्कान् पक्षं कञ्चिन्नसंश्रयेत् ॥७॥



न विरुद्धानि चाभ्यसेत् ॥ ७ ॥ '[8]न व्याख्ययोपजीवेत न निषिद्धान्समाचरेत् । एवं भूतो यतिर्याति तदेकशरणो हरिमि'ति समाचारे ॥ ॥८॥ [44]चित्ते मनोवृत्त्यभिमानिनि । अर्थविभ्रमे अर्थेषु भ्रममाणे । 'चित्ताख्याग्नेरधीनं हि जगदेतद्विचिन्तयेत् । मनोनामेन्द्रवशगमग्निं च प्रविचिन्तयेदि'त्यादि च ॥ ४४ ॥ '[46]अशास्त्रीयत्वान्मुखतः शास्त्रापेतमिदं विदुः । शास्त्रनिर्णयगम्यत्वाच्छास्त्रीयमभिधीयत'इति च ॥ ॥ ४६ ॥ इति सप्तमतात्पर्ये चतुर्दशोऽध्यायः ॥ १४ ॥

## पञ्चदशोऽध्यायः

[14]नभश्छदिः नभोव्याप्यस्थितः परमात्मा ॥१४॥ [22]सप्तम्यादित्रयं चैव तथा चैत्र(व)त्रयोदशी । चतस्रस्त्वष्टकाः प्रोक्ताः सर्वपक्षाद्विशेषत'इति च व्यासस्मृतौ ॥ हेमन्ते शिशिरे चैव नित्यश्राद्धं गुणोत्तरमि'ति च ॥ जीवेन रूपेण सह ॥२२॥ '[39]ब्रह्मादिस्थावरान्तेषु न विशेषो हरेः क्वचित् । व्यक्तिमात्रविशेषेण तारतम्यं वदन्ति चे'ति ॥

---

न शिष्याननुबध्नीत ग्रन्थान्नैवाभ्यसेद्बहून् । न व्याख्यामुपजीवेत नारम्भानारभेत्क्वचित् ॥८॥ विकल्पं जुहुयाच्चित्ते तन्मनस्यर्थविभ्रमे । मनो वैकारिके हुत्वा मायायां वै जुहोत्यमुम् ॥ ४४ ॥ स्वात्मवृत्तं मयेत्थं ते सुगुप्तमनुवर्णितम् । व्यपेतं लोकशास्त्राभ्यां भवान् हि भगवत्प्रियः ॥ ॥ ४६ ॥

### पञ्चदशोऽध्यायः

कृमिविड्भस्मनिष्ठान्तं क्वेदं तुच्छं कलेवरम् । क्व तदीयरतिर्भार्या क्वायमात्मा नभश्छदिः ॥१४॥ तृतीयायां शुक्लपक्षे नवम्यामथ कार्तिके । चतसृष्वप्यष्टकासु हेमन्ते शिशिरे तथा ॥ २२ ॥ पुराण्यनेन सृष्टानि नृतिर्यगृषिदेवताः । शेते जीवेन रूपेण पुरेषु पुरुषो ह्यसौ ॥३८॥ तेष्वीशो भगवान् राजंस्तारतम्येन वर्तते । तस्मात्पात्रं हि पुरुषो यावानात्मा

॥ ३९ ॥ '[42]शिलावत्प्रतिमाः सन्तो विप्राद्याश्च हरेः स्मृता'इति च ॥ ४२ ॥ इति सप्तमतात्पर्ये पञ्चदशोऽध्यायः ॥ १५ ॥

## षोडशोऽध्यायः

'[52]यज्ञाभिमानिनो देवान्स्मरन्तीन्द्रियमानिनाम् । वशगांस्तान्मनोमानिसुरेन्द्रस्य वशे स्थितान् । वेदात्मिकायाः पार्वत्यास्तां रुद्रस्य वशे स्थिताम् । वर्णत्रयात्मकं रुद्रं शेषे तु प्रणवात्मके । बिन्दुरूपसरस्वत्यां तं तां तस्यां पुनर्न्यसेत् । मूलस्थानादरूपायां तां वायौ तं जनार्दने । प्रकृतावथवा प्राणं तामेव पुरुषोत्तम'इति ब्रह्मतर्के ॥ ५२ ॥ [54]स्वराडिन्द्रः ॥५४॥ '[55]विश्वाद्या अनिरुद्धाद्यास्ते द्विधा सम्प्रकीर्तिताः । विष्णुरूपास्तदन्ये च तान्सर्वान्याति मोक्षगः । तदन्ये च दिवस्पुत्राः सर्वे च द्युसमीपगाः । ते दिवं प्रापयन्त्येनं सा वायुं स हरिं पृथक् । विश्वादिरूपं तुर्यं च वासुदेवश्च नापर'इति च । अधिको भूत्वा सुखादिभिः ॥ ५५ ॥ '[56]भक्तिमान्मार्गविन्नैव नीचां गतिमवाप्नुयादि'ति च ॥ ५६ ॥ [57]ग्लापकत्वात्तमः ॥ ५७ ॥ [58]दुर्घटत्वादर्थत्वेन

---

यथेयते ॥ ३९ ॥ पुरुषेष्वपि राजेन्द्र सुपात्रं ब्राह्मणं विदुः । तपसा विद्यया तुष्ट्या धत्ते वेदं हरेस्तनुम् ॥ ४२ ॥

षोडशोऽध्यायः

निषेकादि श्मशानान्तैः संस्कारैः संस्कृतो द्विजः । इन्द्रियेषु क्रिया यज्ञान् ज्ञानदीपेषु जुह्वति ॥ ५२ ॥ ओङ्कारं बिन्दुनादे तु तं तु प्राणे महत्यमुम् । अग्निः सूर्यो दिवा वायुः शुक्लो राकोत्तरः स्वराट् ॥५४॥ विश्वोऽथ तैजसः प्राज्ञस्तुर्य आत्मा समन्वयः । देवयानमिदं प्राहुर्भूत्वा भूत्वानुपूर्वशः ॥ ५५ ॥ आत्मयाज्युपशान्तात्मा ह्यात्मस्थो न निवर्तते । य एते पितृदेवानामयने देवनिर्मिते । शास्त्रेण चक्षुषा वेद जनस्थोऽपि न मुह्यति ॥ ५६ ॥ आदावन्ते जना नाशं बहिरन्तः परावरम् । ज्ञानं ज्ञेयं वचो वाच्य तमो ज्यातिश्च सत्स्वयम् ॥ ५७ ॥ अबाधितोपि ह्याभासो यथा वस्तुतया स्मृतः । दुर्घटत्वादैन्द्रियके



परमेश्वरेणैव कल्पितम् ॥ ५८ ॥ '[59]छाया रीतिः प्रकारश्च भावश्चेत्यभिधीयत'इति शब्दनिर्णये । क्षित्यादीनां पदार्थानां कतमोऽपि प्रकारो न घटते । परमेश्वरकल्पितत्वात्कार्यमित्येव वक्तुं युक्तम् । न अपां सङ्घातमात्रं पृथिवी । न च विकारमात्रम् । न हि कालुष्यादिविकारमात्रेण पृथिवी भवति । न चाद्भ्यः पृथक्स्थितिः । न च वस्तुद्वयवत्सहावस्थानमात्रम् ॥ ५९ ॥ [60]एवमवयवावयविनोरपि ॥६०॥ [61]न च सादृश्यमात्रम् ॥ वस्तुभेदे हि तद्युज्यते । तस्मात्स्वप्न एव । जाग्रत्स्वप्नौ यथा विशेषतो दृश्येते तथा पृथिव्यबादिविशेषो दुर्घटोऽपीश्वरकल्पनयैवासौ दृश्यते । 'कार्यकारणवस्तूनां विशेषो न निरूपितः । तथापीशेच्छयैवासौ दृश्यते नियतोऽपि चे'ति च ॥ ६१ ॥ [69]अतीतमहाकल्पे अतीतब्रह्मकल्पे । 'ब्रह्मकालः परश्चेति महाकल्पश्च कीर्तित'-इति च ॥ ६९ ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भागवतसप्तमस्कन्धतात्पर्ये षोडशोऽध्यायः ॥ १६ ॥ समाप्तश्चायं-स्कन्धः ॥

---

तद्वदर्थविकल्पितम् ॥ ५८ ॥ क्षित्यादीनामिहार्थानां छाया न कतमापि हि । न सङ्घातो विकारोऽपि न पृथङ्नान्वितोऽपि वा ॥ ५९ ॥ धातवोऽवयवित्वाच्च तन्मात्रावयवैर्विना । न स्युर्ह्यसत्यवयविन्यासन्नावयवा इव ॥ ६० ॥ स्यात्सादृश्यभ्रमस्तावद्विकल्पे सति वस्तुनः । जाग्रत्स्वप्नौ यथा स्वप्ने तथा विधिनिषेधता ॥ ६१ ॥ अहं पुराऽभवं कश्चिद्गन्धर्व उपबर्हणः । नाम्नाऽतीते महाकल्पे गन्धर्वाणां सुसंमतः ॥ ६९ ॥

## अष्टमः स्कन्धः

### तृतीयोऽध्यायः

श्रीवेदव्यासाय नमः ॥ [3]यत इति स्रष्टृत्वम् । येनेति प्रवर्तकत्वम् । य इति सत्ताप्रदत्वम् । न सन्ति यदुपेक्षयेत्युक्तत्वात् । 'उत्पन्नस्यापि यत्सत्ता हरेस्तत्स इतीर्यते । हरेर्विश्वं भिन्नमपि परमोऽसौ यतो विभु-रि'ति ब्रह्मतर्के ॥ ३ ॥ इति अष्टमतात्पर्ये तृतीयोऽध्यायः ॥ ३ ॥

### पञ्चमोऽध्यायः

'[25]अनुग्राह्यतया पक्षा देवा नात्मार्थतो हरेरि'ति च ॥ २५ ॥ '[27]छाया त्वविद्या सम्प्रोक्ता जन्यविद्या तपःस्मृतम् । जीवगृध्रस्य तौ पक्षावधऊर्ध्वपथोः पृथक् । तौ विष्णोस्तु न विद्येते नित्यविद्या-स्वरूपिण' इति च ॥ २७॥ [28]गुणत्रयनाभि । विद्युद्ब्रह्म । 'विद्युद्ब्रह्मे-त्युपासीते'ति श्रुतेः । 'जगच्चक्रस्याक्षभूतो बलरूपश्च केशव'इति च ॥

---

अष्टमः स्कन्धः

तृतीयोऽध्यायः

यस्मिन्निदं यतश्चेदं येनेदं य इदं स्वयम् । योऽस्मात्परस्माच्च परस्तं प्रपद्ये स्वयम्भुवम् ॥ ३ ॥

पञ्चमोऽध्यायः

न यस्य वध्यो न च रक्षणीयो नोपेक्षणीयादरणीयपक्षः । अथापि सर्गस्थितिसंयमार्थं धत्ते रजःसत्वतमांसि काले ॥२२॥ तत्रादृष्टस्वरूपाय श्रुतपूर्वाय चाभ्यधात् । स्तुतिमद्भुतदैवीभिर्गीर्भिस्त्ववहितेन्द्रियः ॥२५॥ विपश्चितं प्राणमनोधियात्मनामर्थेन्द्रियाभासमनिद्रमव्रणम् । छायातपौ यत्र न गृध्रपक्षौ तमक्षरं खं त्रियुगं व्रजामहे ॥२७॥ अजस्य चक्रं त्वजये-र्यमाणं मनोमयं पञ्चदशारमाशु । त्रिणाभि विद्युच्चलमष्टनेमिं यदक्षमाहु-





॥२८॥ [30]आत्मा च आत्मगुणाश्च निर्जिता येन ॥३०॥ '[33]सूर्यसोम-यमेन्द्रादीनृतेऽन्ये लोकपा अपि ॥ अद्भिर्जीवन्ति सोमाच्च महेन्द्रादी-नृतेऽखिलाः । अपां सोमस्य चेन्द्राद्याः सर्वे वै जीवनप्रदा'इति च ॥ ॥ ३३ ॥ [35]समुद्रे उदरे ॥ ३५ ॥ [36]अमृतस्येति मुक्तेरित्यस्य विशेषणम् ॥ ३६ ॥ इति अष्टमतात्पर्ये पञ्चमोऽध्यायः ॥ ५ ॥

### षष्ठोऽध्यायः

'[39]अनन्तोढो मन्दरस्तु यदा वैवस्वतान्तरम् । अमृतार्थं सुपर्णोढो रैवतस्यान्तरे मनोरि'ति ब्राह्मे ॥ ३९ ॥ इति अष्टमतात्पर्ये षष्ठोऽ-ध्यायः ॥ ६ ॥

### सप्तमोऽध्यायः

'[46]रुद्रस्य यशसोऽर्थाय स्वयं विष्णुर्विषं विभुः । न सञ्जह्रे

---

भूमृतं प्रपद्ये ॥ २८ ॥ न यस्य कश्चातितिपर्ति मायां यया जनो मुह्यति वेद नार्थम् । तं निर्जितात्मात्मगुणं परेशं नमामि भूतेषु समं चरन्तम् ॥ ॥ ३० ॥ अम्भस्तु यद्रेत उदारवीर्यं सिध्यन्ति जीवन्त्युत वर्द्धमानाः । लोका ह्यतोऽथाखिललोकपालाः प्रसीदतां ब्रह्म महाविभूतिः ॥ ३३ ॥ सोमं मनो यस्य समामनन्ति दिवौकसां वै बलमन्ध आयुः । ईशो नगानां प्रजनः प्रजानां प्रसीदतां नः स महाविभूतिः ॥ ३४ ॥ अग्निर्मुखं यस्य तु जातवेदा जातः क्रियाकाण्डनिमित्तजन्मा । अन्तः समुद्रे पचतः स्वधातून् प्रसीदतां नः स महाविभूतिः ॥ ३५ ॥ यच्चक्षुरासीत्तरणि-र्देवयानं त्रयीमयो ब्रह्मण एष धिष्ण्यम् । द्वारं च मुक्तेरमृतस्य मृत्योः प्रसीदतां नः स महाविभूतिः ॥ ३६ ॥

षष्ठोऽध्यायः

अवरोप्य गिरिं स्कन्धात्सुपर्णः पततां वरः । ययौ जलान्त उत्सृज्य हरिणा स विसर्जितः ॥ ३९ ॥

सप्तमोऽध्यायः

तदुग्रवेगं दिशि दिश्युपर्यधो विसर्पदुत्सर्पदसह्यवीर्यम् । भीताः

समर्थोऽपि वायुं चोचे प्रशान्तय'इति च ॥ ४६ ॥ '[32]तत्र तत्र स्तुतिपदैर्हरिरेव तु तद्गतः। स्तूयतेऽतो युक्तमेव गुणाधिक्यवचोऽपि त्वि'ति च ॥ ३२ ॥ इति अष्टमतात्पर्ये सप्तमोऽध्यायः ॥ ७ ॥

---

प्रजा दुद्रुवुरङ्ग सेश्वरा अरक्ष्यमाणाः शरणं सदाशिवम् ॥ १९ ॥ त्वमेकः सर्वजगत ईश्वरो बन्धमोक्षयोः। तं त्वा भवन्ति कुशलाः प्रपन्नार्तिहरं गुरुम् ॥ २२ ॥ गुणमय्या स्वशक्त्याऽस्य सर्गस्थित्यप्ययान् विभो। धत्से यदा स्वदृक् भूमन् ब्रह्मविष्णुशिवाभिधाम् ॥ २३ ॥ त्वं ब्रह्म परमं गुह्यं सदसद्भावभावनम्। नानाशक्तिभिराभासस्त्वमात्मा जगदीश्वरः ॥ ॥२४॥ त्वं शब्दयोनिर्जगदादिरात्मा प्राणेन्द्रियद्रव्यगुणस्वभावः। कालः क्रतुः सत्यमृतं च धर्मस्त्वय्यक्षरं यत्त्रिवृदामनन्ति ॥ २५ ॥ अग्निर्मुखं तेऽखिलदेवतात्मा क्षितिं विदुर्लोकभवाङ्घ्रिपङ्कजम्। कालो गतिस्तेऽखिलदेवतात्मनो दिशश्च कर्णौ रसनं जलेशः ॥ २६ ॥ नाभिर्नभस्ते श्वसनं नभस्वान् सूर्यश्च चक्षूंषि जलं स्म रेतः। परावरात्मा द्रुहिणस्तवात्मा सोमो मनो द्यौर्भगवान् शिरस्ते ॥२७॥ कुक्षिः समुद्रा गिरयोऽस्थिसङ्घा रोमाणि सर्वौषधिवीरुधस्ते। छन्दांसि साक्षात्तव सप्तधातवस्त्रयीमयात्मन् हृदयं स धर्मः ॥ २८ ॥ मुखानि पञ्चोपनिषत्तवेश यैस्त्रिंशदष्टोत्तरमन्त्रवर्गः। यत्तच्छिवाख्यं परमात्मतत्त्वं देव स्वयं ज्योतिरवस्थितिस्ते ॥२९॥ छाया त्वधर्मो मृड यैर्विसर्गो नेत्रत्रयं सत्वरजस्तमांसि। साक्षान्मनुः शास्त्रकृतस्तवेक्षा छन्दोमयो देवऋषिः पुराणः ॥३०॥ न ते गिरित्राखिललोकपाल विरिञ्चवैकुण्ठसुरेन्द्रगम्यम्। ज्योतिः परं यत्र रजस्तमश्च सत्वं न यद्ब्रह्म निरस्तभेदम् ॥ ३१ ॥ कामाध्वरत्रिपुरकालहराद्यनेकभूतद्रुहः क्षपयतः स्तुतये न तत्ते। यस्त्वन्तकाल इदमात्मकृतं स्वनेत्रवह्निस्फुलिङ्गशिखया भसितं तवेश ॥३२॥ ये स्वात्मराम गुरुभिर्हृदि चिन्तिताङ्घ्रिद्वन्द्वं चरन्तमुमया तपसेऽभितप्तम्। कत्थंत उग्रवपुषं निरतं श्मशाने ते भूतभूतिमविदस्तव हीनलज्जाः ॥ ३३ ॥ तत्तस्य ते सदसतोः परतः परस्य नान्तः स्वरूपगमने प्रभवन्ति भूम्नः। ब्रह्मादयः किमुत संस्तवने वयन्तु तत्सर्गसर्गविषया अपि भक्तिमात्रम् ॥ ३४ ॥ एतत्परं प्रपश्यामो न परं ते महेश्वर। मृडनाय हि लोकस्य व्यक्तिस्तेऽव्यक्तकर्मणः ॥ ३५ ॥ निशम्य कर्म तच्छम्भोर्देवदेवस्य मीढुषः। प्रजा दाक्षायणी ब्रह्मा वैकुण्ठश्च शशंसिरे ॥ ४६ ॥



## अष्टमोऽध्यायः

'[23]अनाद्यनन्तकालेऽपि विष्णुमेवाश्रिता रमा। अन्येषां ज्ञापनार्थाय दोषानुक्त्वेतराञ्जहावि'ति च ॥ २३ ॥ '[35]तेषां सत्याच्चालनार्थं हरिर्धन्वन्तरिर्विभुः। समर्थोऽप्यसुराणां तु स्वहस्तादमुचत्सुधामि'ति च ॥ ३५ ॥ इति अष्टमतात्पर्ये अष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः

'कालनेम्यादयः सर्वे हरिणा निहता अपि। शुक्रेणोज्जीविताः सन्तः पुनस्तेनैव पातिता' इति च ॥५६॥ इति अष्टमतात्पर्ये नवमः ॥ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

---

### अष्टमोऽध्यायः

नूनं तपो यस्य न मन्युनिर्जयो ज्ञानं क्वचित्तच्च न सङ्गवर्जितम्। कश्चिन्महांस्तस्य न कामनिर्जयः स ईश्वरः किं परतो व्यपाश्रयः ॥ १९ ॥ श्रीशुक उवाच—एवं विमृश्याव्यभिचारिसद्गुणं पदं निजैकाश्रयि सद्गुणाश्रयम्। वव्रे वरं सर्वगुणैरपेक्षितं रमा मुकुन्दं निरपेक्षमीप्सितम् ॥२२॥ तस्यांसदेश उशतीं नवकञ्जमालां माद्यन्मधुव्रतवरूथगिरोपघुष्टाम्। तस्थौ निधाय निकटे तदुरःस्वधाम सव्रीडहासविकसन्नयनेन भीता ॥ २३ ॥ धन्वन्तरिरिति ख्यातो आयुर्वेददृगिज्यभाक्। तमालोक्यासुराः सर्वे कलशं चामृताहृतम् ॥३४॥ लिप्सन्तः सर्ववस्तूनि कलशं तरसाऽहरन्। नीयमानेऽसुरैस्तस्मिन् कलशेऽमृतभाजने ॥ ३५ ॥

### नवमोऽध्यायः

दृष्ट्वा मृधे गरुडवाहमिहारिवाह आविद्धशूलमहिनोदथ कालनेमिः। तल्लीलया गरुडमूर्ध्नि पतद्गृहीत्वा तेनाहनन्नृप सवाहमरिं त्र्यधीशः ॥५६॥

### एकोनविंशोऽध्यायः

यजन्ति यज्ञक्रतुभिर्यमादृता भवन्त आम्नायविधानकोविदाः। स एव विष्णुर्वरदोऽस्तु वाऽपरो दास्याम्यमुष्मै क्षितिमीप्सितां मुने ॥११॥ यद्यप्यसावधर्मेण मां बध्नीयादनागसम्। तथाप्येनं न हिंसिष्ये भीतं ब्रह्मतनुं रिपुम् ॥ १२ ॥

## द्वाविंशोऽध्यायः

[9-12]बलिरप्यसुरावेशात्स्तुवन्नपि जनार्दनम्। आक्षिपत्यन्त कापि प्रह्लादो नित्यभक्तिमानि'ति ब्रह्माण्डे ॥ ९-१२ ॥ इत्यष्ट तात्पर्ये द्वाविंशोऽध्यायः ॥ २२ ॥

## त्रयोविंशोऽध्यायः

[61]अनन्तशक्तिर्भगवान्मत्स्यरूपी जनार्दनः। क्रीडार्थं याचया मास स्वयं सत्यव्रतं नृपमि'ति मात्स्ये ॥ ६१ ॥ इति श्रीमदानन्दती भगवत्पादाचार्यविरचिते श्रीमद्भागवताष्टमस्कन्धतात्पर्ये त्रयोविंशो ध्यायः ॥ २३ ॥

---

### द्वाविंशोऽध्यायः

श्री भगवानुवाच—वत्स प्रह्लाद भद्रं ते प्रयाहि सुतलातलम् मोदमानः स्वपौत्रेण ज्ञातीनां सुखमावह ॥ ९ ॥ नित्यं द्रष्टासि मां त गदापाणिमवस्थितम्। मद्दर्शनमहाह्लादन्यस्तकर्मनिबन्धनः ॥ १० श्री शुक उवाच—आज्ञां भगवतो राजन् प्रह्लादो बलिना सह। बा मित्यमलप्रज्ञो मूर्ध्न्याधाय कृताञ्जलिः ॥ ११ ॥ परिक्रम्यादिपुरुषं सर्वा सुरचमूपतिः। प्रणतस्तमनुज्ञातः प्रविवेश महाबिलम् ॥ १२ ॥

### त्रयोविंशोऽध्यायः

तमाह सातिकरुणं महाकारुणिकं नृपम्। यादोभ्यो ज्ञातिघातिभ्यो दीनां मां दीनवत्सल। कथं विसृजसे राजन् भीतामस्मिन् सरिज्जले ॥१४॥ प्रलयपयसि धातुः सुप्तशक्तेर्मुखेभ्यः श्रुतिगणमुपनीतं प्रत्युपाद हत्वा। दितिजमकथयद्यो ब्रह्म सत्यव्रताय तमहमखिलहेतुं जिह्ममी नतोऽस्मि ॥ ६१ ॥

---



## नवमः स्कन्धः

श्रीवेदव्यासाय नमः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

## षष्ठोऽध्यायः

[35]ब्रह्मादिभक्तिकोट्यंशादंशो नैवाम्बरीषके। नैवान्यस्य च स्यापि तथापि हरिरीश्वरः। तात्कालिकोपचेयत्वात्तेषां यशस दिराट्। ब्रह्मादयश्च तत्कीर्तिं व्यञ्जयामासुरुत्तमाम्। मोहनाय च त्यानां ब्रह्मादेर्निन्दनाय च। अन्यार्थं च स्वयं विष्णुर्ब्रह्माद्याश्च राशिषः। मानुषेपूत्तमत्वाच्च तेषां भक्त्यादिभिर्गुणैः। ब्रह्मादे- ष्ण्वधीनत्वज्ञापनाय च केवलम्। दुर्वासाश्च स्वयं रुद्रस्तथाप्यन्याय्य- कवान्। तस्याप्यनुग्रहार्थाय दर्पनाशार्थमेव चे'ति गारुडे ॥ ८५ ॥ ति नवमतात्पर्ये षष्ठोऽध्यायः ॥ ६ ॥ ७ ॥

## अष्टमोऽध्यायः

[93]नित्यपूर्णसुखज्ञप्तिस्वरूपोऽसौ यतो विभुः। अतोऽस्य राम- ख्या तस्य दुःखं कुतोऽण्वपि। तथापि लोकशिक्षार्थमदुःखो

---

### नवमः स्कन्धः

#### षष्ठोऽध्यायः

एवंविधानेकगुणः स राजा परात्मनि ब्रह्मणि वासुदेवे। क्रिया- पिः समुवाह भक्तिं यया विरिञ्चादिमधश्चकार ॥८५॥ श्री शुक उवाच— म्बरीषस्तनयेषु राज्यं समानशीलेषु विसृज्य धीरः। वनं विवेशात्मनि सुदेवे मनो दधद्ध्वस्तगुणप्रवाहः ॥ ८६ ॥

#### अष्टमोऽध्यायः

रक्षोऽधमेन वृकवद्विपिने समक्षं वैदेहराजदुहितर्यपि यापितायाम्।

दुःखवर्तिवत् । अन्तर्हितां लोकदृष्ट्या सीतामासीत्स्मरन्निव । ज्ञापना
पुनर्नित्यसम्बन्धं स्वात्मनः श्रिया । अयोध्याया विनिर्गच्छन्सर्वलोक
चेश्वरः । प्रत्यक्षं तु श्रिया सार्धं जगामानादिरव्ययः' ॥ ९३ ॥ इ
नवमतात्पर्ये अष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः

'[17]नक्षत्रमास गणितं त्रयोदशसहस्रकम् । ब्रह्मलोकसमं
समस्तं क्षितिमण्डलम् ॥ १७ ॥ '[22]रामो रामो राम इति सर्वे
मभवत्तदा । सर्वो राममयो लोको यदा रामस्त्वपालयदि'ति स्कान्दे
॥ २२ ॥ इति नवमतात्पर्ये नवमोऽध्यायः ॥ ९ ॥ १० ॥ ११
॥ १२ ॥ १३ ॥

## चतुर्दशोऽध्यायः

'[8]जामदग्न्यो वरं वव्रेऽनन्तशक्तिरपि स्वयम् । पितुर्मान्य
सिध्यर्थं लोके लोकेश्वरः प्रभुः । अपापमपि देवेशं पितरः संन्यवर्तयन
अजानन्तोऽस्य माहात्म्यं मोहितास्तस्य मायया । मोहयन्मायया लो
चक्रे चापचितिं वधे । पुण्यपापादिनिर्मातुः कुतः पापादिसङ्गतिरि'
च ॥ ८ ॥ इति नवमतात्पर्ये चतुर्दशोऽध्यायः ॥ १४ ॥ १५ ॥ १६

---

भ्रात्रा वने कृपणवत्प्रियया वियुक्तः स्त्रीसङ्गिनामिति रतिं प्रथ
श्चचार ॥ ९३ ॥

### नवमोऽध्यायः

स्त्रीपुंप्रसङ्ग एतादृक् सर्वत्र त्रासमावहः । अपीश्वराणां किमु
ग्राम्यस्य गृहमेधिनः ॥ १६ ॥ तत ऊर्ध्वं ब्रह्मचर्यं धारयन्नजुहोत्प्रभु
त्रयोदशाब्दसाहस्रमग्निहोत्रमखण्डितम् ॥ १७ ॥ पुरुषो रामचरि
श्रवणैरुपधारयन् । आनृशंस्यपरो राजन् कर्मबन्धैर्विमुच्यते ॥ २२ ॥

### चतुर्दशोऽध्यायः

रामः सञ्चोदितः पित्रा भ्रातॄन् मात्रा सहावधीत् । प्रभावज्ञो मु
सम्यक् समाधेस्तपसश्च सः ॥ ६ ॥ उत्तस्थुस्ते कुशलिनो निद्रापा
इवाञ्जसा । पितुर्विद्वांस्तपोवीर्यं रामश्चक्रे सुहृद्वधम् ॥ ८ ॥



## सप्तदशोऽध्यायः

[37]द्वाजमिमं भर । उचथ्यस्य क्षेत्रजो बृहस्पतेर्जात इति । द्वयो-
र्जातत्वाद्द्वाजः । बृहस्पतेर्वाजः प्रजासन्ततिर्येन भृता बृहस्पतेर्भरद्वाजः ॥
॥३७॥ '[39]भरद्वाजो मरुद्भिश्च भृतो जातो द्वयोर्यत'इति पाद्मे ॥३९॥
इति नवमतात्पर्ये सप्तदशोऽध्यायः ॥ १७ ॥ १८ ॥ १९ ॥ इति
नवमतात्पर्यं सम्पूर्णम् ॥

---

# दशमः स्कन्धः (पूर्वार्धः)

## प्रथमोऽध्यायः

श्रीवेदव्यासाय नमः ॥ [41]स्वप्ने यथा दृष्टश्रुतस्मृत्यनुसारिदेहं
प्राप्नोति । अपस्मृतिर्मृतः । पूर्वदेहस्मरणाभावात् । अनभिमानतः ॥
॥४१॥ [42]यतो यतः । यत्र यत्र मनो धावत्यात्मपश्चानां मध्ये तत्र
तत्र तेन दैवेन सह जायते गुणानुबद्धः सन् । 'दैवगान्धर्वपित्र्येषु

---

### सप्तदशोऽध्यायः

तं त्यक्तुकामां ममतां भर्तुस्त्यागविशङ्किताम् । नामनिर्वचनं तस्य
श्लोकमेतं जगुः सुराः ॥ ३७ ॥ मूढे भर द्वाजमिमं भरद्वाजं बृहस्पतेः ।
याता तु दुःखात्पितरौ भरद्वाजस्ततस्त्वयम् ॥ ३८ ॥ चोद्यमाना सुरैरेवं
मया तं देवमात्मजम् । व्यसृजन्मरुतोऽबिभ्रन्दत्तोऽयं वितथेऽन्वये ॥३९॥

---

### दशमः स्कन्धः पूर्वार्धः

### प्रथमोऽध्यायः

स्वप्ने यथा पश्यति देहमीदृशं मनोरथेनाभिनिविष्टचेतनः । दृष्ट-
श्रुताभ्यां मनसाऽनुचिन्तयन् प्रपद्यते तत्किमपि ह्यपस्मृतिः ॥४१॥ यतो

मानुषेष्वासुरेषु च। यत्रयत्र मनो याति तत्रतत्रोपजायते। स्वगुण-स्वांनुसारेण सत्वादिविनिबन्धन'इति गारुडे। 'देवादित्वं योग्यतया तत्सकाशस्त्वनुस्मृतेः। श्वेतद्वीपादि तत्रापि योग्यतामप्यपेक्ष्य तु। विष्णोः स्थानं विनाऽन्यत्र वायुशक्रादिनामपि। त्रैलोक्यदेशभेदेषु योग्यता न त्वपेक्षिते'ति नारदीये ॥ ४२ ॥ [43]विभाव्यते विविधं भाव्यते। स्वमायारचितेषु विष्णुमायारचितेषु। रागानुगतः पुमान् जीवो विविधं मुह्यति। 'यथैवोदशरावेषु सूर्यादिः प्रतिबिम्बितः। वायुना चलितो भाति छिन्नभिन्नादिरूपवान्। एवं विष्ण्विच्छया जात-गुणेषु प्रतिबिम्बितः। छिन्नो भिन्नो मृतोऽस्मीति बहुधा प्रतिपद्यते। तदेव च दृढीभूत उदके निःशरावके। छेदभेदादि नाप्नोति निश्चलं प्रतिबिम्बितम्। एवं गुणैर्विमुक्तस्तु जीवो नाप्नोति दुःखिताम्। शरावबद्गुणाः प्रोक्ता अज्ञानं तु द्रवत्ववत्। दृढीभूतोदवज्जीवस्तज्ज्ञानं प्रतिबिम्बवत्। नित्यान्तःकरणं चैव प्रतिबिम्बश्च तद्गतः। द्वयमेव विमुक्तस्य न किञ्चिज्जडमिष्यते। सूर्यकान्तादिवत्तस्य स्वरूपं द्वय-मप्युत। तस्मान्न हन्तुं शक्योऽसौ केनचिज्जीव आत्मवान्। तस्मा-त्स्वजीवनार्थाय न परद्रोहमाचरेत्। हन्यते चाज्ञभावेन परेषां द्रोह-माचरन्नि'ति तन्त्रभागवते॥ 'परः स्वो हरिरुद्दामा इति नामचतुष्टयम्। विष्णोर्गुह्यं तु यो वेद सर्वपापैः प्रमुच्यत'इति प्रकाशिकायाम्॥ 'स्वतन्त्रत्वात्सुखत्वाच्च स्वनामा विष्णुरुच्यत'इति पाद्मे ॥ ४३ ॥ [51]कुण्डादिस्थाग्नेर्दारुयोगादौ स्वतः प्रवृत्त्यभावात्। 'यथा कुण्डस्थित-

---

यतो धावति दैवचोदितं मनो विकारात्मकमात्मपञ्चसु। गुणेषु माया-रचितेषु देह्यसौ प्रपद्यमानः सह तेन जायते ॥ ४२ ॥ ज्योतिर्यथैवोदक-पार्थिवेष्वदः समीरवेगानुगतं विभाव्यते। एवं स्वमायारचितेष्वसौ पुमान् गुणेषु रागानुगतो विमुह्यति ॥४३॥ अग्नेर्यथा दारुवियोगयोगयो-





स्याग्नेर्दैवाद्दारूपसंनमेत्। देहयोगो वियोगश्च तथा दैवान्न चान्यथे'ति वामने ॥ ५१ ॥ इति दशमतात्पर्ये प्रथमोऽध्यायः ॥ १ ॥

## तृतीयोऽध्यायः

'[19]आविश्य पितरं विष्णुः स्वरूपेणैव मातरम्। विडम्बनार्थं लोकस्य निर्जनिश्चाप्यथाविशत्। आनन्दमात्रदेहेन जातवत्सम्प्रदृश्यत'इति च ॥ १९ ॥ '[27]सच्छब्द उत्तमं ब्रूयादानन्दं दिति वै वदेत्। येति ज्ञानं समुद्दिष्टं पूर्णानन्ददृशिस्ततः। सत्यशब्दोदितं तादृग्रूपं नित्यं यतो हरेः। सत्यव्रतस्ततो विष्णुः सद्भूतत्रयमुच्यते। त्यं तदन्य-त्समुद्दिष्टं तत्परत्वात्तु तत्परः। वेदमुख्यार्थरूपत्वात्त्रिसत्यो भगवान्हरिः। सत्यस्य चोत्तमानन्दज्ञानदातृत्वतः सदा। सत्यस्य सत्यो भगवान्सत्यस्थो जगति स्थितः। जगन्नेतृत्वतः सत्यनेता विष्णुः प्रकीर्तितः। अत्तृत्वाच्च तदादानात्सत्यात्मा चोच्यते विभुरि'ति तन्त्रभागवते ॥ २७ ॥ '[28]जगद्वृक्षाश्रया ह्येषा प्रकृतिस्तु गुणत्रयम्। मूलं मात्राः शिफास्तस्य उत्पित्सुत्वादिकास्तथा। षट्प्रकारास्तु विटपा देवगन्धर्वदानवाः। राक्षसाश्च पिशाचाश्च तिर्यञ्चानुपतस्थुषः। इन्द्रियाण्यस्य पत्राणि द्वारो द्वारो नव स्मृताः। प्रवृत्तं च निवृत्तं च फलद्वयमुदीरितम्।

---

रदृष्टतोऽन्यन्न निमित्तमस्ति। एवं हि जन्तोरपि दुर्विभाव्यः शरीर-संयोगवियोगहेतुः ॥ ५१ ॥

तृतीयोऽध्यायः

भगवानपि विश्वात्मा भक्तानामभयङ्करः। आविवेशांशभागेन मन आनकदुन्दुभेः ॥ १७ ॥ ततो जगन्मङ्गलमच्युतांशं समाहितं शूरसुतेन देवी। दधार सर्वात्मकमात्मभूतं काष्ठा यथाऽऽनन्दकरं नभस्तः ॥१९॥ ब्रह्मभवावूचतुः—सत्यव्रतं सत्यपरं त्रिसत्यं सत्यस्य योनिं निहितं च सत्ये। सत्यस्य सत्यमुत सत्यनेत्रं सत्यात्मकं त्वां शरणं प्रपन्नाः ॥ २७ ॥ एकायनोऽसौ द्विफलस्त्रिमूलश्चतूरसः पञ्चशिफः षडात्मा। सप्तत्व-

धर्मादयस्त्वत्र रसा मोक्ष एकफलस्य तु। प्रवृत्ताश्च निवृत्ताश्च पक्षिणो द्विविधा मताः। कारणस्य सदा सत्वात्प्रवाहेण च सन्नसौ। न कदाचिन्न भूतोऽसौ न चैव न भविष्यति। स्वतो वा परतो वापि सन्नतोऽसौ जगत्तरुः। अस्य स्वर्गादिकृद्विष्णुः सदानन्दैकरूपक'इति च ॥ २८ ॥ ‘[32]सदा सर्वगुणाढ्यत्वात्सत्ववान्हरिरुच्यते। न तु सत्वगुणात्मत्वाद्यतस्त्रिगुणवर्जित'इति नारदीये ॥ ‘भगवत्पादपोतोऽसौ नान्यपोतसमो भवेत्। सन्निधायैव शिष्येषु तदेव प्राप्नुयुर्यत'इति वामने ॥ ‘भगवत्पादनौकाया नेयं नौकोपमा भवेत्। तया तीर्त्वा तु तामेव प्राप्य तिष्ठन्ति तत्र यदि'ति ब्राह्मे ॥ अतस्तामेव याताः ॥३२॥ ‘[35]विशुद्धसत्वब्रह्मादेः शरीरे संस्थितो हरिः। तेषामादेशमार्गेण वेदाद्यैरर्चयन्ति तमि'ति भागवततन्त्रे ॥ ३५ ॥ ‘[36]सत्वं ब्रह्मादिदेहाख्यं ज्ञानरूपं तमोनुदम्। यदि न स्यात्तदा सत्वप्रकाशानुमितो विभुः। यदि न स्यात्परो विष्णुः कथं विद्वज्जना अञ्जुम्। अर्चयन्तीति तत्त्वस्य जिज्ञासुभिरधोक्षजः। कथं ज्ञायेत कस्यापि निर्गुणत्वात्परो विभुरि'ति तन्त्रभागवते ॥३६॥ ‘[37]लोकसिद्धार्थनाम्नः स राहित्यान्नामवर्जितः। अरूपोऽप्राकृतत्वाच्च सत्वाभावात्तथाऽगुणः। अकर्माऽक्लिष्टकारित्वान्नित्यत्वादज एव च। अलौकिकार्थसन्नाम्नामनन्तत्वाज्जनार्दनः।

गष्टविटपो नवाक्षो दशश्छदी द्विखगो ह्यादिवृक्षः ॥२८॥ त्वमेक एवास्य सतः प्रसूतिः स्थानं विधानं त्वमनुग्रहश्च। त्वन्मायया संवृतचेतसस्त्वां पश्यन्ति नाना न विपश्चितो ये ॥ २९ ॥ त्वय्यम्बुजाक्षाखिलसत्वधाम्नि समाधिनावेशितचेतसो ये। त्वत्पादपोतेन महत्कृतेन कुर्वन्ति गोवत्सपदं भवाब्धिम् ॥३१॥ स्वयं समुत्तीर्य सुदुस्तरं द्युमन्भवार्णवं भीममदभ्रसौहृदाः। भवत्पदाम्भोरुहनावमत्र ते निधाय याताः सदनुग्रहो भवान् ॥ ॥३२॥ सत्वं विशुद्धं श्रयते भवान् स्थितौ शरीरिणां श्रेय उपायनं वपुः। वेदक्रियायोगतपःसमाधिभिस्तवार्हणं येन जनः समीहते ॥३५॥ सत्वं न चेद्धातरिदं निजं भवेद्विज्ञानमज्ञानभिदाऽपमार्जनम्। गुणप्रकाशैरनुमीयते भवान् प्रकाशते यस्य च येन वा गुणः ॥३६॥ न नामरूपे गुणकर्मजन्मभि-



नन्तनामा परमः सुसुखज्ञानरूपवान्। तानि चास्य सुदिव्यानि गन्धीनि सुभान्ति च। शुभलक्षणपूर्णानि सुवर्णानि महान्ति च। दतोऽनन्तरूपोऽसौ पूर्णानन्दादिभोजनात्। बलैश्वर्यसुवीर्यादिपूर्णा-र्यगुणत्वतः। अनन्तगुण एवासौ ते चाभिन्ना गुणा हरेः। रस्परमभिन्नाश्च सर्वे धर्माश्च तद्गताः। अभिन्नानि च रूपाणि सर्वाणि गदीशितुः। प्राकृतस्य तु नामादेरीक्षिता पुरुषोत्तमः। अनामादि-गोभिस्तु स एषोऽर्थोऽनुमीयते। अनामत्वादि चान्यच्च ज्ञानिनां नसेङ्ग्यते। तेनैव चोह्य एषोऽर्थस्तस्माज्ज्ञेय इति प्रभुरि'ति ब्रह्मतर्के ॥ क्रियायाः प्रतियन्ति। भगवत्प्रेरणादेव जानन्ति। ‘नामरूपादि ष्णोस्तु न शक्यं ज्ञातुमञ्जसा। तथापि तत्प्रसादेन जानन्ति परमर्षय' ति पाद्मे ॥ ३७ ॥ [38]यस्मान्नामरूपादयः सन्ति तस्माच्छृण्वन् गृणन्। क्रियासु क्रियमाणासु प्रेरकत्वेन पूज्यत्वेन च। ‘सर्वक्रियासु कर्तृत्व-ज्यत्वेन जनार्दनम्। यो वेत्ति नैति संसारं तत्प्रसादान्न संशय'इति क्रियायोगे ॥ ३८ ॥ ‘[39]खं नाभिश्चरणौ क्षितिरि'ति भवतः पदो वः। ‘पदाद्याश्रयणाद्विष्णोः पृथिव्यादि पदादिकम्। तज्ज्ञत्वाद्वाथ ड्याद्यथानुर्भूमिगं पदमि'ति ब्रह्मतर्के ॥ ३९ ॥ ‘[40]अज्ञानादेव न्यन्ते विष्णोर्जनिमृती नराः। स्थितिरूपस्य चान्यस्मात्स्थितिं मोक्षा-पस्य हि। स्वेच्छया हि जनिं भङ्गं स्थितिं चासौ करोत्यजः।

कपितव्ये तव तस्य साक्षिणः। मनोवचाभ्यामनुमेयवर्त्मनो देव-क्रियायाः प्रतियन्त्यथापि हि ॥३७॥ शृण्वन् गृणन् संस्मरयंश्च चिन्तय-नामानि रूपाणि च मङ्गलानि ते। क्रियासु यस्त्वच्चरणारविन्दयो-निविष्टचित्तो न भवाय कल्पते ॥ ३८ ॥ दिष्ट्या हरेऽस्या भवतः पदो भुवो भारोऽपनीतस्तव जन्मनेशितुः। दिष्ट्याङ्कितां त्वत्पदकैः सुशोभनै-र्द्रक्ष्याम गां द्यां च तवानुकम्पिताम् ॥३९॥ न तेऽभवस्येश भवस्य कारणं

सर्वस्य जगतो यस्मात्तज्जन्मादिः कुतो भवेदि'ति च ॥ ४० ॥ इति दशमतात्पर्ये तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः

'[15]बहिश्च विद्यमानत्वादप्रविष्टो जगद्धरिः । प्रविष्टवच्च तत्रै पूर्णरूपत्वतो विभुः । अप्रवेशः प्रवेशश्च प्रविष्टोपमता तथा । बहि रन्तर्गतस्य स्यादित्याहुः शब्दवेदिन'इति च ॥१५॥ '[16-17]महदादिस्त विकृत ईषद्विकृतरूपत'इति च ॥ अनुगता इव प्रविष्टा इव । पूर्वोत्त वद्बहिरपि विद्यमानत्वात् । अन्तश्च देवतानामविभक्तशक्तित्वात्पूर्वो त्पन्नत्वात्तत्त्वानामण्डप्रवेशमात्रम् । व्यक्तिविशेषादुत्पत्तिरित्युपचर्यते । अण्डजो ब्रह्मेत्यादि । 'महद्रूपादिना ब्रह्मा देवाश्चैव प्रजज्ञिरे । अण्ड त्वेषामभिव्यक्तिर्जनिरित्यभिधीयत'इति च ॥ १६, १७ ॥ [18]ग्राह्य गुणविषयबुद्ध्यनुमेयलक्षणः । ग्राह्यगुणेष्वस्वातन्त्र्यात्तज्ज्ञापकोऽन्यो स्तीति ज्ञायते । 'ज्ञातापि सर्वभावानां ज्ञायते ज्ञानलिङ्गतः । जिघृक्षो र्ग्रहणाभावादस्वातन्त्र्यप्रतीतितः । सर्वत्राव्यवधानेन द्रष्टृत्वात्सर्ववस्तुनः । आन्तरं बाह्यमित्येव विशेषो नास्ति कश्चने'ति तन्त्रभागवते । जीव ग्रहणशक्तिरपि तस्येत्यपिशब्दः । एवं शरीरमुत्पाद्य ज्ञायसे । सर्व सम्पूर्णस्य । 'सर्वः सम्पूर्णसामर्थ्यात्सर्वात्मा सर्वभक्षणात् । अनन्या

---

विना विनोदं बत तर्कयामहे । भवो निरोधः स्थितिरप्यविद्यया कृता यतस्त्वय्यभवाश्रयात्मनि ॥ ४० ॥

### चतुर्थोऽध्यायः

स एव स्वप्रकृत्येदं सृष्ट्वा यत्त्रिगुणात्मकम् । तदनु त्वं ह्यप्रविष्टः प्रविष्ट इव भाव्यसे ॥१५॥ य एतेऽविकृता भावाः सह ते विकृतैः सह । नानावीर्याः पृथग्भूता विराजं शयनं तव ॥ १६ ॥ सन्निपत्य समुत्पाद्य दृश्यन्तेऽनुगता इव । प्रागेव विद्यमानत्वान्न तेषां इह सम्भवः ॥ १७ ॥ एवं भवान्बुद्ध्यनुमेयलक्षणो ग्राह्यैर्गुणैः सन्नपि तद्गुणाग्रहः । अनावृतत्वा



भयतश्चात्मवस्तुत्वमभिधीयत' इति च । आत्मन्येव वासादात्मवस्तु । परमात्मनोऽपि शरीरे सन्निधानादेवाबुधैरस्वव्यतिरेकतो ज्ञायसे । यथा- नुकूलवादं वेदवचनं विना प्रवर्तमानं न तन्मनीषितम् । सम्यक् । 'अभी३दमेकमेको अस्मि निष्षाळभीद्वा किमु त्रयः करन्ति । खलेन पर्षान्प्रतिहन्मि भूरि किं मा निन्दन्ति शत्रवोऽनिन्द्रा' इति जीवेशयो- र्भेदं व्यक्तं वचः परः पुमानुपाददे । 'प्रविष्टत्वाच्छरीरेषु जीव एवेति दुर्धियः । मन्यन्ते परमात्मानं न तन्मतमनुव्रजेत् । वेदवादविरोधित्वा- दनुयाता तमो विशेत् । यतः पर्यङ्कशयन आह विष्णुः सनातनः । इदं जगत्सर्वमथेदृशानि भूरीणि वा मामभियान्ति सङ्ख्ये । धान्यानि यद्वत्खलगानि मर्त्याः सञ्चूर्णयिष्याम्यहमेक एवे'ति ब्रह्माण्डे । चेति फलतोऽपि तमो यान्तीति । 'ऐकात्म्यज्ञानतो यान्ति तमो भेदात्परं पदम् । स्वातन्त्र्यपारतन्त्र्यादिज्ञानं भेददृशिर्भवेदि'ति ब्रह्मवैवर्ते ॥१८॥ '[20]अनीहोऽक्लिष्टकारित्वात्तथाऽविकृत एव सन् । सर्वं करोति तद्युक्त- मैश्वर्यात्पूर्णशक्तित'इति ब्राह्मे । अगुणश्चेत्कथं गुणैः सृष्ट्यादिकृदिति तदाश्रयत्वात् । 'अगुणोऽगुणदेहत्वात्सगुणो गुणधारणात् । ऐश्वर्यादि- गुणत्वाद्वा वासुदेव इतीर्यत'इत्याग्नेये ॥ २० ॥ '[21]जगतां वर्धयन्सत्वं यदा रक्षति केशवः । हयग्रीवादिरूपेण शुक्लवर्णस्तदा विभुः । वर्धयंस्तु रजो येन जगदुत्पादयेद्धरिः । तद्रक्तं जामदग्न्यादिरूपं येन विनाशयेत् । वर्धयंस्तु तमो लोके तत्कृष्णं यादवादिकम् । सर्वत्र सर्वं कुरुते विशेष- स्तत्र कीर्तितः । ज्ञानदानादिना रक्षा महतां सम्प्रकीर्तिता । रागदानेन

---

बहिरन्तरं न ते सर्वस्य सर्वात्मन आत्मवस्तुनः ॥ १८ ॥ यदात्मनो दृश्यगुणेषु सन्निधेर्व्यवस्यसेऽस्वव्यतिरेकतोऽबुधैः । विनानुवादं न च तन्मनीषितं सम्यग्वचो व्यक्तमुपाददत्पुमान् ॥ १९ ॥ त्वत्तोऽस्य जन्म- स्थितिसंयमान्विभो वदन्त्यनीहादगुणादविक्रियात् । त्वयीश्वरे ब्रह्मणि नो विरुध्यते तदाश्रयत्वादुपचर्यसे गुणैः ॥ २० ॥ त्वमस्य लोकस्य विभो

महतां सृष्टिः सृष्टिरुदीर्यते। असतां तु मनोवृद्धिं कुर्वन्पातयते यदा। सतां विवर्धनार्थाय कृष्णरूपी तदा हरिः। ज्ञानाद्युत्पत्तिकृच्चापि रू रक्तं विभोः स्मृतम्। तमोविनाशकमपि कृष्णं विष्णोरुदाहृतम्। आचार्यादिषु रागार्थे शुद्धसत्वात्मकं रजः। यतो व्यपेक्षितं नाशे तमसोऽपि ततः परम्। तमो द्वेषात्मकं शुद्धं सत्वात्मकमुदीर्यते। एवं स्मृतिगतानां तु रागाद्या न गुणोद्भवाः। शुद्धज्ञानात्मकाः स मुक्तानां नात्र संशयः। सर्वत्र सर्वकृच्चापि हयग्रीवादिरूपकः। ज्ञानादि रक्षको विष्णुर्जामदग्न्यादिरूपवान्। ज्ञानाद्युत्पादको नित्यं कृष्णादि दोषनाशकः। एकरूपोऽपि भगवान्बहुरूप इवेयते। अचिन्त्यैश्वर्य रूपत्वात्पूर्णानन्दैकरूपक'इति ब्रह्मतर्के। 'स्वेच्छया तु गुणान्विष्णु र्नामरूपान्करोत्यजः। गुणानामाश्रयत्वात्तु भवेत्स गुणबृंहित'इति तन्त्र भागवते ॥ २१ ॥ '[22]सतां सुखविवृद्ध्यर्थमसतां पीडनं हरेः। यावच्चासुरदुःखं स्यात्तावद्देवसुखं भवेत्। तत्रापि तारतम्येन ब्रह्मणोऽ भ्यधिकं सुखम्। यावत्क्षीणं तमस्तावत्प्रकाशस्य तु वर्धनम्। सर्वस्मा कलेः पीडा ब्रह्मणोऽभ्यधिकं सुखम्। तस्मात्सतां रक्षणाय सर्वक हरेः स्मृतमि'ति ब्रह्मतर्के ॥ २२ ॥ '[25]सर्वाशुभविनिर्मुक्तगुणमात्रो यतो हरिः। सत्तामात्रमतः प्राहुर्निर्विशेषोऽखिलोत्तमः। अनादरा न्निरीहश्च सेहः सर्वकृती यत'इति तन्त्रभागवते ॥ यस्य तद्रूपं सत्वम्। 'सप्तसु प्रथमे'ति सूत्रात् ॥ २५ ॥ [26]अशेषसंज्ञः सर्वनामा ॥ २६ ॥ [27]चेष्टते अनेनेति चेष्टाः॥२७॥ इति दशमतात्पर्ये चतुर्थोऽध्यायः ॥४॥

---

रिरक्षिपुर्गृहेऽवतीर्णोऽसि ममाखिलेश्वर। राजन्यसंज्ञासुरकोटियूथपै निर्व्यूह्यमानां निहनिष्यसे चमूम् ॥ २२ ॥ देवक्युवाच—रूपं यत्तत्प्राहु रव्यक्तमाद्यं ब्रह्म ज्योतिर्निर्गुणं निर्विकारम्। सत्तामात्रं निर्विशेषं निरीह स त्वं साक्षाद्विष्णुरध्यात्मदीपम् ॥ २५ ॥ नष्टो लोके द्विपरार्धावसाने महाभूतेष्वादिभूतं गतेषु। व्यक्तेऽव्यक्तं कालवेगेन याते भवानेक शिष्यतेऽशेषसंज्ञः ॥ २६ ॥ योऽयं कालस्तस्य तेऽव्यक्तबन्धो चेष्टामाहु श्चेष्टते येन विश्वम्। निमेषादिर्वत्सरान्तो महीयांस्तं त्वेशानं क्षेमधाम प्रपद्ये ॥ २७ ॥



## पञ्चमोऽध्यायः

'[1]पूतनाकंसनरकशिशुपालादिषु द्विधा। जीवाः सन्तस्त्वसन्तश्च तत्र बन्ध्वादिरूपिणः। विष्णोः सन्त इति ज्ञेया असन्तः शत्रुरूपिणः। शुभजीवप्रकाशेन कदाचिच्छुभबुद्धयः। विपर्ययेऽन्यथा च स्युः शुभा- स्तत्र हरिं ययुः। असुराश्च तमो घोरं यदि तत्रैव मध्यमाः। मध्यमां गतिमेवापुरेकदेहगता अपी'ति गारुडे ॥१॥ [19]अयमात्मा परमात्मा ॥ ॥ १९ ॥ [20-21]यतः परमात्मनो नैकविधमैक्यं विपरीतज्ञानेन यतश्च संसृतिर्न निवर्तते। स एव न विपर्येति। (पुत्रादिकं तु विपर्येति) तस्मात्तस्मिन्नेव स्थितिं कृत्वा माऽनुशोच। 'अहं ब्रह्मास्मि देवोऽस्मि नास्मि केवलमानुषः। जातोऽस्मि वर्धे धनवान्क्रीय इत्यादिका सदा। देहादिषु च देवेषु परे ब्रह्मणि चाभिदा। मोहाद्यन्मायया नित्यं दृश्यतेऽधममध्यमे। स ईशो न विपर्येति सर्वेशत्वात्कदाचन। पुत्रादिकं विपर्येति पित्रादिश्च यतो भवेदि'ति ब्राह्मे ॥ 'तल्लक्षणैर्विहीनः सन्ब्रह्म- देवोऽस्मि चेति तु। असुराः प्रतिपद्यन्ते जन्मादीन्मानुषा जना' इति च ॥ 'परब्रह्मण एकस्य ब्रह्मास्मीति विचिन्तनम्। परब्रह्मेति रामादि- लक्षणैरवधारयेत्। देवोऽस्मीति च देवानां तच्च ज्ञेयं स्वलक्षणैः। मर्त्यानां मानुषोऽस्मीति प्रतिपत्तिर्विधीयते। अन्यथाप्रतिपत्त्या तु तमो यान्ति विनिश्चयात्। अन्यथा प्रतिपद्यन्ते आसुरा नियतं जनाः।

---

पञ्चमोऽध्यायः

बहिरन्तःपुरद्वारः सर्वाः पूर्ववदावृताः। ततो बालध्वनिं श्रुत्वा गृहपालाः समुत्थिताः ॥ १ ॥ मा शोचेथां महाभागावात्मजान् स्वकृतं भुजः। जन्तवो न सदैकत्र दैवाधीनाः सहासते ॥ १८ ॥ भुवि भौमानि भूतानि यथा यान्त्यपयान्ति च। नायमात्मा तथैतेषु विपर्येति यथैव भूः ॥१९॥ यतोऽनेकविधोऽभेदो यत आत्मविपर्ययः। देहयोगवियोगश्च संसृतिर्न निवर्तते ॥ २० ॥ तस्माद्भद्रे स्वतनयान्मया व्यापादितानपि।

घोरं तमश्च ते यान्ति तथा ज्ञानात्परं सुरा'इति च ॥ २०, २१ ॥ [26-27]देहिनामज्ञानप्रभवा यातनाः स्वपरेति भिदा हन्ति । 'देवोऽहं मानुषो वेति विशेषं तत्र चापि तु । तथैव परमात्मानं विशेषं ब्रह्मजीवयोः । सम्यग्भेदेन यः पश्येत्स हन्त्यज्ञानसम्भवाः । यातनाः परमात्मानं तत्प्रसादाच्च गच्छती'ति ब्रह्माण्डे ॥ 'भगवद्दर्शनाद्यस्य विरोधाद्दर्शनं पृथक् । पृथग्दृष्टिः स विज्ञेयो न तु सद्भेददर्शन'इति च भविष्यत्पुराणे ॥ 'स्वरूपभेदो हि परजीवयोर्जीवगो मिथः । परस्परेण वस्तूनां विशेषः शास्त्रदर्शितः । सद्भेदोऽयं समुद्दिष्टस्त्वसद्भेदं च मे शृणु । स्वरूपाणां गुणानां च विष्णोर्भेदः परस्परात् । सर्वस्य विष्णुतन्त्रत्वं शत्रुमित्रादिभेदिता । यच्चान्यच्छास्त्रविद्विष्टमसद्भेदः स ईरितः । सद्भेददर्शनान्मोक्षस्त्वसद्भेदात्तमो व्रजेत् । सद्भेदादर्शनाच्चैव तमो मोक्षस्तथेतरादि'ति च ॥ २६, २७॥ इति दशमतात्पर्ये पञ्चमोऽध्यायः॥ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

## एकादशोऽध्यायः

'[30]रूप्यत्वात्तु जगद्रूपं विष्णोः साक्षात्सुखात्मकम् । नित्यपूर्णं समुद्दिष्टं स्वरूपं परमात्मन'इति वामने ॥ ३० ॥ [31]देहे । 'विष्णुः सर्वगुणोद्रेकात्काल इत्यभिधीयत'इति च ॥ ३१ ॥ '[32]प्रकृत्यादे-

मा।नुशोच यतः सर्वः स्वकृतं विन्दतेऽवशः ॥ २१ ॥ एवमेतन्महाराज यथा वदसि देहिनाम् । अज्ञानप्रभवा हन्ति स्वपरेति भिदा यतः ॥ २६ ॥ शोकहर्षभयद्वेषलोभमोहमदान्विताः । भिथो घ्नन्ति न पश्यन्ति भावैर्भावान् पृथग्दृशः ॥ २७ ॥

### एकादशोऽध्यायः

कृष्ण कृष्ण महायोगिन् त्वमाद्यः पुरुषः परः । व्यक्ताव्यक्तमिदं विश्वं रूपं ते ब्राह्मणा विदुः ॥ ३० ॥ त्वमेकः सर्वभूतानां देह आत्मेन्द्रियेश्वरः । त्वमेव कालो भगवान् विष्णुरव्यय ईश्वरः ॥ ३१ ॥ त्वं





स्तद्वशत्वात्प्रकृत्यादिरुदीर्यते । यथा राजा भृत्यकृतात्स्वयं कर्तेत्युदीर्यते । तथा देहं स्वतन्त्रत्वात्स्वयमित्याहुरञ्जसे'ति पाद्मे ॥३२॥ [33]स्वात्मना गृह्यमाणः ॥ ३३ ॥ '[34]छन्नोऽन्येषां न तु स्वस्य भगवान्पुरुषोत्तमः ॥ ॥३४॥ [35]तस्यावतारा देहस्था अदेहस्था इति द्विधा । अन्तर्याम्यादिरूपाणि देहस्थानि विदो विदुः । मत्स्यकूर्मादिरूपाणि नदेहस्थानि तत्पतेः । अन्यातुल्यैरतिशयैर्मनसो नियमादिभिः । ज्ञायन्ते तानि रूपाणि नित्यपूर्णानि सर्वश'इति महाकौर्मे ॥ ३५ ॥ इति दशमतात्पर्ये एकादशोऽध्यायः ॥ ११ ॥ १२ ॥ १३ ॥

## चतुर्दशोऽध्यायः

'[34]दण्डोऽपि भगवच्चीर्णो ममैषोऽनुग्रहः स्मृतः । इति भक्त्या चिन्तयतां शुभकारी भवत्यलम् । तत्रापि कुर्वतां द्वेषं तमः प्राप्त्यै तथा भवेदि'ति च ॥ 'अपुनर्भवमात्रात्तु हरिसामीप्यमुत्तमम् । तत्रापि स्पर्शयोग्यत्वं यथा वेदविदो विदुरि'ति पाद्मे ॥३४॥ [39]भूताय सर्वदा-

महान् प्रकृतिः सूक्ष्मरजःसत्त्वतमोमयी । त्वमेव पुरुषोऽध्यक्षः सर्वक्षेत्रविकारवित् ॥३२॥ गृह्यमाणैस्त्वमग्राह्यो विकारैः प्राकृतैर्गुणैः । कोन्विहार्हति विज्ञातुं प्राक्सिद्धं गुणसंस्थितेः ॥ ३३ ॥ तस्मै तुभ्यं भगवते वासुदेवाय वेधसे । आत्मद्योतैर्गुणैश्छन्नमहिम्ने ब्रह्मणे नमः ॥ ३४ ॥ यस्यावतारा ज्ञायन्ते शरीरेष्वशरीरिणः । तैस्तैरतुल्यातिशयैस्तिर्यग्योनिष्वसङ्गतैः ॥ ३५ ॥

### चतुर्दशोऽध्यायः

नागपत्न्य ऊचुः—न्याय्यो हि दण्डः कृतकिल्बिषेऽस्मिंस्तवावतारः खलनिग्रहाय । रिपोः सुतानामपि तुल्यदृष्टेर्धत्से दमं फलमेवानुशंस्यम् ॥ ॥३३॥ अनुग्रहोऽयं भवता कृतो हि नो दण्डोऽसतां ते खलु कल्मषापहः । यद्दन्दशूकत्वममुष्य देहिनः क्रोधोऽपि तेऽनुग्रह एव संमतः ॥ ३४ ॥ कस्यानुभावोऽस्य न देव विद्महे तवाङ्घ्रिरेणुस्पर्शाधिकारः । यद्वाञ्छया श्रीर्ललनाऽचरत्तपो विहाय कामान् सुचिरं धृतव्रता ॥३६॥ न नाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमं न रसाधिपत्यम् । न योगसिद्धीरपुनर्भवं वा वाञ्छन्ति त्वत्पादरजः प्रपन्नाः ॥ ३७ ॥ नमस्तुभ्यं भगवते पुरुषाय

विद्यमानाय ॥३९॥ [40]अप्राकृताय ॥४०॥ [41]कालनाभाय कालाश्रयाय। 'विश्वस्य तदधीनत्वाद्विश्वं विष्णुरुदीर्यते । मूलहेतुत्वतो हेतुः कर्ता प्रातिस्विकं कृते'रित्याग्नेये ॥ ४१ ॥ [46]गुणप्रदीपाय गुणज्ञापकाय। गुणात्मस्थोदयाय । गुणात्मिका प्रकृतिः तस्यां स्थित उदयस्वरूपो हरिः ॥ ४६ ॥ [48]अविश्वाय जीवेभ्योऽन्यस्मै । 'शरीरेषु प्रविष्टत्वाद्विश्वो जीव उदीर्यते । जीवस्य तदधीनत्वाद्विश्वो विष्णुरिति स्मृतः । तस्योत्पत्त्यादिहेतुत्वाद्विश्वहेतुश्च कीर्त्यत'इति मात्स्ये ॥ ४८ ॥ '[49]हरेः स्वरूपशक्तिर्या कालशक्तिरुदीर्यते । सदा सर्वगुणात्मत्वादुर्गा वाप्यवरा ततः । सर्वसंहारकारित्वाद्वायुः सर्वस्य जीवनात् । कालाभिमानिनावेतौ दुर्गावायुश्च कीर्तिताविʼति प्रकाशसंहितायाम् ॥ ४९ ॥ '[50]अन्तःप्रियं बहिश्चेति द्विधा प्रियमुदाहृतम् । अन्तःप्रिया हरेः सन्तः सर्वं चापि हरेः प्रियम् । असन्तश्चापि संहार ईषदन्तः प्रिया इव । तदपेक्षया तथा सन्तो विशेषान्तःप्रिया स्थिता' इति षाड्गुण्ये । 'सुखान्तं प्राप्नुयुर्यस्माद्देवाः शान्ता उदाहृताः । अशान्ता मानुषाः प्रोक्ता विमूढा आसुरा मता'इति प्रकाशसंहितायाम् । कर्मपरीप्सया कर्मप्रवर्तनार्थम् । सर्वशरीरेषु स्थातुः ईहतः प्राणस्य सकाशात् । प्राणसकाशाद्धि कर्म प्रवर्तनमिच्छति भगवान् । 'वायोः सकाशाज्जगतः प्रवृत्तिं कारयत्यजः ।

---

महात्मने। भूतावासाय भूताय पराय परमात्मने ॥३९॥ ज्ञानविज्ञाननिधये ब्रह्मणेऽनन्तशक्तये । अगुणायाविकाराय नमस्तेऽप्राकृताय च ॥ ४० ॥ कालाय कालनाभाय कालावयवसाक्षिणे । विश्वाय तदुपद्रष्ट्रे तत्कर्त्रे विश्वहेतवे ॥ ४१ ॥ नमो गुणप्रदीपाय गुणात्मस्थोदयाय च । गुणप्रत्युपलक्ष्याय गुणद्रष्ट्रे स्वसंविदे ॥ ४६ ॥ परावरगतिज्ञाय सर्वाध्यक्षाय ते नमः । अविश्वाय च विश्वाय तद्द्रष्ट्रे विश्वहेतवे ॥ ४८ ॥ त्वं ह्यस्य जन्म स्थितिसंयमान् विभो गुणैरनीहोऽकृत कालशक्तिधृक् । 'तस्मात्स्वभावात्प्रतिबोधयस्व नः समीक्षयाऽमोघविहार ईहसे ॥४९॥ तस्यैव तेऽमूस्तनवस्त्रिलोक्यां शान्ता अशान्ता उत मूढयोनयः । शान्ताः



णप्राणमतः प्राहुर्विष्णुं वायोरपि प्रभुमि'ति च ॥ ५० ॥ [57]धातु-
णविसर्जनम्। हिरण्यगर्भसकाशाद्गुणभूता सृष्टिरस्य जगतः। प्राधान्येन
ष्णोरेव । 'विष्णुः प्रधानतः स्रष्टा गुणस्रष्टा चतुर्मुख'इति नारदीये॥
॥ ५७ ॥ इति दशमतात्पर्ये चतुर्दशोऽध्यायः ॥ १४ ॥

## पञ्चदशोऽध्यायः

'[12]विष्णुना विष्णुभक्तैश्च ब्रह्मशापोऽनुवर्त्यते । ब्राह्मणानाम-
डार्यै बलिभिः क्षत्रियादिभिः । विष्णोश्च विष्णुभक्तानां शापाद्यान्ति
ोऽखिलम् । तथापि चासुरावेशाच्छपेयुर्हरिमप्यहो । अतस्तु सौभरेः
ापं नात्यवर्तत्खगेश्वरः । अन्यथा तूत्तमानां हि नाधमैः शाप इष्यते ।
ोऽपि दत्तस्त्वधिकैर्नाधमाधिक्यकारणम् । विष्णोरपि वरस्तस्मा-
ाधिक्यं सम्प्रयच्छति । क्रमशः श्रीविरिञ्चादेः कथञ्चित्केनचित्कचित् ।
न दद्याद्धरिस्तादृग्दद्याद्वा बाह्यमेव त्वि'ति ब्रह्माण्डे ॥ १२ ॥ इति
मतात्पर्ये पञ्चदशोऽध्यायः ॥ १५ ॥

## षोडशोऽध्यायः

[23]श्रीदामा कृष्णमुवाह । हरिवंशादिवचनात् । 'बहुमानविरोधे

---

पास्तेह्यधुनाऽवितुः सतां स्थातुश्च ते कर्मपरीप्सयेहतः ॥५०॥ त्वया
मिदं विश्वं धातुर्गुणविसर्जनम् । नानास्वभाववीर्यौजो योनिबीजा-
ाकृति ॥ ५७ ॥

पञ्चदशोऽध्यायः

अत्र प्रविश्य गरुडो यदि मत्स्यान्सखादति । सद्यः प्राणैर्वियुज्येत
मेतद्ब्रवीम्यहम् ॥११॥ तत्कालियः परं वेद नान्यः कश्चित्सलेलिहा ।
ासीद्गरुडाद्भीतः कृष्णेन च विवासितः ॥ १२ ॥

षोडशोऽध्यायः

उवाह कृष्णो भगवान् श्रीदामानं पराजितः । वृषभं भद्रसेनस्तु
ो रोहिणीसुतम् ॥ २३ ॥

तु व्यत्यासः शब्दतोऽर्थतः। कार्योऽनिरुक्तदेवानां गुणसिद्ध्यै न चान्यथा। विष्णुर्ब्रह्म तथा वायुरनिरुक्ताः प्रकीर्तिताः। तत्पत्न्यश्चेतर गुणा व्यत्ययास्तेष्वसंशय' इति ब्रह्मतर्के ॥ २३ ॥ इति दशमतात्पर्ये षोडशोऽध्यायः ॥ १६ ॥ १७ ॥ १८ ॥

## एकोनविंशोऽध्यायः

'[7]श्रीदेवी वेणुमाविश्य रेमे कृष्णमुखाम्बुजे। पपौ च तद्गतं गीतं सुरा इतरभाण्डगा' इति तन्त्रभागवते ॥ ७ ॥ इति दशमतात्पर्ये एकोनविंशोऽध्यायः ॥ १९ ॥ २० ॥ २१ ॥

## द्वाविंशोऽध्यायः

[16]फलरूपः स कर्मण इत्याद्यवान्तरेश्वरविषयम्। 'स्वभावे कर्मणि च यः सत्वादिषु गुणेषु च। स्थितो विष्णुः सर्वकर्ता पृथक्संस्थ सर्वगः। गुणकर्मस्वभावादिशब्दवाच्यश्च केशवः। तेन जातं फ यस्मात्कर्मणः फलमीर्यते। न चासौ कर्मफलवान्नास्य किञ्चिन्न शक्यते। तदन्यावान्तरेशानां तद्वशत्वं यतः सदा। कर्मणः फलरूपत्वमतस्तेषा मुदीर्यते। नान्यकर्मवशत्वं तु तेषां विष्णुं विना क्वचित्। स ब्राह्मणगिर्यादिनामा विष्णुरजः परः ॥ १६ ॥ [18]एतस्मात्कारणात्कृष्ण

---

एकोनविंशोऽध्यायः

इति वेणुरवं राजन्सर्वभूतमनोहरम्। श्रुत्वा व्रजस्त्रियः सर्वा वर्णयन्त्योऽभिरेभिरे॥७॥ गोप्यः किमाचरदयं कुशलं स्म वेणुर्दामोदरा धरसुधासरसाग्रयगेयम्। भुङ्क्ते स्वयं यदवशिष्टरसौघमार्गे हृष्टत्वचोऽश्रु मुमुचुस्तरवः सदर्भाः ॥ १० ॥

द्वाविंशोऽध्यायः

अस्ति चेदीश्वरः कश्चित्फलरूपः स कर्मणः। कर्तारं भजते सोऽपि न ह्यकर्तुः प्रभुर्हि सः ॥ १४ ॥ स्वभावतन्त्रो हि जनः स्वभावमनुवर्तते। स्वभावस्थमिदं सर्वं सदेवासुरमानुषम् ॥ १६ ॥ तस्मात्सुपूजये



शक्रस्य विमदाय तु। गिर्यादिस्थितमात्मानं पूजयामास बल्लवैः ॥१८॥ [11]अत्यल्पस्त्वसुरावेशो देवानां च भविष्यति। प्राणमेकमसौ हित्वाऽऽवेशाश्मसमः स्मृतः। तस्मिन्नप्यसुरावेशे गते प्रकृतिरेव त्वि'ति च ॥ ॥ ३१ ॥ इति दशमतात्पर्ये द्वाविंशोऽध्यायः ॥ २२ ॥ २३ ॥ ॥ २४ ॥

## पञ्चविंशोऽध्यायः

[4]विशुद्धसत्वं विगतशुद्धसत्वम्। यस्मात्त्रिगुणसम्बन्धस्त्वयि न विद्यते। यत्राग्रहणमनुबन्धः। तपोमयं ज्ञानात्मकम् ॥४॥ [5]पुनर्गुणप्रवाहस्य कारणत्वात्तद्धेतवः ॥ ५ ॥ '[7]असतां च सतां चैव हरिरनुशासकः। सतां तु श्रेयसे सैव ह्यनुशास्तिर्भविष्यति। असतां विपरीताय लङ्घयित्वाऽनुशासनमि'त्याग्नेये ॥७॥ '[11]आवेशो वसुदेवादौ देहादानं हरेः स्मृतम्। देहादानं तदन्येषां जन्मेति कवयो विदुः। तथाप्यसुरमोहाय ग्रन्थेषु बहुधैव त्वि'ति पाद्मे ॥ ११ ॥ इति पञ्चविंशोऽध्यायः ॥ २५ ॥ २६ ॥

---

स्वभावस्थः स्वकर्मकृत्। अञ्जसा येन वर्तेत तदेवास्य हि दैवतम् ॥१८॥ श्री शुक उवाच—कालात्मना भगवता शक्रदर्पजिघांसया। प्रोक्तं निशम्य नन्दाद्याः साध्वगृह्णन्त तद्वचः ॥ ३१ ॥

पञ्चविंशोऽध्यायः

इन्द्र उवाच—विशुद्धसत्त्वं तव धाम शान्तं तपोमयं ध्वस्तरजस्तमस्कम्। मायामयोऽयं गुणसम्प्रवाहो न विद्यते तेऽग्रहणानुबन्धः ॥ ४॥ कुतो नु तद्धेतव ईश मन्युलोभादयो येऽबुधलिङ्गभावाः। अथापि दण्डं भगवान् बिभर्ति धर्मस्य गुप्त्यै खलनिग्रहाय ॥ ५ ॥ ये मद्विधाः ज्ञा जगदीशमानिनस्त्वां वीक्ष्य कालेऽभयमाशु तं मदम्। हित्वाऽऽर्यमार्गं प्रभजन्त्यपस्मया ईहा खलानामपि तेऽनुशासनम् ॥ ७ ॥ स्वच्छन्देनात्तदेहाय विशुद्धज्ञानमूर्तये। सर्वस्मै सर्वबीजाय सर्वभूतात्मने नमः ॥११॥

## सप्तविंशोऽध्यायः

'[13]कृष्णकामास्तदा गोप्यस्त्यक्त्वा देहं दिवं गताः। सम्यक्कृष्णं परब्रह्म ज्ञात्वा कालात्परं ययुः। पूर्वं च ज्ञानसंयुक्तास्तत्रापि प्रायशस्तथा। अतस्तासां परं ब्रह्म गतिरासीन्न कामतः। न तु ज्ञानमृते मोक्षो नान्यः पन्थेति हि श्रुतिः। कामयुक्ता तदा भक्तिर्ज्ञानं चाती विमुक्तिगाः। अतो मोक्षेऽपि तासां च कामो भक्त्याऽनुवर्तते। अतो दकत्वेन सदा द्वेषिणामधरं तमः। मुक्तिशब्दोदितं चैद्यप्रभृतौ द्वेषभागिनः। भक्तिभागी पृथङ्मुक्तिमगाद्विष्णुप्रसादतः। कामस्त्वशुभकृच्चापि भक्त्या विष्णोः प्रसादकृत्। द्वेषिजीवयुतं चापि भक्तं विष्णुर्विमोचयेत्। अहोऽतिकरुणा विष्णोः शिशुपालस्य मोक्षणादि'ति स्कान्दे ॥ जगत्प्रपितामहे जारबुद्धिर्न युक्ता तथापि। ब्रह्मतया सम्यक्। 'श्रेष्ठो भवांस्तनुभृतां सुहृदन्तरात्मा'। 'रमाया दत्तक्षणमि'ति वचनात् ॥ १३ ॥ [15]कामिनः कामित्वं क्रोधिनः क्रोधित्वमेव सर्वदा भवतीति तन्मयता। 'विमुक्तावपि कामिन्यो विष्णुकामा व्रजस्त्रियः। द्वेषिणश्च हरौ नित्यं द्वेषेण तमसि स्थिता' इति च। 'भक्त्या हि नित्यकामित्वं न तु मुक्तिं विना भवेत्। अतः कान्ततया वापि मुक्तिर्भक्तिमतां हरौ। स्नेहभक्ताः सदा देवाः कामित्वेनाप्सरस्त्रियः। काश्चित्काश्चिन्न कामेन भक्त्या केवलयैव तु। मोक्षमायान्ति नान्येन भक्तिं योग्यां विना कचिदि'ति पाद्मे। 'भक्त्या वा कामभक्त्या वा मोक्षो नान्येन केनचित्। कामभक्त्याऽप्सरस्त्रीणामन्येषां नैव कामतः। उपास्यः श्वशुरत्वेन देवस्त्रीणां जनार्दनः। जारत्वेनाप्सरस्त्रीणां कासांचिदिति योग्यता। योग्योपास्तिं विना नैव मोक्षः कस्यापि सेत्स्यति। अयोग्योपासनाकर्तुरनर्थश्च भविष्यति। तस्मात्तु योग्यतां ज्ञात्वा हरेः कार्यमुपासनमि'ति भद्रिकायाम्। 'पतित्वेन श्रियोपास्यो ब्रह्मणा मे पितेति च। पितामहतयाऽन्येषां त्रिदशानां जनार्दनः। प्रपितामहो मे भगवानिति सर्वजनस्य तु। गुरुः श्रीब्रह्मणोर्विष्णुः सुराणां च गुरोर्गुरुः। मूलभूतो गुरुः सर्वजनानां पुरुषोत्तमः। गुरुर्ब्रह्माऽस्य जगतो दैवं विष्णुः सनातनः। इत्येवोपासनं कार्यं नान्यथा तु कथञ्चने'ति वाराहे ॥ १५ ॥ इति दशमतात्पर्ये सप्तविंशोऽध्यायः ॥ २७ ॥ २८ ॥ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

## त्रयस्त्रिंशोऽध्यायः

'[24]मानवो बदरः सिंधुः शशिनस्तु त्रिनामकम्। यो वेद मुच्यते रोगैर्विष्णुनाम्नेव संसृतेरि'ति स्कान्दे ॥ २४ ॥ इति दशमतात्पर्ये त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ३४ ॥

---

सप्तविंशोऽध्यायः

तमेव परमात्मानं जारबुद्ध्याऽपि सङ्गताः। जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः ॥११॥ राजोवाच—कृष्णं विदुः परं कान्तं न तु ब्रह्मतया मुने। गुणप्रवाहोपरमस्तासां गुणधियां कथम् ॥१२॥ श्री शुक उवाच उक्तं पुरस्तादेतत्ते चैद्यः सिद्धिं यथागतः। द्विषन्नपि हृषीकेशं किमुताधोक्षजप्रियाः ॥ १३ ॥ नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप। अव्यक्तस्याप्रमेयस्य निर्गुणस्य गुणात्मनः ॥१४॥ कामं क्रोधं भयं मोहं मैत्रीं सौहृदमेव वा। नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते ॥ १५ ॥ न चैवं विस्मयः कार्यो भवता भगवत्यजे। योगेश्वरेश्वरे कृष्णे यत एतद्विमुच्यते ॥ १६ ॥

त्रयस्त्रिंशोऽध्यायः

मदविघूर्णितलोचन ईषन्मानदः स्वसुहृदां वनमाली। बदरपाण्डुवदनो मृदुगण्डम्मण्डयन् कनककुण्डललक्ष्म्या ॥२४॥

## पञ्चत्रिंशोऽध्यायः

'[24]आदिनो राक्षसाः प्रोक्तास्तदन्तत्वाज्जनार्दनः । आद्यन्त इति विज्ञेयः परेशो ब्रह्मणीशनादि'ति ब्राह्मे ॥ २४ ॥ इति दशमतात्पर्ये पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

## षट्त्रिंशोऽध्यायः

[11]तत्सन् तथैवसन् ॥ ११ ॥ [12]शुम्भन्ति शोभयन्ति । 'शुम्भनं शोभनं शुम्भं शुभपर्यायवाचका'इत्यभिधानम् ॥ १२ ॥ [30]वैन्यपार्थबलेशादावाविष्टं पुरुषोत्तमम् । अपेक्ष्य तद्गुणाः सर्वे तज्जीवानामभाविनः । अप्युच्यन्ते पुराणेषु विशेषात्सन्निधिर्यत'इति माहात्म्ये ॥ ॥ ३० ॥ इति दशमतात्पर्ये षट्त्रिंशोऽध्यायः ॥ ३६ ॥ ३७ ॥

---

### पञ्चत्रिंशोऽध्यायः

त्वामीश्वरं स्वाश्रयमात्ममायया विनिर्मिताऽशेषविशेषकल्पनम् । क्रीडार्थमाद्यन्तमनुष्यविग्रहं नतोऽस्मि धुर्यं यदुवृष्णिसात्वताम् ॥ २४ ॥

### षट्त्रिंशोऽध्यायः

य ईक्षिताऽहं रहितोऽप्यसत्सतोः स्वतेजसाऽपास्ततमोऽभिदाभ्रमः । स्वमाययाऽऽत्मन् रचितेषु तत्सन्प्राणादिभिर्जन्तुषु भाति चित्रधा ॥११॥ यस्याखिलामीवहभिः सुमङ्गलैर्वाचो विमिश्रा गुणकर्मजन्मभिः । प्राणन्ति शुम्भन्ति पुनन्ति वै जगद्यास्तद्विरक्ताः स्युरशोभना मताः ॥ १२ ॥ पदानि तस्याखिललोकपालकिरीटचूडामणिपादरेणोः । ददर्श गोष्ठे क्षितिकौतुकानि विलक्षितान्यब्जयवाङ्कुशाद्यैः ॥ २४ ॥ प्रधानपुरुषावाद्यौ जगद्धेतू जगत्पती । अवतीर्णौ जगत्यर्थे स्वांशेन बलकेशवौ ॥ ३० ॥ पृष्ट्वाऽथ स्वागतं तस्मै निवेद्य परमासनम् । प्रक्षाल्य विधिवत्पादौ मधुपर्कार्हमाहरत् ॥ ३६ ॥





## अष्टत्रिंशोऽध्यायः

[3]तवाङ्गेभ्यो भूताः ॥ ३ ॥ [4]अन्यात्मतया गृहीताः । मत्तोऽन्ये जीवात्मान एत इति भगवता गृहीताः । 'अहं परो हि मद्भिन्ना जीवात्मानोऽल्पबुद्धयः । मद्वशाः सर्व एवेति ब्रह्मादीन्मन्यते हरिरि'ति स्कान्दे ॥ 'यथा हरिः स्वमात्मानं वेद तद्वद्रमापि न । ब्रह्मा च कुत एवान्ये विदन्त्येव तथापि त्वि'ति माहात्म्ये ॥ ४ ॥ '[5]स्थितो ब्रह्मादिदेवेषु साधिभूतेषु चेश्वरः । आत्मशब्दोदितनरेष्वपि यस्माज्जनार्दनः । साध्यात्मः साधिभूतश्च साधिदैवेति चोच्यत'इत्यध्यात्मे ॥ ॥ ५ ॥ '[6]सर्वदेवेष्वपि हरिः सर्वदेवनियामकः । नामवान्सर्वदेवानां सर्वपूर्जा तथाऽत्यसावि'ति च ॥६॥ [13]अविद्यया भगवदिच्छया ॥१३॥ [14]त्वयैव प्रकल्पिताः । 'विष्णोरङ्गसमुद्भूता विष्णोरङ्गानि देवताः । उच्यन्ते सर्ववेदेषु स्वरूपा भेदिनोऽपि त्वि'ति च ॥१४॥ '[17]भृतामेव बिभर्तीशो ह्यवतारतनुं सदा । बिभर्तीत्युच्यतेऽथापि मोहाय व्यत्यय-

---

### अष्टत्रिंशोऽध्यायः

भूस्तोयमग्निः पवनः खमादिर्महानजादिर्मन इन्द्रियाणि । सर्वेन्द्रियार्था विबुधाश्च सर्वे ये हेतवस्ते जगतोऽङ्गभूताः ॥ ३ ॥ नैते स्वरूपं विदुरात्मनस्ते अजादयोऽन्यात्मतया गृहीताः । अजोऽनुबद्धः सगुणैरजाया गुणात्परं वेद न ते स्वरूपम् ॥ ४ ॥ त्वां योगिनो यजन्त्यद्धा महापुरुषमीश्वरम् । साध्यात्मं साधिभूतं च साधिदैवं च साधवः ॥ ५ ॥ त्रय्या च विद्यया केचित्त्वां वै वैतानिका द्विजाः । यजन्ते विततैर्यज्ञैर्नानारूपामराख्यया ॥६॥ तुभ्यं नमस्तेऽस्त्वविषक्तदृष्टये सर्वात्मने सर्वधियां च साक्षिणे । गुणप्रवाहोऽयमविद्यया सकृत्प्रवर्तते देव नृतिर्यगात्मसु ॥ ॥ १३ ॥ अग्निर्मुखं तेऽवनिरङ्घ्रिरीक्षणं सूर्यो नभो नाभिरथो दिशः श्रुतिः । द्यौः कं सुरेन्द्रास्तव बाहवोर्णवः कुक्षिर्मरुत्प्राणबलं प्रकल्पितम् ॥ ॥१४॥ यानियानीह रूपाणि क्रीडनार्थं बिभर्षि हि । तैरामृष्टशुचो लोका

पेक्षये'ति तत्त्वनिर्णये ॥ १७ ॥ '[22]प्रद्युम्ने चानिरुद्धे च बलदेवे च केशवः। सन्निधानं विशेषेण करोति जगतां पतिः। तत्र कृष्णः स्वयं विष्णुः परमानन्दलक्षणः। पाराशर्यश्च भगवान्स्वयमेव जनार्दन' इति च ॥ 'तत्तद्गतस्यैव हरेस्तत्तन्नामानि चाञ्जसा। औपचारिकनामानि तदन्येषामिति स्थितिरि'ति शब्दनिर्णये ॥ २२ ॥ इति दशमतात्पर्ये अष्टत्रिंशोऽध्यायः ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥

## त्रिचत्वारिंशोऽध्यायः

(वि. अ. ९४ श्लो. ५०) 'सर्वोत्तमोऽपि भगवान् गुणा(ण)भावं जनार्दनः। दर्शयेद्वसुदेवादेरात्मनो जीवतामपि। अज्ञाऽशक्त्यादिभावस्तु कुतस्तस्याखिलेशितुः। कुतो दोषाः सर्वगुणपूर्णस्यानन्दवारिधेरि'ति वामने ॥ २, ९ ॥ इति दशमतात्पर्ये त्रिचत्वारिंशोऽध्यायः ॥ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ पूर्वार्धः सम्पूर्णः ॥

---

मुदा गायन्ति ते यशः ॥ १७ ॥ नमस्ते वासुदेवाय नमः सङ्कर्षणाय च। प्रद्युम्नायानिरुद्धाय सात्वतां पतये नमः ॥ २२ ॥

### त्रिचत्वारिंशोऽध्यायः

उवाच पितरावेत्य साग्रजः सात्वतर्षभः। प्रश्रयावनतः प्रीणन्नम्ब तातेति सादरम् ॥ २ ॥ नास्मत्तो युवयोस्तात नित्योत्कण्ठितयोरपि। बाल्यपौगण्डकैशोराः पुत्राभ्यामभवन्क्वचित् ॥ ३ ॥ न लब्धो दैवहतयोर्वासो नौ भवदन्तिके। ये बालाः पितृगेहस्थाविन्दते ललिता मुदम् ॥ ४ ॥ सर्वार्थसम्भवो देहो जनितः पोषितः पुनः। न तयोर्याति निर्वेशं पित्रोर्मर्त्यः शतायुषा ॥ ५ ॥ यस्तयोरात्मजः कल्प आत्मना च धनेन च। वृत्तिं न दद्यात्तं प्रेत्य स्वमांसं खादयन्ति हि ॥ ६ ॥ मातरं पितरं वृद्धं भार्यां साध्वीं सुतं शिशुम्। गुरुं विप्रं प्रपन्नं च कल्पोऽबिभ्रच्छ्वसन्मृतः ॥ ७ ॥ तन्नावकल्पयोः कंसान्नित्यमुद्विग्नचेतसोः। मोघमेते व्यतिक्रान्ता दिवसा वामनर्चतोः ॥ ८ ॥ तत्क्षन्तुमर्हथस्तात मातर्नौ परतन्त्रयोः। अकुर्वतोर्वां शुश्रूषां क्लिष्टयोर्दुर्हृदोर्भृशम् ॥ ९ ॥



# दशमः स्कन्धः (उत्तरार्धः)

## द्विपञ्चाशोऽध्यायः

श्रीवेदव्यासाय नमः ॥ '[21]सर्वावताराभिन्नोऽपि सर्वशक्तिरपि स्वयम्। पूज्यपूजकनीचोच्चं मोहनाय दुरात्मनाम्। अखण्डैकरसो विष्णुर्दर्शयेत्तत्र तत्र ही'ति षाड्गुण्ये ॥२१॥ इति दशमतात्पर्ये द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

## त्रिपञ्चाशोऽध्यायः

'[8]बहूनि स्थानजातानि कृष्णस्य क्षीरसागरे। कानिचिन्मुक्तगम्यानि नामुक्तैस्त्रिदशैरपि। गन्तुं शक्यान्यथान्यानि गम्यान्यन्यैरपि क्वचित्। तत्र देवाश्च योगीन्द्रा भक्ताश्चान्ये जनार्दनम्। गत्वाऽर्चयन्ति देवेशं बलिस्तत्रागमत्क्वचित्। तस्य तत्रासुरावेशात्पापबुद्धिरजायत। तन्नाशत्यर्थं जगन्नाथः शिश्ये सुप्तवदव्ययः। तदा स पापया बुद्ध्या किरीटमहरत्प्रभोः। तं जित्वा गरुडस्तत्तु हृत्वा गोमन्तमाव्रजत्।

---

### दशमः स्कन्धः (उत्तरार्धः)

#### द्विपञ्चाशत्तमोऽध्यायः

प्रणामं चक्रतुर्वीरौ यथान्यायमतन्द्रितौ। इदं चोवाच भगवान् कृष्णस्तं मुनिपुङ्गवम् ॥२१॥ नमस्ते भार्गव श्रीमन् जामदग्न्य तपोधन। रामकृष्णौ स्मृतावावां कच्चित्ते श्रवणं गतौ ॥ २२ ॥ इत्युक्तस्तेन धर्मात्मा वासुदेवेन भार्गवः। निरीक्ष्य माधवौ प्राह प्रीत्युत्फुल्लमुखेक्षणः ॥ २३ ॥ स्वागतं ते यदुश्रेष्ठ साग्रजाय महात्मने। जाने त्वां यदुपूत्पन्नं भगवन्तमधोक्षजम् ॥ २४ ॥ कार्याणां कारणं पूर्वं जगतामादिपूरुषम्। नमस्ते पुण्डरीकाक्ष विश्वलोकैककारण ॥ २५ ॥

#### त्रिपञ्चाशदध्यायः

एतस्मिन्नेव काले तु क्षीरोदे सागरोत्तमे। निवासे देवदेवस्य शङ्खचक्रगदाभृतः ॥७॥ उपासीनो महाबाहुः श्रीमान्वैरोचनो बलिः। जहार

तत्र कृष्णस्य शिरसि किरीटममुचत्प्रभोरि'ति माहात्म्ये ॥ ८ ॥
[35]ब्रह्मस्थो ब्रह्मनामाऽसौ रुद्रस्थो रुद्रनामकः। तयोरपि नियन्तैक
स्वयमेव जनार्दन'इति स्कान्दे ॥ ३५ ॥ इति दशमतात्पर्ये त्रिपञ्चा
शोऽध्यायः ॥ ५३ ॥ ५४-७० ॥

## एकसप्ततिरध्यायः

[9]नीतच्छित् भगवता प्राप्तभेदः ॥ ९ ॥ इति दशमतात्पर्ये एक
सप्ततिरध्यायः ॥ ७१ ॥

## द्विसप्ततिरध्यायः

[11-13]अम्मयाद्यभिमानिनो देवाः उरुकालेनैव पुनन्ति। गुरूपदे
प्रापयित्वा। भेदकृतः अन्यथाज्ञानिनः। विपश्चितस्तु प्रत्यक्षदर्शना
दन्यथाज्ञानमेवापनयन्ति। 'प्राकृतैर्दृश्यमानं तु न द्रवं तीर्थमुच्यते।
देवाश्च न शिलामात्राः किन्तु तत्रान्तरस्थिताः। गुरूपदेशं तु विना
ते दृश्याः कथञ्चन। न ज्ञायते च तद्रूपमन्यथाज्ञानिनां च ते।
कोपाच्छापं प्रयच्छन्ति तस्माद्गुरुमुपाव्रजेत्। तस्मात्तीर्थानि देवाश्च नित्

---

देवदेवस्य किरीटं रत्नचित्रितम् ॥ ८ ॥ हिरण्यगर्भत्वमुपेत्य मूले सृजस
शेषं भुवनं स एव। नारायणात्मन्परिपासि भूयो जहार चान्ते भगव
शिवात्मना ॥ १५ ॥ रथ्याचत्वरवीथीभिर्यथावास्तु विनिर्मितम्। सु
द्रुमलतोद्यानविचित्रोपवनान्वितम् ॥ ३५ ॥

### एकसप्तत्यध्यायः

सत्यभामोवाच—यो मे सनाभिवधतप्तहृदा ततेन लिप्ताभिशापमप
मार्ष्टुमुपाजहार। जित्वर्क्षराजमथ रत्नमदात्स तेन नीतच्छिदादिशत
प्रभवेऽपि दत्ताम् ॥ ९ ॥

### द्विसप्तत्यध्यायः

नह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः। ते पुनन्त्युरुकाले
दर्शनादेव साधवः ॥ ११ ॥ नाग्निर्न सूर्यो न च चन्द्रतारकं न भूर्जलं



विद्वत्सु संस्थिता'इति गारुडे ॥ 'भिन्नस्याभेदतो दृष्टिरपि भेददृशि-
ता। वस्तुयाथात्म्यतस्तस्य भिन्नत्वादिति सूरिभिः। अन्यथाज्ञान-
वातो भेदज्ञानं विनिन्दितम्। न विद्यमानभेदस्य दर्शनं निन्दितं
चित्। शिला देवइति ज्ञानं देवोऽस्मीति तु या दृशिः। उत्तम-
धमत्वेन नीचस्योच्चतया दृशिः। असमस्य समत्वेन समस्यासम-
र्शनम्। द्रवं तीर्थमितिज्ञानं देहोऽहमिति या मतिः। असद्भार्यादिपु
ीयदर्शनं चैवमादिकम्। भेदज्ञानमिति प्रोक्तं या चान्याप्यन्यथा-
मतिः। तस्मात्तदपहानाय संसेव्या गुरवो वराः। तत्रस्था देवताः
र्वाः प्रीयन्ते गुरुपूजया। नैवान्यथैषां प्रीतिः स्याद्गुरूक्तिमपहाय तु।
तस्मात्पूजाविशेषेण सतां कार्या नृणां सदा। भक्तिस्तु तारतम्येन
विशिष्टे त्वधिका भवेदि'ति स्कान्दे ॥ 'उत्तमा अपि देवेशा अवरा-
न्विदुषो नृणाम्। पूजायै सम्प्रयच्छन्ति परोक्षत्वप्रिया यतः। तेषु
स्थित्वा स्वयं पूजां गृह्णन्त्यनुपमां सदा। ज्ञानानि च प्रयच्छन्ति तस्मा-
देवंविदा सदा। पूजिताः स्युः सुरवराः सब्रह्माणः सकेशवा'इति
वामने ॥ ११-१३ ॥ [19]हृदयं प्रियं हृद्ययनात् ॥ १९ ॥ इति
दशमतात्पर्ये द्विसप्ततिरध्यायः ॥ ७२ ॥ ७३ ॥ ७४ ॥

## पञ्चसप्ततिरध्यायः

[38]भवानेव भवतः सदृशः ॥ ३८ ॥ [39]नृपपदं नृपशब्दवाच्य-

---

सनोऽथ वाङ्मनः। उपासिता भेदकृतो हरन्त्यघं विपश्चितो घ्नन्ति
हूर्तसेवया ॥ १२ ॥ यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु
म इज्यधीः। यत्तीर्थबुद्धिश्च जलेन कर्हिचिज्जनेष्वभिज्ञेषु स एव
गोखरः ॥ १३ ॥ ब्रह्म ते हृदयं शुक्लं तपःस्वाध्यायसंयमैः। यत्रोपलब्धं
व्यक्तमव्यक्तं च ततः परम् ॥ १९ ॥

### पञ्चसप्तत्यध्यायः

रुक्मिण्युवाचः—नन्वेतदेवमरविन्दविलोचनाह यद्वै भवान्न भवतः
सदृशो विभूम्नः। क्व स्वे महिम्न्यभिरतो भगवांस्त्र्यधीशः क्वाहं गुणप्रकृति-
गृहीतपादा ॥३८॥ सत्यं भयादिव गुणेभ्य उरुक्रमान्तः शेते समुद्र-

मात्रम् । न तु मुख्यतो नृपालकत्वम् । अन्धन्तमःप्रति विधुतम् ॥३९॥ [40]तवेहितमनु मे ईहितानि भवन्ति ॥ ४० ॥ [41]यतः किञ्चिन्मा नास्ति किन्तु सर्वमेवास्ति ॥ ४१ ॥ [42]फलात्मा सुखात्मा । अतए पुरुषैरर्थ्यस्वरूपः । तेषां भवतश्च समुदितः समो गुणो नास्ति । य कोऽपि । त्रय्यां च रतयोः । वेदोक्तकर्तृत्वेन सुमतीनां त्रयीरतत्वम् प्रतिपाद्यत्वेन भवतः । सुखदुःखिनोः । केवलं परिपूर्णसुखो भवान् भगवज्ज्ञानपर्यन्तं दुःखिनस्ते । 'अल्पसम्पूर्णशक्तित्वादल्पपूर्णसुखत्वतः अल्पसम्पूर्णदर्शित्वान्न साम्यं जीवकृष्णयोरि'ति ब्रह्माण्डे ॥ त्रय्यां चेति चशब्दः स्मृतिष्वपीति ॥ ४२ ॥ [43]अब्जो ब्रह्मा । 'सोऽब्ज ए पुरुषं समुद्धृत्यामूर्च्छयदि'ति श्रुतिः । 'अब्जः सम्भूतो हिरण्यग इत्यष्टावि'ति च ॥ ४३ ॥ [46]सन्मुखरितं सद्भिः प्रधानीकृतम् मर्त्याशिषोरुभयं जनं प्रति अर्थोऽयमिति विविक्तदृष्टिः । कामरू त्वामविगणय्य ॥ ४६ ॥ [47]भ्रमः तिरश्चं यस्याः सा भ्रमतिः तस्या भ्रमत्याः । विपरीतज्ञानिनां भक्षकाया इत्यर्थः । श्रुतिभिः प्रमाणेन

---

उपलम्भनमात्र आत्मा। योऽनित्यकेन्द्रियगुणैः कृतविग्रहस्त्वं त्वत्सेव नृपपदं विधुतं तमोऽन्धम् ॥३९॥ त्वत्पादपद्ममकरन्दजुषां मुनीनां व स्फुटं नृपशुभिर्ननु दुर्विभाव्यम् । यस्मादलौकिकमिवेहितमीश्व भूमंस्तवेहितमथो अनु मे भवन्ति ॥ ४० ॥ निष्किञ्चनो ननु भवा यतोऽस्ति किञ्चिद्यस्मै बलिं बलिभुजोऽप्यहरन्त्यजाद्याः । न त्वा वि न्त्यसुतृपोऽन्तिकमाढ्यतान्धाः प्रेष्ठः सतां बलिभुजामपि योऽन्तरास्से ॥४ त्वं वै समस्तपुरुषार्थमयः फलात्मा यद्वाञ्छया सुमतयो विसृज कृत्स्नम । तेषां विभो समुदितो भवतः प्रसादस्त्रय्याश्च यश्च रतयोः सु दुःखिनोर्न ॥ ४२ ॥ त्वं न्यस्तदण्ड मुनिभिर्गदितानुभाव आत्मात्म जगतामिति मे वृतोऽसि। मुक्त्वा भवद्भ्रवदुदीरितकालगन्धध्वस्ताशि ऽब्जभवनाकपतीन् कुतोऽन्यान् ॥ ४३ ॥ का स्त्री वृणीत तव पादसरो गन्धमाघ्राय सन्मुखरितं जनतापवर्गम् । लक्ष्म्या लयन्त्वविगण गुणालयाढ्यं मर्त्याशिषोरुभयमर्थविविक्तदृष्टिः ॥ ४६ ॥ तं त्वाऽनु



'अभ्रमा भ्रमतामत्री या देवैरपि पूज्यते । तस्यै नमोऽस्तु ते देव्यै विष्णुवक्षस्थलाश्रय' इति नारदीये ॥ ४७ ॥ [48]खरगोऽश्वबिडाल-वत्स्त्रीणां भृत्याः ॥ ४८ ॥ '[49]आनन्दश्मश्रुरानन्दकेश आपादनखात्सर्व एवानन्दः । स एष विष्णुरजोऽमृतोऽचलो ब्रह्म य एवमेवं वेद । आनन्द एव स भवत्यानन्दस्य सार्ष्टितां सलोकतां सायुज्यमाप्नोती'ति माध्यन्दिनायनश्रुतिः ॥४९॥ [50]अनतिरिक्तदृष्टेः भक्त्यनुसार्यनुग्रहस्य । 'य एष देवः परोऽजरोऽमरस्तं वा एनमाहुर्भक्त इति । भक्त्या हि सोऽनुगृह्णाति । भक्त्यैवेदं वृणुते श्रियं विरिञ्चं रुद्रं इन्द्रमापिपीलिकम् । नाभक्तं वृणुते नाभक्तमनुगृह्णाति । यावान्वाव स भक्तस्तावच्छ्रेष वृणुते तावच्छ्रेषोऽनुगृह्णाति । नाधिकं वृणुते नाधिकमनुगृह्णाति । नावरं वृणुते नावरमनुगृह्णाति । अथातो भक्तिमीमांसा भवति । युवा स्यात्साधु-युवाऽध्यायकः । आशिष्ठो द्रढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तेन पूर्णा स्यात् । स एको मानुषो भक्तो भवति । ते ये शतं मानुषा भक्ता एतावान्मानुषो गन्धर्वः । ते ये शतं मानुषा गन्धर्वाः एतावान् देवगन्धर्वः । ते ये शतं देवगन्धर्वाः एतावांश्चिरलोकः पैतृकः । ते ये शतं चिरलोकाः पैतृकाः । एतावांश्चिरलोको दैविकः । ते ये शतं चिरलोका दैविकाः । एतावत्यतात्विकदेवता । ते ये शतमता-त्विक्यो देवताः । एतावती तात्विकदेवता । (या)स्ते ये शतं तात्विक्यो देवताः । एतावान्पुरुहूतः । ते ये शतं पुरुहूताः । एतावान् वाव रुद्रः

---

भजं जगतामधीशमात्मानमत्र च परत्र च कामरूपम् । स्यान्मे तवाङ्घ्रि-शरणं श्रुतिभिर्भ्रमत्या ये वै भजन्ति उत यान्त्यनृतापवर्गम् ॥४७॥ कस्याः गुरच्युत नृपा भवतोपदिष्टाः स्त्रीणां गृहेषु खरगोऽश्वबिडालभृत्याः । कर्णमूलमरिकर्शन नोपयायाद्युष्मत्कथा मृडविरिञ्चसभासु गीता ॥४८॥ त्वक्श्मश्रुरोमनखकेशपिनद्धमन्तर्मांसास्थिरक्तकृमिविड्भरितान्त्रवीतम् । जीवच्छवं भजति काममतिर्विमूढा या ते पदाब्जमकरन्दमजिघ्रती स्त्री ॥ ॥४९॥ अस्त्यम्बुजाक्ष मम ते चरणानुराग आत्मन् रतस्य मयि चानतिरिक्त-

ये ते शतं रुद्राः । एतावान्वाव विरिञ्चस्ते ये शतं विरिञ्चाः । एतावती श्रीर्भक्त्या भवति । तद्यावती वाव भक्तिस्तावज्ज्ञानं भवति । यावद्वाव तज्ज्ञानं तावदानन्दो मौक्तिकोऽथैष एव परमानन्दो योऽसौ हरिर्विश्वो विनोदोऽपनोदः संस्का(हा)रको विकारकोऽधिकारक एतस्यैवानन्दस्या-न्यानि भूतानि मात्रामुपजीवन्ती'ति पौत्रायणश्रुतिः ॥ 'मिलितौ वा एतौ भगवतो यदनुग्रहश्च भक्तिश्च यो वानुग्रही स भक्तो यो भक्तः सोऽनु-ग्रही । यो वानुगृहीतो ब्रह्मणा स भक्तो यो भक्तस्तं वा ब्रह्मानुगृह्णाति यावान्वै ब्रह्मणोऽनुग्रहस्तावती भक्तिर्यावती भक्तिस्तावान्वै ब्रह्मणोऽनुग्रहः । प्रकृतौ वै ब्रह्मणोऽनुग्रहः परमस्तदवरो वाव महति तदवरोऽथ रुद्रे तदवरः पुरुहूते । अथ देवर्षिपितृषु मनुष्येष्वि'ति धर्मश्रुतिः ॥ तस्यामेव रजस उद्रेचनादुपात्तरजोऽतिमात्रत्वम् । 'अथ त्रिगुणा ह्येव प्रकृतिरगुणो वाव विष्णुः स यदा अरजा रजोऽस्या उद्वर्धयत्येषा वाव सृष्टिः । स यदा ह्यसत्वः सत्वमुद्वर्धयत्येषा वाव स्थितिः । स यदा ह्यतमास्तमोऽस्या उद्वर्धयत्येष वाव लयो नैनमेते गुणा अभ्युपस्पृशन्ति । नैष एतान्गुणा-नभ्युपस्पृशत्यगुणो ह्येष भवति । अत्रैष श्लोको भवति । निर्गुणस्य गुणादानं प्रकृतेर्गुणवर्धनम् । न कदाचिद्गुणैरेष स्पृश्यते परमो हि स' इति चाक्रायणश्रुतिः ॥ ५० ॥ [51]कन्याप्रदानवादे रतिर्यथा नालीकं भवति प्रायः तथा ते वचः क्वचिदपि नालीकं भवत्येव ॥ ५१ ॥ [52]यामसतीं बुधो न बिभृयात् । यां च तां बिभ्रद्दृष्टादृष्टच्युतो भवति । तस्या अपि पुंश्चल्यास्त्वयि मनो नवं नवमभ्येति । 'अमुग्धैव तु मुग्धेव त्वदुःखा दुःखितेव च । श्रीर्दर्शयेद्धरिश्चैव नैवैतौ मोहदुःखिनौ । मिथोऽपि तादृग्वचनमाकारं चैव लीलया । दर्शयन्तौ नृणां मोह-

---

दृष्टेः । यर्ह्यस्य वृद्धय उपात्तरजोऽतिमात्रो मामीक्षसे तदु ह नः परमानु-कम्पा ॥ ५० ॥ नैवालीकं भरत्येव वचस्ते मधुसूदन । अम्बाया इव हि प्रायः कन्यावादरतिः क्वचित् ॥ ५१ ॥ मुग्धायाश्चापि पुंश्चल्या मनो





र्यास्तां शास्त्रदर्शनादि'ति कापिलेये ॥५२॥ इति दशमतात्पर्ये पञ्च-सप्ततिरध्यायः ॥ ७५ ॥

## षट्सप्ततिरध्यायः

[6]गात्रान्तराण्यप्यपिदधुः । पिधातव्येभ्योऽन्यान्यपि । येषां पिधानेन क्लेशो भवत्यात्मनः । निजभर्तुरप्यपिदधुः । निर्लज्जा इत्य-कामो भवत्यसाविति भयात् ॥ ६ ॥ '[50]न स्नेहभङ्गो देव्यास्तु न भयं केशवस्य तु । स्नेहभीत इवाथापि नोचे रुग्मिवधे हरिरि'ति ब्रह्माण्डे ॥ ॥ ५० ॥ इति दशमतात्पर्ये षट्सप्ततितमोऽध्यायः ॥ ७६–७९ ॥

## अशीतितमोऽध्यायः

[15]अजितं जरासन्धं भगवत एव श्रुत्वा । तथाहि सभापर्वणि पश्चादिग्विजयोक्तेः । 'पूर्वाः कथाः परं ब्रूयुः पराः पूर्वं तथैव च । मोहनार्थाय दुष्टानां सर्वं व्यत्यासयिष्यते । विस्तारे तु यदुक्तं स्यात्तद्ग्राह्य-मविरोधतः । सङ्क्षेपोक्तविरोधे तु गुणोक्तिश्च सतां यथे'ति शब्द-निर्णये । 'जरासन्धं निहत्यैव पाण्डवैस्तु दिशो जिताः । प्रसादा-द्वासुदेवस्य राजसूयः क्रतुः कृत' इति मात्स्ये ॥ १५ ॥ इति दशम-

---

भ्येति नवं नवम् । बधोऽसतीं न बिभृयात्तां बिभ्रदुभयच्युतः ॥ ५२ ॥

षट्सप्तत्यध्यायः

रामा गृहे विरहतः पुरतः कराभ्यां बद्धेक्षणाः स्वदयितस्य मुदा ह्यस्यः । गात्रान्तराण्यपि दधुर्निजपूरुषस्य क्लेशावहान्यपि तदङ्गज-भीताः ॥ ६ ॥ निहते रुक्मिणि श्याले नाब्रवीत्साध्वसाधु वा । रुक्मिणीबलयो राजन् स्नेहभङ्गभयाद्धरिः ॥ ५० ॥

अशीतितमाध्यायः

तद्देवदेव भवतश्चरणारविन्दसेवानुभावमिह पश्यतु लोक एषः । ये वां भजन्ति न भजन्त्यपि वोभयेषां निष्ठां प्रदर्शय विभो कुरुसृञ्जयानाम् ॥ ॥ श्रुत्वाऽजितं जरासन्धं नृपतेर्ध्यायतो हरिः । आहोपायं तमेवाद्य उद्धवो यमुवाच ह ॥ १५ ॥

तात्पर्ये अशीतितमोऽध्यायः ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ॥ ८५ ॥

## षडशीतितमोऽध्यायः

'[38]जानन्साल्वकृतां मायामजानन्निव केशवः। अन्ववर्तत किञ्चित्तु ततस्तामहरद्विभुः। एवमेव तु सर्वत्र परमात्मा सनातनः। विद्धत्व-शुधिरस्रावी कथञ्चिदजयत्परम्। इत्यादि दर्शयेद्विष्णुर्मोहयन्मायया जगत्। चिदानन्दघनस्यास्य कुतो वेधादि सङ्गतेरि'ति ब्रह्माण्डे ॥ 'यदचरस्तन्वा वावृधानो बलानीन्द्र प्रब्रुवाणो जनेषु। मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रुं ननु पुरा विवित्से' इत्याद्या च श्रुतिः ॥ ३८ ॥ इति दशमतात्पर्ये षडशीतितमोऽध्यायः ॥ ८६-९३ ॥

## चतुर्नवत्यध्यायः

'[12]सनकाद्याः समाः सर्वे तत्र श्रेष्ठः कुमारकः। मरुतश्च समाः सर्वे सप्त तेषु प्रधानका' इति ऋक्संहितायाम् ॥ १२ ॥ '[13]श्रीर्भूमिरिति रूपाभ्यां प्रकृतिर्विष्णुना सह। शेते श्रुतिस्वरूपेण स्तौति ब्रह्मल...

---

### षडशीतितमाध्यायः

ततः शाल्वः समुत्पत्य खड्गेनानकदुन्दुभेः। उत्कृत्य शिर आदाय खस्थं सौभं समाविशत् ॥३७॥ ततो मुहूर्तात्प्रकृतावुपस्थितस्तत्रानुति... स्वजनानुसङ्गतः। महानुभावस्तदबुध्यतासुरीं मायां स शाल्वप्रकृतां मयोदिताम् ॥ ३८ ॥

### चतुर्नवतितमाध्यायः

श्रीभगवानुवाच—स्वायम्भुवं ब्रह्मसत्रं जनलोकेऽभवत्पुरा। तत्र... त्यानां मानसानां मुनीनामूर्ध्वरेतसाम् ॥ ९ ॥ श्वेतद्वीपं गतवति त्वयि द्रष्टुं तमीश्वरम्। ब्रह्मवादः सुसंवृत्तः श्रुतयो यत्र शेरते ॥ १० ॥ तत्रा...प्ययमभूत्प्रश्नस्त्वं मां यमनुपृच्छसि। तुल्यश्रुततपः शीलास्तुल्य... स्वीयारिमध्यमाः ॥ ११ ॥ अपि चक्रुः प्रवचनमेकं शुश्रूषवोऽपरे ॥१२॥ सनन्दन उवाच—स्वसृष्टमिदमापीय शयानं सह शक्तिभिः। तदन्ते...



...रिम्। एकाऽप्यनन्तरूपा सा वाक्यभेदात्सरस्वती। अनादिनिधना नित्या स्तौति नारायणं प्रभुमि'ति ज्योतिःसंहितायाम् ॥ १३ ॥ [15]सर्वदा जयतो विष्णोर्जयस्तस्य प्रकाशनम्। श्रवणं दृष्टिरित्यादि ...र्थ्यं तज्ज्ञापनं स्मृतम् ॥ शृणोति पश्यति ह्येष जयतीत्यादिकं स्वतः। ...य पश्य शृणुष्वेति तत्तज्ज्ञापनमेव त्वि'ति विमलसंहितायाम् ॥१५॥ [13]श्रीर्भूर्दुर्गेति या भिन्ना प्रकृतिः शक्तिरुच्यते। विष्णोः स्वरूपशक्तेः ...॥ शक्यत्वाच्छक्तिरेव तु। नित्यव्यवहितत्वात्तु विशेषाच्छक्तिनामिका। ...थैव पङ्कजं ब्रह्मा रुद्र इत्यादिकं पदम्। ताभिः शयानं पुरुषं सैव तु ...तिरूपिणी। अस्तौत्प्रकाशयात्मानं प्रकृतिं जीवबन्धनम्। जहि ...र्पर्ययया सर्वे गुणा जीवस्य संवृता' इति तन्त्रभागवते। 'श्रीः परा ...कृतिः प्रोक्ता ब्रह्माणी त्ववरा ततः। उमाशचीमुखास्तस्या अवराः ...म्प्रकीर्तिताः ॥ १३ ॥ '[15]अथाऽन्ये प्रकृती दुष्टे नृपु प्रातिस्विकं ...थते। स्वगुणाच्छादिका त्वेका परमाच्छादिकाऽपरा। स्वगुणाच्छादिकां ...त्वा परमाच्छादिकां परः। व्याधुत्य मोक्षपदवीं ददाति पुरुषोत्तमः। ...जे द्वे अपि ते प्रोक्ते अनन्ताच्छादिनी हरेः। न विष्णुं छादयत्येषा ...ज्ज्ञानं छादयेत्परम्। जीवस्यैव न तत्रापि ब्रह्मादेरस्ति सा क्वचित्। ...वरे ते प्रकृती सततं दुःखितेऽपि च। पिशाचवत्समुद्दिष्टे पुरुष-...धिकारिणः। प्रेरकास्तु तयोर्देव्य इन्दिराद्याः सुखात्मिका' इति ...हातत्त्वविवेके ॥१५॥ '[14]राजवज्जयशब्दाद्या नित्यबुध्य(द्ध)स्य बोधनम्। ...डम्बमात्रं कैवास्य निद्रा विद्यापतेर्हरेरि'ति कापिलेये ॥ १४ ॥ ...दोषैर्दुःखाद्यैर्जीवगुणा आनन्दाद्या आवृता यया सा दोषगृहीतगुणा। ...मसि यदात्मना समवरुद्धसमस्तभगः। यस्मात्त्वं स्वतएवानपगत-

---

...धयांचक्रुस्तल्लिङ्गैः श्रुतयः परम् ॥ १३ ॥ यथा शयानं सम्राजं ...न्दिनस्तत्पराक्रमैः। प्रत्यूषेऽभ्येत्य सुश्लोकैर्बोधयन्त्यनुजीविनः ॥१४॥ ...तय ऊचुः। जयजय जह्यजामजित दोषगृहीतगुणां त्वमसि यदात्मना

पूर्णैश्वर्यादिगुणोऽसि । अतस्त्वदाभासस्य जीवस्य प्रकृतिगृहीतत्वादे
नैश्वर्याद्या गुणा अवभासन्ते । जगदोकसां श्रीब्रह्मादीनामप्यखिल
शक्त्यवबोधक । क्वचित्सृष्टिकाले आत्मना जीवेन प्रकृत्या च प्रवर्ततस्
अनुचरे द्वेऽदो विधिनिषेधरूपेण । अन्यदा स्तुतिमात्रो न तु जीवानां
प्रयोजकः । तस्मात्सृष्टिं कृत्वा वेदैर्जीवान्बोधयित्वा तत्स्थामजां जहि
'जयजय हनहन प्रकृतिं द्रावयद्रावय भिन्धिभिन्धि दुःखं तमोरतिम्
अजित परम रमेशान वासुदेव वैकुण्ठ नारायण हृषीकेशानया हि
जीवगुणा विसंवृता अधिसंवृताः । एष ह्यानन्दोऽजरोऽमरोऽधिशक्तिर्मा
स्त्वदाभासस्त्वया तथादिसम्भाव्यो यतः परः परमेश्वरः परज्ञानः परानन्द
परशक्तिः परश्रीः परयशाः परप्रवृत्तिर्नित्यमेव त्वं स्वतोऽसि त्वं रमायास्त्वं
विरिञ्चस्य रुद्रेन्द्रसूर्यसोममुखानामदभ्रशक्तिदोऽसि प्रवर्तकोऽसि निवर्त
कोऽसि अजोऽस्यनन्तोऽसि सृजतो हि ते श्रुतयोऽनुवर्तन्ते नैवासृजतः
कं वा विदधते कं वा निषेधन्ति स्तुतिमात्रा एव ते स्युः प्रभो विभो
समास्व व्यास्वोत्तिष्ठ प्रचर विचर सन्धिनु सन्धिनु मा ते क्षणोऽ
त्यागान्मा ते क्षणोऽत्यागादि'ति शाण्डिल्यश्रुतिः ॥ 'लयस्य त्वष्टमो
भागः सृष्टिकाल उदाहृतः । तत्रैव वेदसञ्चारो ह्यन्यदा स्तुतिमात्रका'
इति नारदीये । सृष्टिकाल एव गुणवृत्तयः । सर्वदा निर्गुणे परमेश्वर
एव वर्तन्ते श्रुतय इति 'कथं चरन्ति श्रुतय'इत्यस्य परिहारः ।
यत्प्राप्त्यर्थं यन्नियमाद्विधिनिषेधा वर्तन्ते स त्वमित्यादि विधिनिषेधानां
स्तुतिपरत्वम् । 'विध्यादीनां नियन्ता यः पूज्यः प्राप्यश्च तद्वताम्
इत्यादिस्तुतिरूपेण विध्यादिश्रुतयोऽपि तु । हरिं वदन्ति सर्वेषां
तन्नामत्वादथापि चे'ति श्रुतिनिर्णये । पृथक् श्रुतित्वान्न पूर्वापरसम्बन्धः ।
उपलक्षणत्वादनन्तत्वाच्छ्रुतीनां सर्वश्रुत्यर्थोपबृंहितत्वाच्चैतेषां श्लोकानां न
सर्वश्रुतीनां पृथगुक्तिः । 'सर्वश्रुत्यर्थसम्पन्नान्श्लोकान्सत्यवतीसुतः

समवरुद्धसमस्तभगः । अज जगदोकसामखिलशक्त्यवबोधक ते क्वचि



कशाखास्तुत्यर्थान् जगौ सर्वोपलक्षणान् । बबन्ध तान्भागवते प्रति-
श्लोकं पृथक्श्रुतिरि'ति तन्त्रभागवते ॥ (१) ॥ १५ ॥ [16]अविकृततमो-
विषये त्वमुदगाः । मूलप्रकृतेरपि त्वमधिको यतः । अतो बृहत्त्वेन
स्वरूपमुपलब्धम् । इत इदमधिकमितोऽपीदमधिकमिति सर्वाधिकत्वेन
तोऽधिकाभावेनावशेषितत्वेन । 'द्वितीयार्थे तृतीयार्थे चतुर्थ्यर्थे च
सप्तमी । पञ्चम्यर्थे च सम्प्रोक्ता विषयेति च तां विदुरि'ति महा-
व्याकरणे । तमसोऽधिको भवानित्यर्थः । अतस्त्वं सर्वोत्तम इत्येव
त्वयि मनोवचनाचरितानि दधतां नायथा तानि भवन्ति । यथा भूमौ
पदं निक्षिपामीति प्रवर्ततो भूमेर्नान्यत्र भवन्ति । उदकवृक्षादेर्भूम्यन्त-
र्भावात् । 'आधारशक्तियुक्तत्वाद्भूरुदं च प्रकीर्तितम् । सापि वाय्वन्तरङ्गैव
आधारोऽखिलस्य चे'ति महासंहितायाम् । अत इति हेत्वर्थे तथेत्यर्थे
च । तस्माद्बृहत्त्वेनादधुरिति । 'अतःशब्दस्तु हेत्वर्थे तथेत्यर्थे च
वर्तते । उभयार्थे च भवति यथा शब्दविदो विदुरि'ति शब्दनिर्णये ।
उपलब्धं वेदेषु । बृहद्भिर्दृष्टमवशेषितं यत्स्वरूपमीशस्य तमोऽधिकस्य ।
'सर्वाधिकत्वेन तमो हि दुर्गा ततस्तथैनं विबुधा यथाऽगुरि'त्यौद्दालकायन-
श्रुतिः । अनिर्देश्यमप्येकदेशेन निर्दिष्टं भवतीत्युक्तं कथमयथाभवन्ती-
त्यनेन । यथा सर्वां भूमिमसञ्चरन्नप्येकदेशसञ्चारेण भूसञ्चारी भवति
तथेति । 'निरपेक्षबृहत्त्वस्य ज्ञानाज्ज्ञातं भवेत्परम् । बृहत्त्वमेव तु गुणैः
र्निरुद्दिश्यते यत'इति मान्यसंहितायाम् ॥ (२) ॥ १६ ॥ अनन्याश्रय-
त्वात्स्वधामा परमः । तेन विधुता दुःखाद्या आशयगुणाः उत्पत्त्याद्याः
कालगुणाश्च येषां ते मुक्तास्तापान् जहुरिति किं पुनः । कथामृताब्धि-

तयाऽऽत्मनाऽनुचरतोऽनुचरेन्निगमः ॥ १५ ॥ बृहदुपलब्धमेतदवशेष-
तया यत उदगास्तमस्यविकृतेऽविकृतः । अत ऋषयो दधुस्त्वयि मनो-
वचनाचरितं कथमयथा भवन्ति भुवि दत्तपदानि नृणाम् ॥ १६ ॥ इति
परस्त्र्यधिपतेऽखिललोकमलक्षपणं तव कथामृताब्धिमवगाह्य तपांसि

मवगाह्यापि जहुरिति यदिति हेत्वर्थ इतिशब्दः । 'त्यजन्ति तापं य उ ते भवत्कथा इति स्म मुक्ताः किमु ते स्वरूपगाः । परावरेशेशपदं भजन्तः परं परानन्दमनारतं त' इतीन्द्रद्युम्नश्रुतिः ॥ (३) ॥ १७ ॥ चरमोत्तममध्यमादिषु पुरुषेषु यस्तव स्वरूपं प्रथयेत् । स पुरुषविधं त्वामन्वेति । 'ब्रह्मैव मुक्तिगेष्वादिः सुरास्तदवरोत्तमाः । मध्यमा ऋषिगन्धर्वाश्चरमा मानुषोत्तमा'इति प्राभावल्याम् ॥ 'असक्तो देहपुर्यां जीववद्देहगोऽपि यत् । अथवा पुंविधातृत्वात्पुंविधः पुरुषोत्तम'इति पुरुषोत्तमतन्त्रे ॥ 'अनिशमुच्छ्वसन्त्यसुखोद्धरितास्तव रिपवो दृतिवन्मसि प्रविष्टाः । तव गुणप्रथनाः परिहाय तमः परियान्ति ते पदमजस्रमनन्तसुखमि'ति पैङ्गिश्रुतिः ॥ (४) ॥ १८ ॥ यर्हि यस्माद्ब्रह्मवर्त्मनि सूक्ष्मदृक्त्वाच्छार्कराक्ष्यनामानः । प्राणं प्रत्युरुगृणीहीतिवचनादुदरनामकं ब्रह्मोपासते । यस्माच्चारुणयो हृद्ययनाद्धृदयनामकम् । तस्मादेव तत्समुपेत्य कृतान्तमुखे न पतन्ति । इतरेऽपि परिसरः प्राणः पद्धतिर्मार्गो यस्य स परिसरपद्धतिः । 'कस्मिन्न्वहमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति । स प्राणमसृजते'ति श्रुतिः । 'प्राण एवैनमनुप्रविशति प्राणमितरा देवताः न प्राणादपरः परमनुप्रविशति प्राण एवैनमनुभुङ्क्ते प्राणमितरा देवताः न प्राणादपरः परमनुभुङ्क्ते प्राण एवैनमन्वानन्दीभवति । प्राणमितरा देवता न प्राणादपरः परमानन्दी भवति तस्मादाहुः प्राणः पद्धतिरिती'ति हिरण्यनाभश्रुतिः । अत परिसरस्य पद्धतिरिति वा । ततो हृदः । नन्दनपथा ब्रह्मनाडीद्वारा शिर उदगाद्यत्परमं ब्रह्म तत्समुपेत्य । पुनरिहैव हृदादिषु स्थितं यत्

---

जहुः । किमुत पुनः स्वधामविधुताशयकालगुणाः परम भजन्ति ये पद मजस्रसुखानुभवम् ॥ १७ ॥ दृतय इवोच्छ्वसन्त्यसुहृदो यदि ते महदा मादयोऽण्डमसृजन् यदनुग्रहतः । पुरुषविधान्वयोऽत्र चरमोत्तम मध्यमादिषु यस्तव सदसतः परं प्रथयेदविशेषमृतम् ॥१८॥ उदरमुपासते यर्हि वर्त्मनि सूक्ष्मदृशः परिसरपद्धतिं हृदयमारुणयो दहरम् । तत



'तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं यत्प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात्प्रपदे तस्मात्प्रपदे इत्याचक्षते । शफाः खुरा इत्यन्येषां पशूनां तदूर्ध्वमुदसर्पत्ता ऊरू अभवतामुरुगृणीहीत्यब्रवीत्तदुरमभवदुर्वेव मे कुर्वित्यब्रवीत्तदुरोऽभवदुदरं ब्रह्मेति शार्कराक्ष्या उपासते हृदयंब्रह्मेत्यारुणयो ब्रह्माहैव ता ई ऊर्ध्वं त्वेवोदसर्पत्तच्छिरोऽश्रयत यच्छिरोऽश्रयत तच्छिरोऽभवत्तच्छिरसः शिरस्त्वं ता एताः शीर्षञ्छ्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक्प्राणः श्रयन्तेऽस्मिन्छ्रियो य एवमेतच्छिरसः शिरस्त्वं वेदे'त्याद्या श्रुतिः ॥ (५) ॥ १९ ॥ [20]विचित्रयोनिषु विशन् जीवः तद्वदज्ञानां चकास्सि । अनलो यथा । स्वकृतं दार्वादि तदपनयने गच्छंस्तत्स्थापने तिष्ठन्ननुवर्तते । एवमेव स्वकृतशरीराद्यनुवर्तसे तद्गतः सन् । भरतमतो वायुज्ञातः । अन्यथाभवन्तीष्वपि योनिषु अनन्यथाभूत्वैव बहुविधं तिष्ठन्तं भवन्तं त्वत्समीपस्थबुद्धयो महान्तस्तवाभिविपत्य मनसाऽधिगम्य मनसि त्वां नयन्ति । 'रतत्वाद्भात्मके विष्णावथवापि जगद्भृतेः । भरतो वायुरुद्दिष्टो भारती तत्सरस्वती'ति नामसंहितायाम् । 'योनिवेश्याह्वयो जीवस्त्वज्ञानां तद्वदेव तु । प्रकाशते परो देवस्तेन यान्त्यधरं तमः । सर्वहेतुतयैवेशं प्राणो जानाति तत्त्वतः । तेन चासौ परो देवस्तत्परं याति केशवम् । इन्धानानयने त्वग्निर्यथैवानीयते सह । एवं देहगतो विष्णुः सह गच्छेन्निजेच्छया । अशाश्वतेषु देहेषु शाश्वतं बहुधा स्थितम् । निचाय्य मनसा सन्तो जानन्ति निकटेच्छव'इति तन्त्रभागवते ॥ 'यो जीववद्योनिषु भात्यनन्तो मूढैस्तमोगैर्भरताधिगम्यः । निचाय्य तं शाश्वतमात्मसंस्थं तदिच्छवो त्मन्यदधुर्महान्तमि'ति कमठश्रुतिः ॥ (६) ॥ २० ॥ [21]सर्वपुरुषेषु सर्वधीषु च

---

उदगाच्च नन्दनपथाथ शिरः परमं पुनरिह यत्समेत्य न पतन्ति कृतान्तमुखे ॥ १९ ॥ स्वकृतविचित्रयोनिषु विशन्निव हेतुतया भरतमतश्चकास्यनलवत्स्वकृतानुकृतिः । अपि वितथास्वमूष्ववितथोरुविधं मनसि निकटधियो नयन्त्यभिविपत्य तव ॥ २० ॥ प्रक्रमवत्स्वसत्कृतं सर्वेषु

स्थित्वा श्रीब्रह्मादिषु प्रकर्षेण क्रमेण स्वात्मनैव सत्कृतं अण्डाद्यन्तर्बहिश्च असच्चरणे पापाचारे स्थित्वा पापाचारमपि स्वात्मनः पूजात्वेनैव कारयन्तं त्वां वदन्ति । तस्याधोगत्यर्थम् । तस्मात्सर्वं तव स्वकृतमेव वदन्ति । 'निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम् । न ऋते त्वत्क्रियते किञ्चनारे महामर्कं मघवंचित्रमर्चे'त्याद्या श्रुतिः ॥ 'श्रीब्रह्मरुद्रपूर्वेषु क्रमात्स्थित्वा जनार्दनः । स्वात्मानमर्चयत्यद्धा बहिरन्तरसत्सु च । असतामधमाचारो हरिदृष्ट्याऽऽत्मपूजनम् । तस्याधोगमनायेति श्रुतिराहाखिलक्रियमि'ति तन्त्रभागवते । स्वकृतमित्यनन्यापेक्षया ॥ (७) ॥ ॥२१॥ [22]भवमध्यविनिःश्वसिता इति यतः । अतो विमृशन्ति कवयो निगमावपनं त्वाम् । चरितमहामृताब्धिपरिवर्तपरिश्रमणा इति यत् । अतो भवमध्यविनिःश्वसिताः मुक्ताः निगमानामावपनं स्थानं त्वां विमृश्य यज्ञादिभिर्भजन्त उपासते । निगमविषये आयतवाङ्मनसः । निगमानां ततो व्यक्तेस्तत एव फलप्रदत्वात्तद्विषयत्वाच्च निगमावपनम् । परिवर्तो मथनम् । 'विमथ्य वेदाब्धिमतिश्रमेण ज्ञात्वा परेशं मुनयो विमुक्ताः । मृशन्ति यज्ञैश्च यजन्ति नित्यं उपासते वेदफलप्रदं तमिति कुशिकश्रुतिः ॥ (८) ॥ २२ ॥ [23]त्वत्प्राप्त्यनुसारित्वाच्छरीरं प्रियवत्पश्यन्ति । सर्वप्रियतमे सर्वादाऽनादिकर्तरि च त्वयि । तथापि तेऽभिमुखाः । 'न किञ्चिदभिवाञ्छन्ति यतयः सुसदाश्रयाः । प्रेष्ठस्य परमस्याप्त्यै प्रियवद्देहदृष्टय'इति विमदश्रुतिः ॥(९)॥२३॥ [24]अन्यथो-

---

पुरुषेषु सर्वासु धीषु स्थित्वा त्वां तु बहिरन्तरसञ्चरणेऽपि । तव पुरुष वदन्त्यखिलशक्तिधृतः स्वकृतम् ॥ २१ ॥ इति विमृशन्ति कवयो निगमावपनं यजन्त उपासते भवमध्यविनिश्वसिताः । दुरवगमात्मतत्त्वनिगमायतवाङ्मनसश्चरितमहामृताब्धिपरिवर्त्तपरिश्रमणाः ॥ २२ ॥ न परिलषन्ति केचिदपवर्गमपीश्वर ते चरणसरोजहंसकुलसङ्गविसृष्टगृहाः । त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियवच्चरन्ति तथोन्मुखास्त्वयि हि ते प्रिय आत्मनि च ॥ २३ ॥ न च रमन्त्यहो असदुपासनयाऽऽत्महनो





पासनयाऽऽत्महनोऽसूर्यान्नाम लोकान्नित्यनिरतिशयदुःखान्निरस्तसमस्तसुखान्प्राप्नुवन्ति । तदेतन्न च रमन्ति अनुभवन्ति च । नित्यदुःखमिति चशब्देनोक्तम् । असुर्यशब्देन च श्रुतौ सुष्ठ्वरमणरूपत्वादसुरप्राप्यत्वाच्च । यत्रानुशयनं कुर्वन्तस्तमस्येव भ्रमन्ति । अभवा जन्मवर्जिताः । आत्महन इत्येषशब्दो भगवद्भक्तद्वेषिणामपि सम इति दर्शयति । निभृतमोक्षहृदययोगयुज इत्यादि । ये मुनयो हृद्ययनं भगवन्तं निभृतमोक्षहृदयेन वायुना योगेन युक्ता नियमिताः सन्त उपासते तेषामरयोऽपि तदेव तमो ययुः । परिपूर्णमोक्षार्थं ज्ञानं यस्य स निभृतमोक्षहृदयः । 'असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जना'इति श्रुतिः ॥ 'नित्यदुःखसुसम्पूर्णं निरस्तानन्दमव्ययम् । तमो यान्त्यन्यथाज्ञानाद्द्वेषाद्वा हरिसंश्रय'इति प्राणसंहितायाम् ॥ 'निभृतो मोक्षवित्प्राणस्तद्योगात्तत्प्रसादतः । जानन्ति परमं दैवं नान्यथा तु कथञ्चने'ति भागवतसंहितायाम् ॥ (१०) ॥ २४ ॥ [25]हे स्मरणादेव स्वनुरक्त तत्ते स्वरूपं भवानेव वेद । उरगेन्द्रभोगदण्डे विषक्तबुद्धेस्तेऽङ्घ्रिसरोजसुधाम् । वयमपि समासमदृशः । सर्वमाहात्म्यस्य वेदैरपि वक्तुमशक्यत्वादसमदृशः । वेदागम्यमाहात्म्यस्यापि वेदैरेव गम्यत्वात्समदृशः । अतः कोऽन्यो वक्तुं वेद । को ह्यस्मांस्त्वां चर्तेऽपेतजन्मलयः यत उदगादुत्पत्तिमानेव ऋषिर्ब्रह्मा । प्राप्तपदा अप्राप्तपदाश्च देवगणाः । 'त्वं वेत्थ नापरस्ते स्वरूपं न नित्यवाङ्नागभोगप्रियस्य । कुतो ब्रह्मा प्राप्तलोकाश्च देवास्तथाऽप्राप्ता जनिमन्तो यतोऽस्मादि'ति संक्रतिश्रुतिः ॥ 'महिम्नः सर्वशोऽनुक्तेर्वेदाश्चासमदर्शिनः । तस्यापि वेदगम्यत्वात्तथैव समदर्शिन'-

---

यदनुशया भ्रमन्त्यभवाः कुशरीरभृतः । निभृतमोक्षहृदययोगयुजो हृदयं मुनय उपासते तदरयोऽपि ययुः स्मरणात् ॥२४॥ स्वनुरागतद्भवानुरगेन्द्रभोगदण्डविषक्तधियो वयमपि ते समासमदृशोऽङ्घ्रिसरोजसुधाम् । क इह वेद नु वक्तुमपेतजन्मलयो यत उदगादृषिरनुदेवगणा उभये ॥२५॥

इति तन्त्रभागवते ॥ (११) ॥ २५ ॥ [26]शास्त्रमपकृष्य प्रलये शास्त्रस्य प्रवृत्त्यभावात् । असतः सूक्ष्मरूपात्सतः स्थूलरूपस्य परमेश्वरपर्यन्तं यथाक्रमं जन्ममृतिं च सर्वस्मात्परमात्मनि भेदं च विपणं फलापेक्षामृते ये स्मरन्ति । तेषां ध्वनिमुपविश । आरुवतो वायोः प्रसादात्तथा स्मरन्ति । 'नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमापरो यत् । किमावरीवः कुहकस्य शर्मन्नम्भः किमासीद्गहनं गभीरमि'त्यादिश्रुतिः ॥ 'सूक्ष्माणि महदादीनि स्थूलान्यण्डादिकानि च । उभयं त्वग्निरापश्च न किञ्चित्प्रलयेऽभवदि'ति प्रकाशसंहितायाम् ॥ 'सर्ववेदादिरूपेण प्राणस्यारुवतः सदा । प्रसादाद्ये विजानन्ति सूक्ष्मात्स्थूलजनिं क्रमात् । मृतिं च सर्वजीवादेरीशस्य व्यतिरिक्तताम् । जानन्ति ये निराकाङ्क्षा- स्तेषां वाचि जनार्दन'इति तन्त्रभागवते ॥ (१२) ॥ २६ ॥ अबोध- कृता त्रिगुणबद्धता यस्माज्जीवस्यापि तस्मात्तदवबोधरसे त्वयि सा न विद्यते । त्रिगुणात्मकं मनस्तवापि विद्यत इत्यसतां पक्षः । मनुजाना- मादयो देवास्त्रिगुणातीतत्वाद्भवतो भवानेव परमानन्दः । त्वदन्यत्सर्वं जीवजातमार्तमित्येव विमृशन्ति । 'सत्वादिजं देहमथो मनश्च सत्वादि- बद्धं च वदन्त्यसन्तः । परं पुमांसं न सुरास्तु तैर्हि जीवाः सुदृष्टाः परमार्तरूपा' इति सूकरायणश्रुतिः ॥ 'त्रैगुण्यदेहेन्द्रियकमासुरा जानते हरिम् । त्रिगुणातीतमीशेशमतः पूर्णसुखं सुराः । जानन्ति गुणबद्धत्वा- ज्जीवानार्तांश्च कृत्स्नशः । अनार्तस्य प्रसादेन तेषामार्तिविनाशनमि'ति चैतन्यविवेके ॥ (१३) ॥ २७ ॥ [8]यथा कनकस्य विविधकृतं

---

तर्हि न सन्नचासदुभयं न च कालजवः किमपि न तत्र शास्त्रमपकृष्य शयीत यदा । जनिमसतः सतो मृतिमजात्मनि ये च भिदां विपणमृते स्मरन्त्युपविश ध्वनिमारुवतः ॥ २६ ॥ त्रिगुणमयः पुमानिति यदबोध- कृता त्वयि न तु भवेत्तदवबोधरसे । सदिवमनस्त्रिवृत्त्वयि भवत्यसतां मनुजादयो विमृशन्त्यशेषमिदमार्त्ततयाऽऽत्मविदः ॥२७॥ न हि विकृतिं



कुण्डलादिकं कनकं विना परित्यक्तुं न शक्यते तथा स्वकृतं जगदनु- प्रविष्टो भगवान्मूलरूपं विना परित्यक्तुं न शक्यः । आत्मतया एक- रूपत्वात् । रसितं आत्मना प्रकाशितं जगत्प्रविष्टस्तस्मात्सर्वगतो विष्णु- रिति ज्ञातव्यमित्यर्थः । इत्थं ये ज्ञात्वा परिचरन्ति तव स्वरूपं ते तदात्मकब्रह्मप्राप्तिविरुद्धत्वान्निर्ऋत्याख्यसंसारस्य शिरः स्फुटं पदा क्रमन्ति । 'सर्वगं ये प्रपश्यन्ति ब्रह्मानन्दमजाक्षरम् । एकमेवाद्वयं नित्यं निर्ऋतेस्ते शिरोगता'इति सौकरायणश्रुतिः ॥ 'यथैव कुण्डलं त्यक्त्वा नादातुं कनकांशकम् । तस्यैव तदवस्थत्वात्केवलाभेदतः स्फुटम् । एवं सुरासुरनरेष्वास्थितो भगवान्हरिः । नैव भेदेन मन्तव्यो जीवभेदे तु सत्यपि । ये तथाऽभिन्नमीशेशं पश्यन्ति परमर्षयः । ऋतप्राप्ति- विरुद्धत्वात्संसारं निर्ऋतेः शिरः । अगणय्य पदाऽऽक्रम्य वैष्णवं निलयं ययुरि'ति गारुडे ॥ (१४) ॥ २८ ॥ [29]वयति गा इव यः सुरादिकां- स्तन्मनसो जगदपुनश्छुचयो न परे । 'स एक ईशः परिपूर्णशक्तिर्बलिं हरा इतरे स्युः सुराः सुखिन'इत्यारुणिश्रुतिः । 'विष्णुना देवता बद्धा विष्णवे च बलिप्रदाः । विष्णुरासां पतिर्नित्यं न विष्णोर्बन्धकः क्वचिदि'ति वामने ॥(१५)॥२९॥ [30]स्थिरचरजातयो ये तेऽनिमित्त- युजः स्युः । भगवन्नियमादेव संसारयुजः स्युः । विरहे मुक्तौ । यदि परस्य सकाशान्मुनिरेवेत्युदीक्षयेत्स परः । विमुक्ताः सन्तो येन परेण तस्य विमुक्तसतः । 'नान्यः पन्था अयनाय विद्यत' इतिश्रुतिः ।

---

त्यजन्ति कनकस्य तदात्मतया स्वकृतमनुप्रविष्ट इदमात्मतया रसितम् । तव ये परिचरन्त्यखिलतत्वनिकेततया ननु ते पदाक्रमन्त्यविगणय्य शिरो निर्ऋतेः ॥ २८ ॥ परिवयसे पशूनिव गिरा विबुधानपि तांस्त्वयि दृढ- सौहृदा ननु पुनन्ति न ते विमुखाः । त्वमेकः स्वराडखिलकारकशक्ति- धरस्तव बलिमुद्वहन्ति समदन्ति च येऽनिमिषाः ॥ २९ ॥ वर्षभुजोऽ- खिलक्षितिपतेरिव विश्वसृजो विदधति यत्र ये त्वधिकृता भवतश्चकिताः ।

मुक्तिस्तस्मादेवेत्यङ्गीकर्तव्यम् । अतो बन्धोऽपि तत एवेत्यर्थः । 'सत्
विमुक्तिदाद्विष्णोर्मुक्तिर्यद्यभ्युपेयते । बन्धोऽपि तत एव स्याद्यस्मादे
स्तयोः पतिरि'ति स्कान्दे ॥ 'आत्मानं मुक्तिदं विष्णुर्यदि पुं
उदीक्षयेत् । सुप्रसन्नस्तदा बन्धस्तत एवेति सेत्स्यती'ति ब्राह्मे ॥ 'खण्ड
धीशाः सार्वभौमस्य यद्वद्ब्रह्मेशाद्याः कुर्वते तेऽनुशास्तिम् । त्वं मुक्ति
बन्धदोऽतो मतो नस्त्वं ज्ञानदोऽज्ञानदश्चासि विष्णवि'त्युदारशाण्डिल्य
श्रुतिः ॥(१६)॥३०॥ [31]यस्य परमस्य ते कश्चिदपरः स्वतन्त्रो नास्ति ।
अनपरस्य प्राणोत्तमस्य । अत्र जीवसमुदाये । व्ययतः विशेषेणायत
सर्वज्ञस्य । यथा प्राणस्य नापरः स्वतन्त्रस्तद्वत्प्राणः श्रीरन्यो वा त्वां
विना स्वतन्त्रो नास्ति । हे शून्यतुल समानवर्जित । सर्वं सन्दधतस्ते ।
यदि ततः प्राणात्तनुभृतो जीवा ध्रुवास्तर्ह्यपरिमिताः सन्ति हे सर्वपूर्ण ।
'एकमेवाद्वितीयम्' । 'एकं परञ्ज्योतिरनन्यमद्वयमि'त्यादिनियमो
जीवानां शाश्वता नेत्यत्र नहि । किन्तु स्वगतभेदस्य ईश्वरान्तरस्य
अस्वतन्त्रस्य निषेधे । 'अतोऽन्यदार्तम्' । 'नेह नानाऽस्ति किञ्चन' ।
'न तत्समश्चाभ्यधिकश्च दृश्यत'इत्यादि तथा ब्रुवते च ॥ 'तव स्वतन्त्रो
नापरो यद्वदत्र प्राणान्नान्यस्तुल्यशून्यस्य सन्धिन् । प्राणाधीना अमिता
जीवसङ्घाः प्राणो वशे ते प्रकृतिश्च भूमन्नि'ति महाशालीनश्रुतिः ॥
'स्वतन्त्रो नापरः कश्चिद्विष्णोः प्राणभृते क्वचित् । यथा प्राणात्परो
नास्ति स्वतन्त्रो जगति क्वचित् । तथा प्राणो रमा चैव न विष्णो
पृथगीश्वरौ । यद्युच्यन्ते प्राणतन्त्रा बहवः पुरुषा इति । सत्यमे
ह्यसङ्ख्याता न नियम्य निषेधकाः । एकाद्वितीयश्रुतयः किंत्वीशान्त
रवारकाः । तथा स्वगतभेदस्य तदतन्त्रनिषेधका'इति ब्रह्माण्डे ॥ 'स्वरूप

---

स्थिरचरजातयः स्युरज ये त्वनिमित्तयुजो विरह उदीक्षयेद्यदि परम
विमुक्तसतः ॥ ३० ॥ न हि परमस्य कश्चिदपरोऽनपरस्य भवेद्व्ययत
इवात्र यस्य च शून्यतुल सन्दधतः । अपरिमिता ध्रुवास्तनुभृतो यदि



मरत्कृष्ण एकं स्वस्मिन्नभेदतः । अतत्तन्त्रस्य राहित्यादनन्यं सदृशो-
ज्झितः । अद्वयं नित्यनिर्वृत्या भावनिर्वृतिमीश्वरमि'ति तन्त्रभागवते ॥
धिकस्य समस्यापि स्वतन्त्रस्य च वर्जनात् । एक एवाद्वितीयोऽसौ
शास्यजनवर्जनादि'ति कौर्मे ॥(१७)॥३१॥ [32]अनन्तमदुष्टतयाऽनु-
नताऽऽचार्येण सन्तताद्भवात्परिमुच्यते । अबद्धश्च प्रकृतिपरेशौ
नाऽन्यो न विद्यते । यतस्तयोरेवोद्भवो न घटते । ततस्तयोरजयोरसुभृत
द्भवन्ति । देशतः कालतश्च यत्र परमस्तत्र प्रकृतिर्यत्र प्रकृतिस्तत्र परम
भयुजोः । 'मुच्यते तत्त्वसंबुद्धादाचार्यात्पुरुषो भवात् । एतावेव
तोऽबद्धौ परमः प्रकृतिस्तथे'ति कलापश्रुतिः ॥ 'सम्यग्ज्ञानवदाचार्या-
च्यते पुरुषो भवात् । द्वावेव नित्यमुक्तौ तु प्रकृतिःपरमस्तथे'ति
मने ॥ 'देशतः कालतश्चैव समव्याप्तावुभावजौ । ताभ्यामुभय-
गाभ्यां जायन्ते पुरुषाः पर' इति कौण्ठरव्यश्रुतिः ॥(१८)॥ ३२ ॥
 तत ओत इमे विबुधनामार्थभूता गुणास्त्वयि निलिल्युः । परमेऽ-
र्णवे मधुन्यशेषरसा इव । अतः पूर्णगुणत्वाद्भवतो नृणां मध्ये
धियः । तव मायया त्वदिच्छयैव । त्वयि कुशलं विधातुं प्रभवः ।
 कुशलं भेद एव । सर्वस्मादन्यो विशिष्टगुणः पर इति दर्शनम् ।
गतया सुष्ठन्यैरनवगतया । तथा त्वत्प्रसादादनुवर्तिना कथं मुहुर्भव-
 भ्रुकुटी सृजति । 'यो नः पिता जनिता यो विधाता धामानि
 भुवनानि विश्वा । यो देवानां नामधा एक एव तं संप्रश्नं भुवना
न्या:' । 'त आयजन्त द्रविणं समस्मा ऋषयः पूर्वे जरितारो न-
। असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि' इत्यादि

---

 ततो न हि न शाश्वतेति नियमो ब्रुवते च तथा ॥ ३१ ॥ अजन
मुच्यतेऽत्र भवात्सततात्सममनुजानता ततमनन्तमदुष्टतया । न घटत
यः प्रकृतिपूरुषयोरजयोरुभययुजोर्भवन्त्यसुभृतो जलबुद्बुदवत् ॥ ३२ ॥
पि त इमे ततो विबुधनामगुणाः परमेऽमृत इवार्णवे मधुनि लिल्युर-

श्रुतिः ॥ 'ब्रह्मेशेन्द्रादिसन्नाम्नां येऽर्थभूता गुणा मताः । पूर्तीशितृत्व
द्रष्टृत्वप्रमुखास्ते हरेः सदा । अतस्तु सर्वनामाऽसौ सर्वकर्ता च केशव'
इति पाद्मे ॥ 'आनन्दत्वादनामाऽसावुत्कृष्टत्वादुनामकः । एतन्नामद्वयं
विष्णोर्ज्ञात्वा पापैः प्रमुच्यत'इति स्कान्दे ॥ 'अन्याविज्ञातया विष्णो
शक्त्यैव कुशलं जनाः । कुर्वन्ति कुशले तूच्चं भेददर्शनमेव तु । पूर्णा
नन्दादिसम्पत्तिं विष्णोर्ज्ञात्वेतरेषु च । तदपेक्ष्य विलुण्मात्रत्वज्ञानं
तद्भेददर्शनम् । अनाद्यनन्तभेदोऽयं स्वभावः परजीवयोः । स्वतो वा
परतो वापि न कदाचित्प्रणश्यति । एवं ज्ञानवतां विष्णुर्बहुजन्मभि
दास्यति । अनुवृत्तिर्यद्यनल्पा स हि सर्वेश्वरः प्रभुरि'ति प्रमाण
संहितायाम् ॥ 'यः पिता जनिता चैव कल्पको नित्यपोषकः । प्रापक
सर्वदेवानां पदानां पुरुषोत्तमः । सर्वदेवाभिधावाच्यो भूतभव्यभव
त्प्रभुः । विचार्य सर्ववेदैश्च ब्रह्माद्याश्च यजन्ति च । त्रिगुणात्मक
स्रष्टारस्तथापि न यजन्ति तम् । यतः पूर्णेशशक्त्यैव तेषां यजनमिष्यते ।
अतः सर्वेश्वरो विष्णुरेक एव महागुण'इति महासंहितायाम् ॥ (१९) ॥
॥३३॥ [34]भवच्चरणेषु सुजातस्थानाः । उत्तमयोग्यतायुक्ताः हृषीकाणि
महत्तुरगाः । वायुरेवोदात्तः । 'रथोपरि स्वीकरणादुदात्तः सारथिर्मत'इति
व्यासनिरुक्ते ॥ 'जयो विष्णोश्च वायोश्च भक्त्या तत्प्रीतिसाधनम् ।
जगदीशयोः कुतो ह्येतोः सर्वशक्त्योर्बलाज्जय'इति पवनविजये ॥ तेषां
तानि साधनानि सुखस्यापि शान्तिमति पूर्णसुखे त्वयि न सन्ति
गुर्वभावात् । विभवे जीवन्मुक्ते गुरावुद्यति उपदिशति सर्वरसे परमात्मनि
श्रयत एव । 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यै

कथिता ह्यर्थाः प्रकाशन्ते महात्मन'इति श्वेताश्वतरश्रुतिः ॥ 'देवा अपि
सुयोगाढ्या यतन्तः सर्वसाधनैः । पुत्रदारादिभिः सार्धं नाश्वसन्तीह
संसृतौ । गुरोरनुग्रहमृते साधनं न हरेः प्रियम् । गुरूपदेशात्तु परं
प्राप्नोत्येव न संशयः । षण्णवत्यङ्गुलो यस्तु तालास्यो दशतालकः ।
दशप्रादेशकः सप्तपादो हस्तचतुष्टयः । कलमत्रयाङ्गुलश्चैव वाग्मी सन्देह-
वर्जितः । वासुदेवैकशरणो गुरुरित्युच्यते बुधैः । गुरुलक्षणसम्पूर्णः
साक्षादेव चतुर्मुखः । ततः शेषेन्द्रवीन्द्राद्याः क्रमेणैव प्रकीर्तिता'इति
गुरुविवेके ॥ देवा योग्यतया जाता विष्णुपादाम्बुजाश्रयाः । तथापि
साधनैस्तेषां तत्प्राप्तिर्गुर्वनुग्रहादि'ति तत्वोद्योगे ॥ (२०) ॥ ३४ ॥
॥ (२१) ॥ ३५ ॥ [36]इति लोके परिदृश्यमानप्रकारेण चरतां विजने
मोक्षविषये कः सुखयति । सुष्ठुनिरस्तभगे अतस्त्वामेव सन्तं ज्ञात्वा
भवतः पदाम्बुजं हृदा निविशन्ति । हरावसथमहङ्कारं न कुर्वन्ति ।
'ब्रह्माज्ञात्वेति लोकप्रवृत्तिं प्रवर्ततां को नु मोक्षं ददाति । अतो ब्रह्मो-
पासते साधु धीरा नाहंभावस्तेषु रुद्राधिवास'इति महारवश्रुतिः ॥
'महाभाग्यं तु कैवल्यमज्ञानां कः प्रदास्यति । अतः सन्तो विजानन्ति
हरिं ते त्वनहङ्कृता'इति स्कान्दे ॥ (२२) ॥ ३६ ॥ [37]इदमप्यपालकं
ईश्वरवर्जितम् । न मत्तोऽन्य ईश्वरश्चेतनत्वादित्यादितर्कैर्वदन्ति चेत् ।
अथोइत्यनेन तदपि वचनं भगवत्प्रेरणयैवेत्युक्तम् । 'तस्मादतो अथे-
त्येतद्धेत्वर्थे समुदीरितमि'ति शब्दनिर्णये ॥ 'असत्यमप्रतिष्ठं ते जग-

---

शेषरसाः । नृपु तव मायया स्वगतया कुशलं त्वयि सुधियोऽङ्ग भेद
धातुमनुप्रभवः । कथमनुवर्तिनां भवभयं तव भ्रुकुटी सृजति
नृणाम् ॥ ३३ ॥ इह भवच्चरणेषु सुजातभुवो जितहृषीकवायुभिरदा
महत्तुरगैः । य इह यतन्त्यनतिलोलमुपायविदो व्यसनशताभित

मपहाय गुरोश्चरणम् ॥ ३४ ॥ वणिज इवोच्छ्लसन्त्यकृतकर्णधरा जलधौ
स्वजनसुतात्मदारधनधामधराः । सुखशान्तिमति त्वयि हि सन्ति न तानि
गुणां विभव उद्यति श्रयत आत्मनि सर्वरसे ॥ ३५ ॥ इति सदजानतां
मिथुनतो रतये चरतां सुखयति को न्विहाद्य विजने स्वनिरस्तभगे । भुवि
पुण्यतीर्थसदना ह्यषयो निविशन्त्यतस्त्वाऽनु भवतः पदाम्बुजं हृदाऽघभिदं
दधति । सकृन्मनस्त्वयि चिदात्मनि नित्यखे न पुनरुपासते पुरुषसार
हरावसथम् ॥ ३६ ॥ इदमप्यथो वदन्ति चेन्ननु तर्का व्यभिचरन्ति

दाहुरनीश्वरमि'ति च। वेदोक्तो जीवव्यतिरिक्तेश्वरो न तर्कैरपनेतुं शक्यः। यतस्तर्का व्यभिचारिणः। मृषैव क्वचित्तर्कः॥ इष्टसाधनादि-तर्कस्तु व्यभिचारी। शरीरसम्मित आत्मेत्यादिदर्शनपरिकल्पितस्तु मृषैव। ततो भयबुद्धीनां बुद्धिव्यवहितये भवन्ति। न तु धीराणाम्। विकल्पः वेदविरुद्धकल्पना। अन्धपरम्परयैवान्वहमुषितः। यस्मा-द्भारत्यपि भ्रमति बहुधा वदति। 'बहूक्तिरन्यथाज्ञप्तिः परिवृत्तिश्च कथ्यते। भ्रम इत्येव विद्वद्भिस्तथा चङ्क्रमणं क्वचिदि'ति शब्दनिर्णये॥ उरुवृत्तिभिरूढजवा अनन्तगुणाकरत्वाद्भगवतः बहुगुणकर्माणि वदन्ती वेगवती वेदवाक्। अतो वेदेऽपि बहुधावचनात्तदर्थनिर्णयाभावाद्विरुद्ध-कल्पना युक्ताऽसुराणाम्। यस्माद्गर्भस्थस्य जीवस्येश्वरत्वं नास्ति अतो निधनानन्तरं च नरकादिगमनान्न विद्यते। अनिमित्तकं भगवन्निमित्त-मेव। तस्यान्तरा भाति मृषा त्वयि जीवे। न तु वस्तुतस्त्वं जीवः। एकरसे प्रधानसारे। न च जीवो वस्तुतः सर्वोत्तमसारः। मृषैव तथा मन्यन्ते। अतो भ्रान्त्या द्रविणवानभिजन्मवानित्यादि विरुद्धकल्पना-पथैरुपगीयते। यतो भवानेव द्रविणवान्। यतश्च तपो दमाद्या अभि-जन्मकारणभूता गुणाश्च भवत एव। अतो मिथ्यामनोविलासं जीवेश्वरत्वं बुधा अवयन्ति। 'गुणा एवाभिजात्याख्यास्तद्वानेवाभिजातिमान्। अतोऽभिजात्यवान्विष्णुस्तदन्ये तूपचारत'इति शब्दनिर्णये॥ 'ये जीव-मीशं प्रवदन्ति तर्कैस्तच्चेश्वरो वचनं सन्दधाति। नासीदादौ मरणे नोऽभविष्यन्मृषा ततो हीशितृत्वं स्वपेष्वि'ति विपरीतश्रुतिः॥ 'ये जगत्प्रवदन्त्यज्ञा जीवादन्येशवर्जितम्। तेषामपि तु तां वाचमीश एव ददात्यजः। न च तर्कैर्भवेदीशो जीवो वेदविरोधतः। व्यभिचारिणो यतस्तर्का इष्टसाधनगा अपि। क्वचित्क्वचिन्मृषातर्काः कणादादि-प्रदर्शिताः। तत्त्वनिर्णयभीरूणां व्यवधानकरास्ततः। नैव तु स्थिरबुद्धीनां कुर्युस्ते बुद्धिचालनम्। पारम्पर्येण चाज्ञानामुक्त्या लोकेषु विस्तृतम्। पठ्यते चाप्यहरहर्न तु विद्वन्मुखोद्गतम्। अनन्तगुणकर्मत्वादीशस्योक्तौ सुवेगिता। वक्त्यभेदमिवाज्ञानां नाभेदं कुत्रचिच्छ्रुतिः। एक आत्माऽ-द्वयेत्यादिपदानामर्थनिर्णये। न वर्तते श्रुतिर्यस्माद्गुणान्तरकुतूहलात्। अथवा मोहनार्थाय सुरारीणामनर्हतः। कुत्रचिन्निर्णयवचः सुराणामर्थ-सिद्धये। नहीशितृत्वं गर्भस्थे नाप्यसौ निरयोपगे। मृषैव ईश्वराभेदः सर्वोत्कर्षश्च जीवगः। धनवत्त्वं च कर्तृत्वं बलवत्त्वं च विष्णवि। अतो जीवेश्वराभेदं मिथ्येति कवयो विदुरि'ति तन्त्रभागवते॥ 'जीवस्य जगतश्चैव यदीशाभेदतो वचः। अतात्विकं जगच्चेति विष्ण्वधीनत्व-वाचकम्। अभेदस्तु कुतस्तस्य परमस्यावरेण तु। मिथ्यात्वं च कुत-स्तस्य जगतो नित्यवर्तनादि'ति वाराहे॥ (२३)॥ ३७॥ (२४)॥ ३८॥

श्रुतिषु तवानुगीतान् गुणान् जुषन् पुमानुदगादस्मात्संसारात्तव सरूपतां च भजति। तदनुगुणस्मरणमनुगुणांश्च जुषन्निति चशब्दः कर्मणि चेत्यस्मिन्नर्थे। यच्चायं पुमानात्तभगां त्वयाऽपहृतभगां प्रातिस्विकीं पूर्वोक्तां द्विविधां कष्टां प्रकृतिं जहाति। जिहाति हन्ति च तदपि त्वमेव जहासि जिहासि च। उतेति त्यागवधयोः समुच्चयार्थे। 'जिहाति रावणं सङ्ख्ये राघवः परमास्त्रविदि'ति स्कान्दे॥ 'स्वातन्त्र्या-त्प्रकृतित्यागकर्ता नारायणः परः। यद्यप्येषा जीवसंस्था हन्ता च भगवान्प्रभुरि'ति गारुडे। महसि महीयसे पूजयसि पूज्यसे चात्मनैव। 'स्मरन् ब्रह्मगुणान्नित्यं मुक्तो ब्रह्मसरूपताम्। दुर्भगां प्रकृतिं त्यक्त्वा

---

क्वचित्क्वचिन्मृषा च। ततो भयदृग्व्यवहितये विकल्प उषितोऽन्वहमन्ध-परम्परया भ्रमति भारती च तवोरुवृत्तिभिरूढजवा॥ ३७॥ न यदिद-मग्र आस न भविष्यदतो निधनादनिमित्तकमन्तरा त्वयि विभाति मृषैकरसे। अत उपगीयते द्रविणजातिविकल्पपथैर्वितथमनोविलास-मिदमित्यवयन्ति बुधाः॥ ३८॥ उदगात्पुमाननुगीतगुणांश्च जुषन्भजति सरूपतां तदनु त्वमुत जहासि जिहासिताम्। अहिरिव त्वचं परमात्त-

हत्वा चान्यां दुरन्वयाम् । याति तच्च परेशानात्स हि पूज्योऽथ पूजकः । तस्यैकस्य स्वतन्त्रत्वात्स चानन्तगुणो विभुरि'ति कौशिकश्रुतिः ॥(२५)॥ ॥ ३९ ॥ [40]अज्ञानामनवगतान्तकादनधिरूढब्रह्मपदात् । 'स यथा-कामो भवति । तत्क्रतुर्भवति । यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यत इति तु कामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येती'ति श्रुतिः । 'निषिद्धकामयुक्तानामसतां तु विशेषतः । दुर्ज्ञेयो भगवान्विष्णुर्हृदिस्थोऽस्मृतहारवत् । अकामत्वेन भजतां ददात्यभयमन्तकात् । पूर्णानन्दादि तेऽश्नन्ति पूर्णानन्दादिकाः स्वतः । ब्रह्मणो ब्रह्मसम्पत्तिमत आह श्रुतिः स्फुटम् । न परब्रह्मताऽवाप्तिर्न ते विष्णाविति श्रुतेः । परब्रह्मता चैषां ब्रह्मलोकात्परा गतिः । न परब्रह्मरूपत्वमेतमेवेति च श्रुतेः । अन्येषां म्रियमाणानां प्राणा भागत एव तु । देवतास्वेकतां यान्ति भागतोऽनुव्रजन्ति तम् । ज्ञानिनां मुच्यमानानां नैव यान्ति स्वदेवताः । तेनैव सह संयान्ति ततोऽनुत्क्रमणः(ण) श्रुतिरि'ति ब्रह्मतर्के ॥ 'देवाश्च ऋषयश्चैव सुभक्त्या कामिनोऽपि तु । मुच्यन्ते नियमादेव पश्यन्ति च हरिं न ने'ति स्कान्दे ॥ (२६) ॥ ४० ॥ [41]परमेश्वरस्यावगमात्तदवगमा श्रीः । तया च गम्यत्वादर्थः परमस्तेन बद्धत्वात्सिता श्रीर्गुणात्मिका च । सगिरः । वाक्पूर्वकाणीन्द्रियाणि श्रियो विष्णोश्च नानुकूल्येन ययुः । अनुययुश्च हंसकुलगीतपरम्परया । यथा तुषावृतानां तण्डुलानां रजस्पृष्टिर्नास्ति एवं रजोरूपान्मनुष्यान्न वान्ति श्रुतयः । वयसा सह महता कालेनापि । अतस्त्वयि सफलं पतन्ति न पतन्ति च विधि-

---

भगां महसि महीयसेऽष्टगुणोऽपरिमेयभगः ॥ ३९ ॥ यदि न समुद्धरन्ति यतयोऽपि हृदि कामजडादुरधिगमोऽसतां हृदि गतोऽस्मृतकण्ठमणिः । अनुतृतयोगिनामभयो भगवन्ननवगतान्तकादनधिरूढपदाद्भवतः ॥ ४० ॥ तदवगमार्थसितासितयोर्गुणविगुणयोर्नहि देहभृतां सगिरः । अनुययुरत्र



निषेधरूपेण बन्धनात्मिकाः । 'जानाति प्रकृतिर्विष्णुं ज्ञेयो विष्णुस्तु निर्गुणः । तावुभौ न विजानन्ति ऋते ब्रह्मपरम्परामि'ति महोपनिषदि ॥ 'अन्ये सर्वे श्रिया बद्धाः श्रीर्बद्धा विष्णुनैव तु । बन्धश्च विष्णुतन्त्रत्वं मुक्तानां च श्रियस्तथा । अमुक्तानां तु बद्धत्वं जन्म-मृत्यादिदुःखिता । हेयो बन्धश्च सैव स्यान्न तु स्वोच्चवशे स्थितिः । गुणात्मिका च सा देवी निर्गुणः पुरुषोत्तमः । सैव विष्णुं विजानाति ज्ञेयो ज्ञाता च केशवः । न तावन्ये विजानन्ति विना हंसपरम्पराम् । तथापि नैव जानन्ति मानुषा असुरास्तथा । निष्फलैवासुरे तस्माच्छ्रुति-रन्धाय केवला । निषेधविध्युत्क्रमणात्तमस्येव विनिक्षिपेत् । निष्फला सफला चैव मानुषाणां तु मध्यतः । सफलैव तु देवानां नियतं मुक्तिदायिनी । श्रीगरुड उवाच । के हंसाः कः परो हंसः के च पारावता गणाः । के च तित्तिरयस्तत्र के शुकाः के च वायसाः । श्रीभगवानुवाच । परो हंसोऽहमेवैको हंसा ब्रह्माण एव तु । पारावता देवतास्तु मुनयस्तित्तिराः स्मृताः । मानुषास्तु शुकाः प्रोक्ता आसुराश्चैव वायसाः । प्राप्यं प्राप्तं यतो नित्यं पूर्णं सर्वोत्तमं मया । अतः परमहंसोऽहं तदनन्तरमेव तु । यतः प्राप्तमिवाशेषं सर्वजीवोत्तमं शुभम् । अतो ब्रह्मपदे योग्या जीवा हंसाः प्रकीर्तिताः । तेषां परम्पराप्राप्तं यैर्ज्ञानं नियमेन तु । ते मुच्यन्ते नैव चान्ये गुरुर्ब्रह्मा यतो नृणाम् । दैवतं त्वहमेवैको मामवित्त्वा न मुच्यते । परं प्रति यतो नीचा ब्रह्मणः सर्वदेवताः । पारावतास्ततः प्रोक्तास्तैस्तीर्णा संसृतिर्यतः । तित्तिरा मुनयस्तस्मात्कासुखत्वात्तु मानुषाः । शुका इति समुद्दिष्टा वयोमात्रगुणत्वतः । वयसोऽन्ते तु दुःखित्वादसुरा वायसाः स्मृताः । एवं षड्विधा जीवाः षष्ठोऽहं परमेश्वरः । न मत्समोऽधिको वापि कश्चि-

---

हंसकुलगीतपरम्परया न तुषावरणा इव रजांसि वान्ति । वयसा सह श्रुतयस्त्वयि सफलं पतन्ति न पतन्ति बन्धनाः ॥ ४१ ॥ इत्यशेष-

दस्ति द्विजोत्तमे'ति गारुडे ॥ (२७) ॥ ४१ ॥ [43]व्योमायनमहात्मभि
ब्रह्माश्रयेषूत्तमैः ॥ ४३ ॥ '[48]कथाः कथयतीशस्य व्यासस्यान्ते
नारदः । स्तुत्यर्थं तस्य देवस्य ज्ञापनाय न तु क्वचित् । पूर्णज्ञाना
मृतस्यास्य न तु ज्ञप्तिः पराद्भवेत् ॥ ४८ ॥ [50]ऋषिरूपी यतो विष्णु
स्वयमेव जनैः श्रुत'इति ब्राह्मे । ऋषिणा ऋषिरूपेण ॥ ५० ॥ इति
श्रीमद्भागवतदशमस्कन्धतात्पर्ये श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
चतुर्नवत्यध्यायः ॥ ९४ ॥ दशमस्कन्धः सम्पूर्णः ॥

---

## एकादशः स्कन्धः

### द्वितीयोऽध्यायः

श्रीवेदव्यासाय नमः ॥ '[46]आत्मनो भजने बुद्धिमुत्पाद्य फलदा

---

समाम्नायपुराणोपनिषद्रसः । समुद्धृतः पूर्वजैस्तैर्व्योमायनमहात्मभिः ॥४३॥ एवं स गुरुणाऽऽदिष्टो गृहीत्वा श्रद्धयाऽऽत्मवान् । पूर्णः सद्यस्ततो राजन् प्राह वीरव्रतो गुरुम् ॥ ४५ ॥ नारद उवाच—नमस्तस्मै भगवते कृष्णायामलमूर्तये । यो धाता सर्वभूतानामभयो यस्य ते कलाः ॥ ४६ ॥ इत्याद्यमृषिमामन्त्र्य तच्छिष्यांश्चामलात्मकान् । ततोऽगादाश्रमं साक्षात्पितुर्द्वैपायनस्य मे ॥ ४७ ॥ सभाजितो भगवता कृतासनपरिग्रहः । तस्मै तद्वर्णयामास नारायणमुखाच्छ्रुतम् ॥ ४८ ॥ यो ह्यात्मा जगदादिमध्यनिधनो योऽव्यक्तजीवेश्वरो यः सृष्ट्वेदमनुप्रविष्ट ऋषिणा चक्रे पुरः संहिताम् । यं सम्पद्य जहात्यजामनुशयी सुप्तः कुलायं तथा तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम् ॥ ५० ॥

---

## एकादशः स्कन्धः

### द्वितीयोऽध्यायः

भूतानां देवचरितं दुःखाय च सुखाय च । सुखायैव हि साधूनां त्वादृशामच्युतात्मनाम् ॥ ५ ॥ भजन्ति ये यथा देवान् देवा अपि तथैव



सुराः । उत्तमानां जनानां तु निकृष्टानां विपर्ययः । शुभाशुभफलानां तु कर्मणां विबुधाः सदा । प्रवर्तका यथायोग्यमृषयः करुणाः सदा । सुखमिच्छन्ति भूतानां प्रायो दुःखासहा नृणाम् । तथापि तेभ्यः प्रवरा देवा एव हरेः प्रिया'इत्युद्दामसंहितायाम् ॥ ६ ॥ '[38]आत्मनो देहगेहादि द्वयशब्देन भण्यते । अविद्यमानं जीवस्य प्रतिभाति तदीयवत् । जाग्रद्वत्तु यथा स्वप्नः प्रतिभाति मनोरथः । विद्यमानवदेवैतद्देहादीशवशे स्थितम् । विभाति स्ववशत्वेन सैषा संसृतिरुच्यते । तस्मात्तद्विषयं त्यक्त्वा मनो विष्णौ निवेशयेदि'ति हरिवंशेषु ॥ ३८ ॥ '[40]केचिदुन्मादवद्भक्ता बाह्यलिङ्गप्रदर्शकाः । केचिदान्तरभक्ताः स्युः केचिदेवोभयात्मकाः । मुखप्रसादाद्दाढ्याच्च भक्तिर्ज्ञेया न चान्यत'इति वाराहे ॥४०॥ '[41]सर्वं हरेर्वशत्वेन शरीरं तस्य भण्यते । अनन्याधिपतित्वाच्च तदनन्यमुदीर्यते । न चाप्यभेदो जगता विष्णोः पूर्णगुणस्य वि'ति हरिवंशेषु ॥ ४१ ॥ '[45]पूर्णत्वादात्मशब्दोक्तः कश्चित्सर्वपरोत्तमः । सोऽपि नारायणो नान्यः स च सर्वेषु संस्थितः । तद्वशा इतरे सर्वे श्रीब्रह्मेशपुरःसराः । स एव तु स्वभक्तेषु स्थित्वाऽनुग्रहकारकः । अज्ञेष्वज्ञानयन्ता च द्विषत्सु द्वेषकारकः । तत्प्रेरितास्तदन्ये तु प्रियद्वेषादिकारिणः । अतस्तत्प्रेरणादेव प्रेमाद्या मम जज्ञिरे । इति पश्यति यो बुद्ध्या स तु भागवतोत्तमः ॥ ४५ ॥ [46]सर्वाधिकं

---

नाम् । छायेव कर्मसचिवाः साधवो दीनवत्सलाः ॥ ६ ॥ अविद्यमानोऽप्यवभाति हि द्वयो ध्यातुर्धिया स्वप्नमनोरथौ यथा । तत्कर्मसङ्कल्पविकल्पकं मनो बुधो निरुन्ध्यादभयं ततः स्यात् ॥ ३८ ॥ एवंव्रतश्च प्रियनामकीर्त्या जातानुरागो द्रुतचित्त उच्चैः । हसत्यथो रोदिति रौति गायत्युन्मादवन्नृत्यति लोकबाह्यः ॥ ४० ॥ खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्त्वानि दिशो द्रुमादीन् । सरित्समुद्रांश्च हरेः शरीरं यत्किञ्च भूतं प्रणमेदनन्यम् ॥ ४१ ॥ हरिरुवाच—सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः । भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥४५॥ ईश्वरे तदधीनेषु

पृथग्विष्णुं क्षीरसागरवासिनम् । ज्ञात्वा तत्र प्रेमयुक्तस्तद्भक्तेषु
मैत्रयुक् । कृपावांश्च तदज्ञेषु तद्द्वेषिणामुपेक्षकः । तद्वशत्वं न जाना
सर्वस्य जगतोऽपि तु । [47]तमाहुर्मध्यमं भक्तमर्चायामेव संस्थितम्
विष्णुं ज्ञात्वा तदन्यत्र नैव जानाति यः पुमान् । तारतम्यं
तद्भक्तेर्न जानाति कथञ्चन। अवजानंश्च तद्भक्तानात्मनो भक्तिदर्पित
उपेक्षकोऽपि वा तेषु न स्मरेदथवापि तान् । मानुषेषु यथा कश्चि
त्किञ्चिदुच्चः प्रदृश्यते । एवमेवोच्चतां विष्णोरल्पां पश्यति चान्यतः
ते तु भक्ताधमाः प्रोक्ताः स्वर्गादिफलभागिनः । तैर्विघ्निता अ
यान्ति तद्भक्तानामुपेक्षकाः । कुर्युर्विष्णावपि द्वेषं देवा देवावमानिनः
पूजिता विष्णुभक्तिं च नावज्ञेयास्ततः सुराः । उपेक्षकेषु देवा
भक्तिनाशं स्वयं हरिः । करोति तेन विभ्रष्टाः संसरन्ति पुनःपुनः
अधो वा यान्ति विद्वेषात्पूज्या देवास्ततः सदा । यस्तान्द्वेष्टि स
द्वेष्टि यस्ताननु स चानु तम् । ऐकात्म्यमागतं विद्धि देवैस्तद्भ
पूरितैः । उपेक्षकस्तु देवानां यदैव निरयोपगः । तदा तु
वक्तव्यमुपेक्षायां जनार्दने । विष्णोरुपेक्षकं सर्वे विद्विषन्त्यधिकं सुराः
पतत्यवश्यं तमसि हरिणा तैश्च पातितः । भुङ्क्ते स्वर्गफलं नित्यं नि
नैव गच्छति । विष्णोस्तु मध्यमो भक्तो जायते मानुषेषु च । अम
न्देवता यस्तु भजते पुरुषोत्तमम् । योग्यः संस्मरते देवानयोग्यो
केशवम् । यस्तूत्तमो भागवतः स मुक्तिं परमां व्रजेत् । विष्णु
सर्वदेवैश्च मोदते सह नित्यद(ा)'इति च ॥ ४६, ४७ ॥ [48]विष्णोर्मा
विष्ण्विच्छाधीनाम् । 'विष्णोरिच्छानुसार्येतज्ज्ञात्वा योग्यं न चाधिक
हृष्यति द्वेष्टि वा यस्तु स वै भागवतोत्तम'इति च ॥ 'सतां वृद्धि

बालिशेषु द्विषत्सु च । प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यम
॥ ४६ ॥ अर्चायामेव हरये पूजां यः श्रद्धयेहते । न तद्भक्तेषु चा
स भक्तः प्राकृतः स्मृतः ॥ ४७ ॥ गृहीत्वाऽपीन्द्रियैरर्थान्यो न द्वेष्टि



र्मस्त्वसतां ह्रासकारकः । अयं तु निश्चितो धर्मो ह्यधर्मोऽन्यो
विनिश्चितः । हर्षः सत्सु तथाऽसत्सु धर्मो धर्मविपर्ययः । तेषां वृद्धौ
तथा हानौ सर्वं ज्ञेयमशेषतः । एतदर्थं च धर्माणां मर्यादा वैदिकादिका ।
मूलधर्मविरुद्धा तु सा न ग्राह्या कथञ्चने'ति च ॥ ४८ ॥ [49]देहेन्द्रिय-
प्राणधियां त्रिधैव त्वभिमानिनः । तत्रोत्तमा देवतास्ता सर्वदोषविवर्जिताः ।
गुणैः सर्वैः सुसम्पन्ना विरिञ्चादुत्तरोत्तरम् । मध्यमा गुणदोषेता
असुरा अवमा मताः । ते सर्वे दोषसंयुक्ता आचित्तादुत्तरोत्तरम् ।
तेभ्योऽन्यो मानुषो जीवस्ताभ्यां देवासुरावपि । जीवाभिमानिनश्चैव
त्रिविधाः सम्प्रकीर्तिताः । जीवमान्युत्तमो ब्रह्मा मध्यमः स्वयमेव तु ।
अधमः कलिरुद्दिष्टस्तत्र मध्यमनीचयोः । मृतिजन्मक्षुधादुःख-
प्रभृत्यखिलमेव तु । नोत्तमस्य तु जीवस्य देहादेश्च कथञ्चन । जन्मादि-
कृतदुःखं तु देहमान्यसुरस्य ह । सुप्त्याद्यप्ययजं दुःखमसुरेन्द्रिय-
मानिनः । क्षुन्निमित्तं तु यद्दुःखं प्राणमान्यसुरस्य तत् । भयतर्षादिजं
दुःखं मनोमान्यसुरस्य च । केवलं त्वान्तरं दुःखं बुद्धिमान्यसुरस्य तत् ।
नीचोऽस्मीति तु यद्दुःखमहंमान्यसुरस्य तत् । अतीतादिस्मृतेर्दुःखं
चित्तमान्यसुरस्य च । जीवमान्यसुरस्य स्यात्सर्वं तत्समुदायतः । एवमेव
सुखं देवेषूभयं मध्यमेषु च । असुराणामधर्मस्य वृद्ध्या सुखमपीष्यते ।
देवानां नैव केनापि दुःखं प्रीतिस्तु धर्मतः । अधर्मोऽपि प्रीतये
स्यादसुराणामधोगतेः । देवानां पुण्यपापाभ्यां सुखमेवोत्तरोत्तरम् ।
तेषां दुःखादिकं किञ्चिदसुरावेशतो भवेत् । प्राणस्य नासुरावेश आख-
णाश्मसमो हि सः । सम्पूर्णानुग्रहाद्विष्णोः प्राणः पूर्णगुणो मतः ।
असुराणां सुखाद्याश्च देवावेशादुदीरिताः । स्वतस्तु निर्गुणाः सर्वे सर्व-
दोषात्मका मताः । विविच्यैवं जगत्सर्वं स्वात्मानं च पृथक्स्थितम् ।

हृष्यति । विष्णोर्मायामिमां पश्यन्स वै भागवतोत्तमः ॥४८॥ देहेन्द्रिय-
प्राणमनोधियां यो जन्माप्ययक्षुद्भयतर्षकृच्छ्रैः । संसारधर्मैरविमुह्यमानः

सर्वतश्च पृथक्सन्तं विष्णुं सर्वोत्तमोत्तमम्। जानन्ति ये भागवतास्त उक्ता उत्तमोत्तमा'इति ब्रह्मतर्के ॥ देहेन्द्रिययोर्जन्माप्ययौ ॥ ४९ ॥ [52]चित्ते विद्यमाने। स्वात्मनि केवलात्मभावे मोक्षे च। यस्य जीव परयोरभेदो नास्ति। 'न क्वापि जीवं विष्णुत्वे संसृतौ मोक्ष एव च। यः पश्यति सुरादींश्च यथोत्कर्षं प्रपश्यति। स सर्वभूतसमदृग्विष्णुं सर्वोत्तमं स्मरन्नि'ति हरिवंशेषु ॥ 'नैवं त्वयाऽनुमन्तव्यं दृष्टो जीवो मयेति ह। सर्वभूतगुणैर्युक्तं देवं त्वं ज्ञातुमर्हसी'ति च मोक्षधर्मेषु ॥ 'नैवं त्वयाऽनुमन्तव्यं जीवात्माहमिति क्वचित्। सर्वैर्गुणैः सुसम्पन्नं देवं मां ज्ञातुमर्हसी'ति च वाराहे ॥ ५२ ॥ इति एकादशतात्पर्ये द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः

[3]आत्मप्रसिद्धये भूतानां भगवज्ज्ञानार्थम् ॥ ३ ॥ [5-6]एवं गुणान्भुञ्जानो भगवान्। तं सृष्टं मन्यमानो जीव इह सज्जते। 'शरीरदोषहानेन गुणभोक्तारमीश्वरम्। शरीरस्थतया जीवं मन्यमानः पतत्यधः। तत्सृष्टा हि सदा जीवा देहादेर्जनिमत्त्वतः। नित्यानन्दैकदेहोऽसौ विष्णुस्तत्कैकताऽनयोरि'ति च ॥ ५, ६ ॥ '[7]आभूतसम्प्लवा

स्मृत्या हरेर्भागवतप्रधानः ॥४९॥ न यस्य स्वः पर इति चित्ते स्वात्मनि वा भिदा। सर्वभूतसमः शान्तः स वै भागवतोत्तमः ॥ ५२ ॥

### तृतीयोऽध्यायः

अन्तरिक्ष उवाच—एभिर्भूतानि भूतात्मा महाभूतैर्महाभुज। ससर्जोच्चावचान्यादौ स्वयमात्मप्रसिद्धये ॥ ३ ॥ एवं सृष्टा स भूतानि स्थविष्ठैः पञ्चधातुभिः। एकधा दशधाऽऽत्मानं विभजन् जुषते गुणान् ॥४॥ गुणैर्गुणान् स भुञ्जान आत्मप्रद्योतितैः प्रभुः। मन्यमान इदं सृष्टमात्मानमिह सज्जते ॥५॥ कर्माणि कर्मभिः कुर्वन् सनिमित्तानि देहभृत्। तत्तत्कर्मफलं गृह्णन् भ्रमतीह सुखेतरम् ॥६॥ इत्थं कर्मगतीर्गच्छन् बहु-





जन्म जीवेशत्वं विजानतः। ततः पतत्यधो यस्मादुत्थानं नैव तु कचिदि'ति च ॥ ७ ॥ '[8]कालाख्यः कलनाद्विष्णुर्व्यक्तमव्यक्तगं नयन्नि'ति च ॥ ८ ॥ [13]अव्यक्तं विशतीत्युक्त्वा तस्य विस्तारो वारिणा हृतगन्धेत्यादि। 'सङ्क्षेपविस्तराभ्यां तु कथयन्ति मनीषिणः। बहुवारस्मृतेस्तस्य फलबाहुल्यकारणादि'ति शब्दनिर्णये ॥ १३ ॥ [15]नभ आत्मनि लीयत इत्युक्त्वेन्द्रियाणीत्याद्यपि विस्ताराय ॥१५॥ [16]आत्मनि बुद्धौ ॥१६॥ '[17]त्रिवर्णावरणादुक्ता त्रिगुणानां हरेर्मतिः। गुणात्मकत्वात्प्रकृतिस्त्रिवर्णेति प्रकीर्त्यते। तत्र तु प्रकृतिस्तार्या तारिका तु हरेर्मतिः। उभयं विष्णुमायोक्तं ज्ञातव्यमुभयं तथे'ति च ॥ 'बहूनां सहनिर्देश एकयाऽभिधयैव तु। तयैवाभिधया तेषां परामृश्यैकमुच्यते। नामैतामान्तरीं रीतिं विदुः शब्दविदो जना' इति च ॥ १७ ॥ [21]मण्डलवर्तिनः युद्धरङ्गस्थाः ॥ २१ ॥ [23]देवाः सजाया मुच्यन्ते मानुषा उभयात्मकाः। विजाया एव योगेशा तेषां या यैव योग्यता।

निद्रावहः पुमान्। आ भूतसम्प्लवात्सर्गप्रलयावश्नुतेऽवशः ॥ ७ ॥ धातूपप्लव आसन्नेऽव्यक्तं द्रव्यगुणात्मकम्। अनादिनिधनः कालो ह्यव्यक्ताय विकर्षति ॥ ८ ॥ वारिणा हृतगन्धा भूः सलिलत्वाय कल्पते। सलिलं हृतरसं ज्योतिष्ट्वायोपकल्पते ॥१३॥ कालात्मना हृतगुणं नभ आत्मनि लीयते। इन्द्रियाणि मनो बुद्धिः सह वैकारिकैर्नृप ॥ १५ ॥ प्रविशन्ति ह्यहङ्कारं स्वगुणैरहमात्मनि ॥ १६ ॥ एषा माया भगवतः सर्गस्थित्यन्तकारिणी। त्रिवर्णा वर्णिताऽस्माभिः किं भूयः श्रोतुमिच्छसि ॥ १७ ॥ राजोवाच—यथैतामैश्वरीं मायां दुस्तरामकृतात्मभिः। तरन्त्यञ्जः स्थूलधियो महर्ष इदमुच्यताम् ॥१८॥ प्रबुद्ध उवाच—कर्माण्यारभमाणानां दुःखहत्यै सुखाय च। पश्येत्पाकविपर्यासं मिथुनीचारिणां नृणाम् ॥१९॥ नित्यार्तिदेन वित्तेन दुर्लभेनात्ममृत्युना। गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैः ॥२०॥ एवं लोकं परं विद्यान्नश्वरं कर्मनिर्मितम्। अतुल्यातिशयध्वंसाद्यथा मण्डलवर्तिनाम् ॥ २१ ॥ तत्र भागवतान् धर्मान् शिक्षेद्गुर्वात्मदैवतः। अमाययाऽनुवृत्त्या च तुष्येदात्माऽ-

तथा तथैव मुच्यन्ते नान्यथा तु कथञ्चने'ति संदृश्ये ॥२३॥ [24]सन्तस्तु त्रिविधाः प्रोक्ता उत्तमा मध्यमाधमाः । उत्तमा देवतास्तत्र ऋष्याद्या मध्यमा मताः । अधमा मानुषोत्कृष्टास्ते चापि त्रिविधा मताः । तत्राधमेषु येषां तु सङ्गो विघ्नाय वै भवेत् । तेषामुत्तमसङ्गस्य तेषां सङ्गं परित्यजेत् । आदौ तु तेषामपि च सङ्ग उत्तमसङ्गतेः । साधनत्वात् तु त्याज्यो यदि त्यक्तुं न शक्यते । तदा तेऽपि तथा नेया यथा विघ्नो न वै भवेत् । तदुच्चसङ्गतेः क्वापि तदा दोषो न जायते । प्रयोजनाय तेषां तु सङ्गः सर्वात्मनेष्यते । सर्वथा चैव देवेषु सङ्गो मुनिगणेषु च । भाव्यो हि तं विना नैव पुरुषार्थः कचिद्भवेत् । विशेषतः स्वोत्तमेषु विना सङ्गं न मुच्यते । स्वनीचेषु तु देवेषु विना सङ्गं न पूर्यते । तस्मात्सत्स्वुत्तमेष्वेषु सङ्गं कार्यो विशेषतः । अनाद्यनन्तकालेषु न च हाप्यः कथञ्चन । सतां तदुत्तमेशेशे किमु विष्णौ परात्पर'इति गारुडे ॥ 'बह्वपेक्षो हि जिज्ञासुरतो देहादिवृत्तये । किञ्चित्सत्स्वपि सङ्गी स्यादशक्ये सति वर्तने । कृतकृत्यस्त्यजेत्सङ्गं सदा गुरुसुरादिषु । सङ्गी स्यान्न हि तत्सङ्गं विना तु सुखभाग्भवेत् । तस्मादनाद्यनन्तैव सक्तिर्गुरुसुरादिषु । अन्यत्र कृत्यापेक्षा स्यादिति सङ्गविनिर्णय' इति भविष्यत्पर्वणि ॥ २४ ॥ [27]श्रद्धा भागवते तन्त्रे वेदे भारतपञ्चमे । विष्णोरव्यवधानेन वक्तृत्वात्सर्वथा भवेत् । कलाविद्यास्वनिन्दा च व्यवधानेन केशवे । प्रवेशाद्यतिभिः कार्या ह्यन्यथा नरकं व्रजेत् । श्रद्धामास्तिक्यबुद्धिः स्यात्सा चैव द्विविधा मता । अत्रोक्तमस्तीत्येकाऽत्र ममात्रास्ति प्रयोजनम् । इत्यन्या तत्र पूर्वा तु यत्र कार्या कलास्वपि । द्वितीया न तु कर्तव्या पञ्चरात्रविरोधिषु । सर्वैर्निन्दा सर्वैश्च ब्रह्मादिस्थावरान्तकैः । सम्यक्कार्या तद्विना च तमो याति

ऽत्मदो हरिः ॥२३॥ सर्वतो मनसो सङ्गमादौ सङ्गश्च साधुषु । दयां मैत्रीं प्रश्रयं च भूतेष्वद्धा यथोचितम् ॥२४॥ श्रद्धां भागवते शास्त्रेऽनिन्दामन्यत्र



विनिश्चयात् । कुर्वन्त्येव सुरास्तत्र तदन्येषां तमो भवेत् । पञ्चरात्रं च वेदाश्च मूलरामायणं तथा । पुराणं भागवतं चैव भारतं च विभिद्यते । एतेष्वपि यथा विष्णोराधिक्यप्रतिपादनम् । तद्भक्तानां च क्रमशः स एवार्थो न चापरः । अन्यथादृश्यमानं तु मोहायैव विनिर्दिशेत् । तस्मात्सर्वेषु शास्त्रेषु विष्णोराधिक्यमेव तु । क्रमेण च तदीयानां प्रतिपाद्यं न चापरमि'ति ब्रह्माण्डे । 'अन्धंतमः प्रविशन्ति येऽविद्यामुपासते । ततो भूय इव ते तमो य उ विद्यायाꣳ रता'इति च । 'गृहिणोऽप्यल्पबोधस्य न कलासु प्रयोजनम् । आवर्तयेद्वेदतन्त्रं मुख्योक्तो हरिरत्र ही'ति हरिवंशेषु ॥ २७ ॥ [30]कृष्णात्मनाथेषु मनुष्येष्वपि सौहृदं किमु देवेषु महत्सु देवादिषु ॥ ३० ॥ [36]अहेतुः स्वस्य हेतुरन्यो नास्ति । बहिः प्रलये मुक्तौ च ॥ ३६ ॥ '[37]ब्रह्माद्या यं न जानन्ति करणाद्यभिमानिनः । जानन्त्यनुग्रहाच्चास्य प्रधानाग्निं यथार्चिषः । अग्निपुत्रा नमस्तस्मै यमाह श्रीश्च तत्स्फुटम् । वेदरूपा परं देवं वैलक्षण्यात्समस्ततः । आनन्दो नेदृशानन्द इत्युक्ते लोकतः परम् । प्रतिभाति न चाभाति यथावद्दर्शनं विने'ति ब्रह्मतर्के । बोधकः परमेश्वरः । ईदृशानन्दो न भवतीति निषेधवचनार्थ एव न सिध्यति विलक्षणानन्दाभाव इत्यर्थतः सिद्धिः ॥ ३७ ॥ '[38]त्रिगुणात्मकं प्रधानं च रजः सत्वं तमस्तथा । प्राणो महानहङ्कारो जीवास्तदभिमानिनः । ज्ञानात्मकानीन्द्रियाणि तथा कर्मात्मकानि च । शब्दाद्यर्थाः सुखं

चापि हि । मनोवाक्कायदण्डश्च सत्यं शमदमावपि ॥२७॥ एवं कृष्णात्मनाथेषु मनुष्येषु च सौहृदम् । परिचर्याञ्चोभयत्र महत्सु नृषु साधुषु ॥३०॥ पिप्पलायन उवाच—स्थित्युद्भवप्रलयहेतुरहेतुरस्य यः स्वप्नजागरसुषुप्तिषु सन्बहिश्च । देहेन्द्रियासुहृदयानि चरन्ति येन सञ्जीवितानि तदवैहि परं नरेन्द्र ॥ ३६ ॥ नैनं मनो विशति वागुत चक्षुरात्मा प्राणेन्द्रियाणि च यथानलमर्चिषः स्वाः । शब्दोऽप्यबोधकनिषेधतयाऽऽत्ममूलमर्थोक्तमाह यदृते न निषेध्यसिद्धिः ॥३७॥ सत्त्वं रजस्तम इति त्रिवृदेकमादौ सूत्रं

दुःखमिति प्रोक्तं द्विधा फलम् । एतत्सर्वं हरे रूपमित्याहुर्ज्ञानदुर्बलाः।
स एव बहुशक्तित्वाद्भाति चैषां तथा तथा। एवं कारणकार्याख्यं
समस्तं हरिमेव तु। केचित्पश्यन्ति च व्यस्तं केचिदाहुरपण्डिताः।
एवं कारणकार्येभ्यः परमानन्दरूपिणम् । अज्ञानाद्बहुधा प्राहुरेकं सन्तं
सुदुर्जनाः। रूप्यत्वात्तद्वशत्वाच्च तद्रूपं चैतदीर्यते। न तु तस्य स्वरूपत्वा-
न्निर्दोषानन्दरूपिणः। कथं जडाजडैक्यं स्यात्कुतः पूर्णाल्पमोदयोः।
पूर्णाल्पज्ञानयोश्चैव पूर्णशक्त्यल्पशक्तयोः। निर्दुःखदुःखान्वितयोः स्वतन्त्र-
परतन्त्रयोः। अतः सर्वगुणैर्युक्तं सर्वदोषविवर्जितम् । अन्याभेदेन
विज्ञाय तम एव प्रपद्यते। निष्कृष्टं सर्वतो विष्णुं सर्वतश्च विलक्षणम्।
ज्ञात्वा पूर्णगुणं यान्ति मुक्तिं नास्त्यत्र संशय'इति तन्त्रभागवते ॥३८॥
‘[39]अहं हि जीवसञ्ज्ञो वै मयि जीवः सनातनः। मैवं त्वयाऽनुमन्तव्यं
दृष्टो जीवो मयेति ह। अहं श्रेयो विधास्यामि यथाधीकारमीश्वर'इति
मोक्षधर्मेषु। ‘यथेन्द्रियगतः प्राणस्तेषां शक्त्या विकल्प्यते। दृष्टिदः
श्रुतिदश्चेति मतिदो ज्ञानदस्तथा। इत्यादिभेदतो वाच्य एक एव
महाबलः। दृष्ट्यादिशक्तिस्तस्यैव ततो नान्यस्य कस्यचित्। एवं
तद्रूपकं ब्रह्म तत्तच्छक्त्या विकल्प्यते। एकमेव महाशक्तिप्राणस्यापि
बलप्रदमि'ति हरिवंशेषु ॥ ३९ ॥ ‘[40]पेशो जरायुरुद्दिष्टः सुवर्णं पेशं
उच्यते। मृदुपिण्डश्च पेशं स्यात्कचिद्भद्रमपीष्यत'इत्यभिधानम्।
अवनिस्थितेषु स्वेदजेषु। भूस्वेदेन हि प्रायो जायन्ते। तदा कूटस्थो
परमात्मन्यास जीवः। यं परमात्मानमृते सुप्त्यनुस्मृतिरेव न। ‘देहा-
देहान्तरगतौ प्रविशेत्प्राणमेव तु। जीवः प्राणः परात्मानमेवं सुप्तावपि

महानहमिति प्रवदन्ति जीवम्। ज्ञानक्रियार्थफलरूपतयोरुशक्ति ब्रह्मै
भाति सदसच्च तयोः परं यत् ॥३८॥ नासौ जजान न मरिष्यति नैधते
ऽसौ न क्षीयते स च न विध्यति चारिणा हि। सर्वत्र शश्वदनपाय्युप-
लब्धिमात्रं प्राणो यथेन्द्रियबलेन विकल्पितं सत् ॥३९॥ अण्डेषु पेशिषु



स्फुटम्। तदन्या देवताः सर्वाः प्राणस्यैव वशे स्थिताः। ईषच्च सुप्तव-
यान्ति नैव मानुषजीववत् ॥ स्वर्गस्थानां न तु स्वापः प्रायो देहेऽपि
नाज्ञता। मृतिसुप्तिप्रबोधादेर्नियन्ता हरिरेकराट्। तमृते नैव चावस्था
नावस्थावान्न च स्मृतिः। ततस्तु देवदेवेशः प्राणः प्राणेश्वरो हरिः।
न हरेरीशिता त्वन्यः स हि सर्वाधिको मत'इति हरिवंशेषु ॥ ४० ॥
‘[44]जानन्तोऽपि हि दुर्ज्ञेयः प्रश्नोऽयं ज्ञानिनामपि। इति वेदयितुं
ब्रह्मपुत्रा नोचुर्निमेः पुर'इति तन्त्रभागवते ॥ ईश्वरात्मत्वात् ईश्वर-
विषयत्वात् ॥ ४४ ॥ [46]अज्ञः सन्नाचरन्। विकर्मणा मृत्योर्मृत्यु-
मुपैति। स एवेश्वरार्पितं कुर्वाणः सिद्धिं लभते ॥ [46-47]अज्ञात्वा कुर्वतः
कर्म स्खलनात्पापकारणम्। तदेवार्पयतो विष्णोर्नैव पापाय तद्भवेत्।
मनोदोषविहीनस्य न तु दोषवतः क्वचित्। सत्सु केशवपूर्वेषु क्रमशो
भक्तिहीनता। असद्भक्तिस्तथा स्नेहो बहुमानमथापि वा। स्वोत्तमानां
प्रियत्यागादात्मप्रियचिकीर्षया। अधिकेष्वेव नीचोच्चभक्तिव्यत्यास
एव वा। स्वोत्तमस्यात्मनश्चैव समस्नेहोऽथवा भवेत्। कार्येषु बहुमाने
वा स्वात्मनः समतापि वा। आधिक्ये किमु वक्तव्यमात्मनः शक्ति-
स्थापनम्। शक्तस्याशक्तवत्कर्म मनोदोषा इतीरिता'इति कर्मतन्त्रे ॥
॥ ४६, ४७ ॥ [49-50]अव्यग्रत्वेनाचार्यं लब्ध्वा। ‘परीक्ष्यैव गुरुः
शिष्यं शिष्योऽपि गुरुमाव्रजेत्। अन्यथा नरकायैव प्रायश्चित्तं गुरो-

तरुष्ववनिस्थितेषु प्राणेन जीव उपधावति तत्र तत्र। छन्ने मतीन्द्रिय-
गुणेऽहमिव प्रसुप्ते कूटस्थ आस यमृते तदनुस्मृतिर्न ॥ ४० ॥ आविर्होत्र
उवाच—कर्माकर्मविकर्मेति वेदवादो न लौकिकः। वेदस्य चेश्वरात्मत्वा-
त्तत्र मुह्यन्ति सूरयः ॥४४॥ नाचरेद्यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः।
विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति सः ॥ ४६ ॥ वेदोक्तमेव कुर्वाणो
निःसङ्गोऽर्पितमीश्वरे। नैष्कर्म्यं लभते सिद्धिं रोचनार्थं फलश्रुतिः ॥४७॥
लब्ध्वा चाव्यग्रमाचार्यं तेन सन्दर्शितागमः। महापुरुषमभ्यर्चेन्मूर्त्याऽभि-
मतयाऽऽत्मनः ॥ ४९ ॥ शुचिः सम्मुख आसीनः प्राणसंयमनादिभिः।

स्तथे'ति च ॥ ४९, ५० ॥ '[51]द्रव्यलिङ्गं शिलाद्यं स्यादात्मलिङ्गं मनोमयम् । अथवा स्थण्डिले चैव विष्णोर्लिङ्गं प्रकीर्तितमि'ति च ॥ ॥ ५१ ॥ [55]तन्मयं तत्प्रधानम् । 'विष्णोर्भृत्योऽहमित्येव सदा स्याद्भगवन्मयः । नैवाहं विष्णुरस्मीति विष्णुः सर्वेश्वरो ह्यज'इति च ॥ स्वादानात्स्वात्मनो व्याप्त्या विष्णुः स्वात्मेति कथ्यते । न तु जीव स्वरूपत्वात्स हि जीवेश्वरः प्रभुरि'ति शब्दनिर्णये ॥ ५५ ॥ इति एकादशतात्पर्ये तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः

'[3]विष्णोस्तु पुरुषाख्यानि त्रीणि रूपाण्यतो विदुः । प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम् । तृतीयं देहिनां देहे तानि ज्ञात्वा विमुच्यत'इति माहात्म्ये ॥ ३ ॥ [4]यत्काये ॥ ४ ॥ '[5]ब्रह्मणि स्थो सृजद्विष्णुः स्थित्वा रुद्रे त्वभक्षयत् । पृथक्स्थित्वा जगत्पाति तद्ब्रह्मा द्याह्वयो हरिरि'ति ब्राह्मे ॥ रजसा तमसा च ब्रह्मरुद्रदेहसृष्टेः । राम

---

पिण्डं संशोध्य संन्यासकृतरक्षोऽर्चयेद्धरिम् ॥ ५० ॥ अर्चादौ हृदये वापि यथा लब्धोपचारकैः । द्रव्यक्षित्यात्मलिङ्गानि निष्पाद्य प्रोक्ष्य चासनम् ॥५१॥ पाद्यादीनुपकल्प्याथ सन्निधाप्य समाहितः । हृदयादि कृतन्यासो मूलमन्त्रेण चार्चयेत् ॥ ५२ ॥ आत्मानं तन्मयं ध्यायन् मूर्ति सम्पूजयेद्धरेः । शेषमाधाय शिरसि स्वधाम्न्युद्वास्य सत्कृतम् ॥ ५५ ॥ एवमग्न्यर्कतोयादावर्चयेद्धृदये च यः । यज्ञेश्वरं स्वमात्मानमभि न्मुच्यते हि सः ॥ ५६ ॥

### चतुर्थोऽध्यायः

भूतैर्यदा पञ्चभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन् । स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः ॥ ३ ॥ यत्काय एष भुवनत्रयसन्निवेशो यस्येन्द्रियैस्तनुभृतामुभयेन्द्रियाणि । ज्ञानांशतो विशतो बलमोजईहासत्वादिभिः स्थितिलयोद्भव आदिकर्ता ॥४॥ आद्या वभूच्छतधृती रजसाऽस्य सर्गे विष्णुः स्थितौ क्रतुपतिर्द्विजधर्मसेतुः । रुद्रोऽप्ययाय तमसा पुरुषः स आद्य इत्युद्भवस्थितिलयाः सततं प्रजासु ॥



बोधकारणत्वाच ॥ ५ ॥ [6]स्वविषयज्ञानरूपः प्रभावरूपश्च ॥ ६ ॥ '[7]ज्ञानरूपानपि सुरान्विना प्राणं क्वचित्परे । आविशन्ति ह्यतस्तेषामज्ञानादि न तु स्वत'इति दैवतत्त्वे । 'अथैनमेवमाप्नोद्योऽयं मध्यमः प्राणः । एवमेता देवताः पाप्मना विद्धाः तं ह्यसुरा ऋत्वा विदध्वंसुर्यथाऽश्मानमाखणमृत्वा विध्वंसतैवं हैव विध्वंसमाना विष्वञ्चो विनेशुः' ॥ ७ ॥ '[10]सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्याथैनां मृत्युमत्यवहत सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवदि'त्यादि श्रुतिश्च ॥ स्वभागं बलिं ददतो विघ्नमूर्ध्नि यदि भवान्पदं धत्ते । तर्हि नान्यस्य बलिः ॥१०॥ '[17]कुमारनामा तु हरिर्ब्रह्मचारिवपुः स्वयम् । सनत्कुमाराय परं प्रोवाच जगदीश्वर'इति स्कान्दे ॥ 'विष्णोः सनत्कुमाराख्याच्छुश्रुवुर्ज्ञानमुत्तमम् । सनत्कुमारप्रमुखा योगेशाः परमेश्वरा'इति प्रकाशसंहितायाम् ॥ १७ ॥ '[19]सुपर्णा ऋषयो व्यासं नाथमानाययुः सदा । ध्वान्तं निवारयास्माकं मुमुग्धीति च वादिन' इति व्यासतन्त्रे ॥ 'स्मरणात्तु नृसिंहस्य शक्रो मुक्तो बृहद्भयात् । हिरण्यकहृताश्चापि तथैवाप्सरसां गणा'इति भयभञ्जने ॥ १९ ॥ '[20]उपेन्द्ररूपी भगवान्प्रतिमन्वन्तरं प्रभुः । असुरान्हन्ति नियतं श्राद्ध-

---

॥५॥ धर्मस्य दक्षदुहितर्यजनिष्ट मूर्त्यां नारायणो नर इति स्वतपःप्रभावः । नैष्कर्म्यलक्षणमुवाच चचार योगं योऽद्यापि चास्त ऋषिवर्यनिषेविताङ्घ्रिः ॥ ॥ ६ ॥ इन्द्रो पिनाक्यसुखमेष जिघृक्षतीति कामं न्ययुङ्क्त सगणं स बदर्युपाख्यम् । गत्वाऽप्सरोगणवसन्तसुमन्दवातैः स्त्रीप्रेक्षणेषुभिरविध्यदतन्महिज्ञः ॥ ७ ॥ त्वां सुन्वतां सुरकृता बहवोऽन्तरायास्तान् को विलङ्घ्य परमं व्रजतात् पदं ते । नान्यस्य बर्हिषि बलिर्ददतः स्वभागं धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि ॥ १० ॥ हंसस्वरूप्यवददच्युत आत्मयोगं दत्तः कुमार ऋषभो भगवान् पिता नः । विष्णुः शिवाय जगतां कलयाऽवतीर्णस्तेनाहृता मधुभिदा श्रुतयो हयास्ये ॥१७॥ संस्तुन्वतोऽब्धिपतितांश्रमणानृषींश्च शक्रं च वृत्रवधतस्तमसि प्रविष्टम् । देवस्त्रियोऽसुरगृहे पिहिता अनाथा जघ्ने सुरेन्द्रमभयाय सतां नृसिंहे ॥१९॥ दैवासुरे युधि-

देवे च वामन'इति वामने ॥ २० ॥ इति एकादशतात्पर्ये चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः

‘[10]ये तु विष्णुमवज्ञाय श्रियमेव ह्युपासते । उपेक्ष्य वा हरिं ते तु भूत्वा याज्याः पतन्त्यध'इति प्रवृत्तिसंहितायाम् ॥ १० ॥ ‘[11]व्यवायामिषमद्यानि हरेः पूजार्थमेव तु । वामदेव्यो नाम यज्ञो व्यवायो हरिपूजनम् । पितृयज्ञो देवयज्ञो मांसेन हरिपूजनम् । व्यवाययज्ञे मद्यं तु सोमात्मकतयेष्यते । क्षत्रियादेर्न विप्राणां विप्रो दोषेण लिप्यते । अरागतः प्रवृत्तिः स्याद्रागो दोषस्य कारणम् । घ्राणभक्षोऽथवा यज्ञे दैवे सर्वस्य चेष्यते । पैष्टमद्यस्य माध्व्यादि क्षत्रियस्य न दुष्यति । दैवे रत्यैव च प्रीतिर्विष्णोः पुत्रात्तु मानुषे । तस्माद्विहितमात्रेषु रागं मुक्त्वा यथाविधि । समाहितो हरिं स्मृत्वा वर्तन्याजी हरेर्भवेदि'ति क्रियाविधाने । यज्ञान्विहाय न चोदना ॥११॥ ‘[13]यज्ञेष्वालम्भनं प्रोक्तं देवतोद्देशतः पशोः । हिंसानाम तदन्यत्र तस्मात्तां नाचरेद्बुधः । यतो यज्ञे मृता ऊर्ध्वं यान्ति दैवे च पैतृके ।

---

स दैत्यपतीन् सुरार्थे हत्वान्तरेषु भुवनान्यदधात्कलाभिः । भूत्वाथ वामन इमामहरद्बलेः क्ष्मां याञ्चाच्छलेन समदाददितेः सुतेभ्यः ॥ २० ॥

पञ्चमोऽध्यायः

वदन्ति तेऽन्योन्यमुपासितस्त्रियो गृहेषु मैथुन्यपरेषु चाशिषः । यजन्त्यसृष्टान्नविधानदक्षिणा वृत्त्यै परं घ्नन्ति पशूनतद्विदः ॥ ८ ॥ सर्वेषु शश्वत्तनुभृत्स्ववस्थितं यथा खमात्मानमभीष्टमीश्वरम् । वेदोपगीतं च न शृण्वते बुधा मनोरथानां प्रवदन्ति वार्तया ॥ १० ॥ लोके व्यवायामिषमद्यसेवा नित्यास्तु जन्तोर्न हि तत्र चोदना । व्यवस्थितिस्तेषु विहाय यज्ञान् सुराग्रहैरासुरवृत्तिरिष्टा ॥ ११ ॥ यद्घ्राणभक्षो विहितः सुरायास्तथा पशोरालभनं न हिंसा । एवं व्यवायः प्रजया न





अतो लाभादालभनं स्वर्गस्य न तु मारणमि'ति च ॥१३॥ [15]स्वात्मानं स्वस्मिन्नाप्तं च । ‘आप्तत्वादात्मशब्दोक्तं स्वस्मिन्नपि परेषु च । जीवादन्यं न पश्यन्ति श्रुत्वैवं विद्विषन्ति च । एतांस्त्वमासुरान्विद्धि लक्षणैः पुरुषाधमानि'ति हरिवंशेषु ॥ १५ ॥ ‘[35]ध्रुवं तयैव मुच्येत यां मूर्तिं प्रदिशेद्गुरुः । शिष्याणां योग्यताऽभिज्ञो विग्रहानिस्तु तद्युगे । अवतीर्णहरेर्मूर्त्या तत्पूर्वयुगजेन च । नृसिंहमूर्त्या च तथा यां चान्यां प्रदिशेद्गुरुरि'ति स्वाभाव्ये ॥ ३५ ॥ ‘[42]सर्वात्मना हरेर्भक्ता देवेशा एव केवलम् । देवास्तु सर्वथाभक्ता भक्ता एवेतरे स्मृताः । हरिभक्त्याधिकेष्वेव किङ्करश्चाप्यृणी तथा । हरिभक्तो नेतरेषां वासुदेवव्यपाश्रयात् । द्विधैव स्वोत्तमर्णानि दातव्यानीतराणि च । दातव्येभ्यो विमुच्येत नेतरेभ्यः कथञ्चन । कथं देवाद्यनुपकृतो भक्तो मोक्षेऽपि वर्तयेत् । बिम्बत्वात्तदधीनं हि स्वरूपं सर्वशो यत'इति जीवनिर्णये ॥ ४२ ॥ ‘[43]उदकैश्च नमस्कारैः स्तुतिभिर्मनसा तथा । यतिभिश्चापि सम्पूज्या देवा मोक्षमियासुभिः । मध्ये विष्णुमनुस्मृत्य नान्यथा तु कथञ्चने'ति समयाचारे ॥ ‘प्राधान्येन हरिर्ध्येयस्तत्सम्बन्धात्सुरादयः । ध्येया नान्यत्क्वचिद्ध्यायेद्बुधावनुपयोगि यदि'ति हरिसंहितायाम् ॥ ४३ ॥ ‘[49]पौण्ड्रकादिषु दैत्येषु सुरांशाः सन्ति सर्वशः । बहुमानफलं विष्णोस्ते

---

त्यै इमं विशुद्धं न विदुः स्वधर्मम् ॥ १३ ॥ द्विषन्तः परकायेषु स्वात्मानं हरिमीश्वरम् । मृतके सानुबन्धेऽस्मिन् बद्धस्नेहाः पतन्त्यधः ॥१५॥ एवं युगानुरूपोऽसौ भगवान् युगवर्तिभिः । मनुजैरिज्यते राजन् श्रेयसामीश्वरो हरिः ॥ ३५ ॥ कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः । यत्र सङ्कीर्तनेनैव सर्वः स्वार्थोऽभिलभ्यते ॥ ३६ ॥ न ह्यतः परमो लाभो देहिनां भ्राम्यतामिह । यतो विन्देत परमां शान्तिं नश्यति संसृतिः ॥ ॥ ३७ ॥ देवर्षिभूताप्तनृणां पितॄणां न किङ्करो नायमृणी च राजन् । सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिचर्यया च ॥ ४२ ॥ स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः । विकर्म यच्चोत्पतितं कथञ्चिद्धुनोति सर्वं हृदि सन्निविष्टः ॥४३॥ वैरेण यं नृपतयः शिशुपाल-

यान्त्यादाय सद्गतिम् । विद्वेषस्य फलं यत्तु तदादायासुरास्तमः । यान्त्यतो नैव विद्वेषो विष्णोः कार्यः कथञ्चने'त्यंशविवेके ॥ ४९ ॥
इति एकादशतात्पर्ये पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः

[8]यः प्रकाशरूपः ॥ ८ ॥ ‘[12]अस्पर्धिनी स्पर्धिनीव श्रीरास्ते वनमालया । न हि स्पर्धादयो दोषाः संविद्रूपां स्पृशन्ति तामि'ति वामने ॥ १२ ॥ [14]तनुभृदायुषि संबद्धः अश्वेति तनुभृदायुषि रज्यमानाः । ‘ब्रह्मणा संपरित्यक्तो मृत इत्युच्यते नर'इति भारते ॥ [15]कालमात्रः कालनिर्माता ज्ञाता च । सृष्टिलयाद्यर्थम् । नित्यत्वेन च । अव्यक्तस्यापि स्रष्टृत्वात्काल एवं भूतः तस्मादप्युत्तमस्त्वम् । ‘कालाज्जीवात्तथाऽव्यक्तान्महतश्चोत्तमो यतः । उत्तमः पुरुषस्तस्माद्भगवान्विष्णुरच्युत'इति च ॥ १४ ॥ ‘[16]नारायणाख्यः परमः शेते

---

पौण्ड्रसाल्वादयो गतिविलासविलोकनाद्यैः । ध्यायन्त आकृतधियः शयनासनादौ तत्साम्यमापुरनुरक्तधियः पुनः किम् ॥ ४९ ॥

### षष्ठोऽध्यायः

त्वं मायया त्रिगुणयाऽऽत्मनि दुर्विभाव्यं व्यक्तं सृजस्यवसि लुम्पसि तद्गुणस्थः । नैतैर्भवानजितकर्मभिरज्यते वै यः स्वे सुखेऽव्यवहितेऽभिरतोऽनवद्यः ॥८॥ स्यान्नस्तवाङ्घ्रिरशुभाशयधूमकेतुः क्षेमाय यो मुनिभिरार्द्रहृदोह्यमानः । यः सात्त्विकैः समविभूतिभिरात्मविद्भिर्व्यूहार्चितः सवनशः समविक्रमैश्च ॥१०॥ पर्युष्टया पतितया वनमालयेयं संस्पर्धिनी भगवती प्रतिपक्षवच्छ्रीः । यः सुप्रणीतममुयाऽर्हणमाददानो भूयात्सदाऽङ्घ्रिरशुभाशयधूमकेतुः ॥ १२ ॥ नस्योतगाव इव यस्य वशे भवन्ति देवाश्च यस्तनुभृदायुषि रज्यमानाः । कालस्य ते प्रकृतिपूरुषयोः परस्य शं नस्तनोतु चरणः पुरुषोत्तमस्य ॥ १४ ॥ अस्यासि हेतुरुदयस्थितिसंयमानामव्यक्तजीवमहतामपि कालमाहुः । सोऽयं त्रिणाभिरखिलापचये प्रवृत्तः कालो गभीररय उत्तमपूरुषस्त्वम् ॥ १५ ॥ त्वत्तः



लक्ष्म्यान्वितो लये । स एव पुरुषाख्यं तु द्वितीयं रूपमात्मनः । कृत्वा रमायां पुरुषनामानं तु चतुर्मुखम् । प्रधानाख्यां च गायत्रीं ससर्ज पुरुषात्मकः । चतुर्मुखः स पुरुषो महत्तत्त्वाभिधं पुनः । प्रधाननाम्न्यां गायत्र्यां ससर्जात्मानमेव तु । श्रद्धाभिधां च गायत्रीं ताभ्यां शेषोऽन्वजायते'त्यादि सृष्टिविक्षेपे ॥ १६ ॥ [17]येऽन्ये ज्ञानिनः स्वतः परिहृतान्विषयान्बिभ्यति ॥ १७ ॥ [19]सर्वं बिभ्रतस्तव ॥१९॥ [25]वत्सराणां शतं चैव ऋतूनां पञ्चविंशकम् । अवतीर्णस्य कृष्णस्य यदा प्रागात्तदा हरिम् । स्वस्थानगमनापेक्षी ब्रह्मा तुष्टाव सामरः ॥ २५ ॥ ‘[27]संवत्सरद्वयं चैव पश्चात्स्थित्वा जनार्दनः । अभिपेदे परं स्थानं चातुर्मास्याधिकं पुनरि'ति भविष्यत्पुराणे ॥ २७ ॥ ‘[31]सतामपि कलौ प्राप्ते विकारो मनसो भवेत् । तस्माद्यदूंश्च संजह्रे नैते स्युः पापिनस्त्विति । पुनर्लोकविवृद्ध्यर्थमौत्तरेयादिकान्हरिः । आविश्य रक्षामकरोज्जगतः पुरुषोत्तमः । स्वात्मनः सह यानेन पुरुषार्थोऽधिको भवेत् । इत्यनुग्रहबुद्ध्या च संजह्रे स्वकुलं विभुरि'ति च ॥ ३१ ॥

---

प्रधानमधिकृत्य पुमान्स्ववीर्यं धत्ते महान्तमिव गर्भममोघवीर्यः । सोऽयं त्वयाऽनुगत आत्मन आण्डकोशं हैमं ससर्ज बहिरावरणैरुपेतम् ॥ १६ ॥ तत्तस्थुषश्च जगतश्च भवानधीशो यन्माययोत्थगुणविक्रिययोपनीतान् । अर्थान् जुषन्नपि हृषीकपते न लिप्तो येऽन्ये स्वतः परिहृतानपि बिभ्यति स्म ॥ १७ ॥ विभ्रत्तवामृतकथोदवहास्त्रिलोक्याः पादावनेजसरितः शमलानि हन्तुम् । आनुश्रवं श्रुतिभिरङ्घ्रिजमङ्गसङ्गैस्तीर्थद्वयं शुचिषदस्तदुपस्पृशन्ति ॥१९॥ यदुवंशेऽवतीर्णस्य भवतः पुरुषोत्तम । शरच्छतं व्यतीयाय पञ्चविंशाधिकं प्रभो ॥ २५ ॥ ततः स्वधाम परमं विशस्व यदि मन्यसे । सलोकान्लोकपालान्नः पाहि वैकुण्ठ किङ्करान् ॥ २७ ॥ तदिदं यादवकुलं वीर्यशौर्यश्रियोद्धतम् । लोकं जिघृक्षत्यौर्ध्वं मे वेलामिव महार्णवः ॥ ३० ॥ यद्यसंहृत्य दृप्तानां यदूनां विपुलं कुलम् । गन्ताऽस्म्यनेन लोकोऽयमुल्बणेन विनङ्क्ष्यति ॥ ३१ ॥ वयञ्च तस्मिन्नाप्लुत्य तर्पयित्वा पितॄन् सुरान् । भोजयित्वोशिजो विप्रान्नाना-

‘[50]आत्मनोत्तमतां ब्रूयुरुत्तमा अपि सर्वशः । कदाचिदेव स्वगुणान्स्निग्धेष्वेव हि साधव’इति नारदीये ॥ ५० ॥ इति एकादशतात्पर्ये षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः

[7]विद्धि मायां मनोमयीम् । मन्मनः प्रधानप्रकृतिनिर्मिताम् । ‘प्रकृतिः सा परा मह्यं रोदसी लोकधारिणी । ऋता सत्याऽमराऽजय्या लोकानामात्मसञ्ज्ञिते’ति मोक्षधर्मेषु ॥ ७ ॥ ‘[8-9]स्वर्गाद्याश्च गुणाः सर्वे दोषाः सर्वे तथैव च । आत्मनः कर्तृताभ्रान्त्या जायन्ते नात्र संशयः । परमात्मानमेवैकं कर्तारं वेत्ति यः पुमान् । स मुच्यतेऽस्मात्संसारात्परमात्मानमेति चे’ति भारते ॥ इदं मया क्रियत, इदं मया न क्रियत, इदं विपरीतं क्रियत इतिबुद्धिभेदो रजस्तमोगुणनिमित्तो भ्रमः। सर्वं हि परमेश्वरः करोति। ‘आत्मशब्दोदितो ब्रह्मा परमात्माऽभिधो ह्यहम् । सर्वं ब्रह्मणि वीक्षेत मयि ब्रह्माणमेव चे’ति कालसंहितायाम् ॥ ८, ९ ॥ ‘[10]आत्मभूतः आत्मवद्भूतः । आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुने’ति वचनात् ॥१०॥ ‘[11-12]कर्तृत्वमात्मनो

---

गुणवताऽन्धसा ॥ ३८ ॥ तेषु दानानि पात्रेषु श्रद्धयाऽर्प्य महान्ति वै । वृजिनानि तरिष्यामो दानैर्नौभिरिवार्णवम् ॥३९॥ स्मरन्तः कीर्तयन्तस्ते कृतानि गदितानि च। गत्युत्स्मितेक्षणोत्केलि यन्नृलोकविडम्बनम् ॥५०॥

सप्तमोऽध्यायः

यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः । नश्वरं गृह्यमाणं च विद्धि मायां मनोमयीम् ॥ ७ ॥ पुंसो युक्तस्य नानार्थे भ्रमः सगुणदोषकृत् । कर्माकर्मविकर्मेति गुणदोषधियो भिदा ॥ ८ ॥ तस्माद्युक्तेन्द्रियग्रामो युक्तचित्त इदं जगत्। आत्मनीक्षस्व विततमात्मानं मय्यधीश्वरे ॥९॥ ज्ञानविज्ञानसंयुक्त आत्मभूतः शरीरिणाम् । आत्मानुभवतुष्टात्मा नान्तरायैर्विहन्यसे ॥ १० ॥ दोषबुद्ध्योभयातीतो निषेधान्न निवर्तते । गुण



यस्माज्ज्ञाननिष्ठो न मन्यते । अतः कुर्वन्नपि सदा दोषबुद्ध्या न निन्दितम् । गुणबुद्ध्या न विहितं किन्त्वीशप्रेरितोऽस्म्यहम् । स एव च मयि स्थित्वा निन्द्यानिन्द्ये करोत्यजः । न मे दोषो न च गुणः कर्तृत्वाभावतः स्फुटम् । स्वतन्त्रत्वान्न चेशस्य येऽज्ञास्तेषु भवेदपि । इति मत्वा निवर्तेत निन्द्यात्कुर्याद्गुणानपी’ति बोद्धव्ये ॥ ‘अनित्या मे गुणा न स्युर्दोषा नैव कथञ्चन । इति मत्वा शुभं कुर्यान्निवर्तेदशुभादपि । ज्ञानी त्वकर्तृतामानादीशकर्तृत्वनिश्चयात् । किन्तु पूर्णगुणायैव न तु दोषापनुत्तये । न चाल्पगुणसिद्ध्यर्थं बालवत्कृतनिश्चय’इति वैशारद्ये ॥ ‘वैलक्षण्याद्धरेर्भिन्नं तत्तन्त्रत्वात्तदात्मकम् । इति विश्वं प्रपश्यन्ति ज्ञाननिष्ठा हरेः प्रिया’इति सार्वज्ञे ॥ ११, १२ ॥ [14]योगो देवादिषु तेन न्यस्त इति योगविन्यासः । ‘ज्ञानं तु योगशब्दोक्तं युज्यतेऽनेन यत्सुखम् । क्वचिद्योग उपायः स्यात्क्वचिच्चित्तनिरोधनमि’ति दत्तात्रेययोगे ॥ अत्र ज्ञानमुपायश्च ॥ १४ ॥ [17]अभगवत्स्वरूपत्वात्तनुभृत्त्वम् । बहिरर्थापेक्षयैव च तेषां मोहः । परमसुखसाधनादन्योऽर्थो बहिरर्थः । ‘अशरीरः सदा विष्णुः पूर्णानन्दत्वतः सदा । इच्छा च क्रीडयैवास्य न फलाय यतो विभोः । अतो बाह्यार्थकामोऽपि निष्काम इति कथ्यते । ब्रह्मा निरभिमानित्वाच्छरीर्यप्यशरीरवान् । नित्यानन्दोपयोग्यन्यकामस्योज्झिततिः सदा । बहिरर्थविनिर्मुक्तस्तथापि तनुधारणात् । अमूढो मूढ इतिवदुच्यते च सरस्वती। रुद्राद्यास्तन्वभीमानाद्बहिरर्थयुजस्तथा । सर्वेषां ब्रह्मपदवीयोग्यानां पूर्वमेव तु । अभावस्त्वपरोक्षस्य मोहो ज्ञानस्य भण्यते । ब्रह्मणस्त्वंशरूपेषु

---

बुद्ध्या च विहितं न करोति यथाऽर्भकः ॥ ११ ॥ सर्वभूतसुहृच्छान्तो ज्ञानविज्ञाननिश्चलः । पश्यन्मदात्मकं विश्वं न विपद्येत वै पुनः ॥ १२ ॥ उद्धव उवाच—योगेश योगविन्यास योगात्मन्योगसम्भव । निःश्रेयसाय मे प्रोक्तस्त्यागः सन्यासलक्षणः ॥ १४ ॥ सत्यस्य ते स्वसदृश आत्मन आत्मनोऽन्यं वक्तारमीश विबुधेऽष्वपि नानुचक्षे। सर्वे विमोहितधियस्तव

भारत्या ज्ञानवर्जनम्। ब्रह्मगायत्रिभावे तु नांशावतरणं क्वचित्। शतजन्मसु पूर्वं तु ज्ञानोदय उदीर्यते। आपरोक्ष्येण पारोक्ष्यात्पूर्णज्ञानं सदैव तु। शतजन्मगतायाश्च आपरोक्षोज्झितिर्भवेत्। क्वचित्क्वचित्सरस्वत्यामंशावतरणेष्विति' शक्तिविवेके ॥ 'अशरीरो वायुरभ्रं विद्युत्स्तनयित्नुरशरीराणि वा एतानी'ति च श्रुतिः। 'श्रुतिभिस्तनितत्वात्तु स्तनयित्नुर्हरिः स्मृतः। अभ्रं भूतानि भरणाच्छ्रीर्वायुर्भरतः स्मृतः। विद्युत्तु भारती प्रोक्ता एत एवाशरीरिणः। व्यत्यासेनापि नाम स्यादेतेषां महतां सदे'त्यभयनिरुक्ते ॥ १७ ॥ '[18]विष्णोर्वीर्यो रनन्तस्य त्रिभिरंशैर्नरः स्मृतः। सेन्द्रैश्चतुर्भिः पार्थस्तु द्वाभ्यां तु बललक्ष्मणावि'त्यंशविवेके ॥ १८ ॥ [19]लोके तत्त्वे च विचक्षणाः। 'पारोक्ष्येणैव तत्त्वं तु लोकं चापि विदन्ति ये। तेऽपि सत्स्नेहनिर्मुक्तास्तमो यान्ति विनिश्चयात्। आपरोक्ष्यान्न च ज्ञानं तेषामुत्पद्यते क्वचिदि'ति षाड्गुण्ये ॥ १९ ॥ [30]केवलात्मनः शरीरमात्रपरिग्रहस्य ॥ ॥ ३० ॥ [38]परार्थैकान्तसम्भवम्। आत्मनो वृद्धिश्च परार्थेति। 'सज्जनार्थेऽनुमन्येत ऐहिकीं वृद्धिमात्मनः। पारत्रिकीमैहिकीं च प्रीतये गुरुदेवयोः। देवतानां च सर्वेषां स्वोत्तमानां च सर्वश'इति च ॥ ३८ ॥ '[42]जीवान्तर्यामको विष्णुरात्मनामा समीरितः। तस्य तु ब्रह्मरूपत्वाद्बहिरन्तस्तथैव च। पश्येदाकाशवद्व्याप्तिमसङ्गत्वं च

---

माययेमे ब्रह्मादयस्तनुभृतो बहिरर्थभावाः ॥ १७ ॥ तस्माद्भवन्तमनवद्यमनन्तपारं सर्वज्ञमीश्वरमखण्डविकुण्ठधिष्ण्यम्। निर्विण्णधीरहमु हवृजिनाभितप्तो नारायणं नरसखं शरणं प्रपद्ये ॥ १८ ॥ श्री भगवानुवाच — प्रायेण मनुजा लोके लोकतत्वविचक्षणाः। समुद्धरन्ति ह्यात्मानमात्मनैवाशुभाशयात् ॥ १९ ॥ त्वं हि नः पृच्छतां ब्रह्मन्नात्मन्यानन्दकारणम्। ब्रूहि स्पर्शविहीनस्य भवतः केवलात्मनः ॥ ३० ॥ शश्वत्परार्थसर्वेहः परार्थैकान्तसम्भवम्। साधु शिक्षेत भूभृत्तो नगशिष्यः परात्मताम् ॥ ३८ ॥ अन्तर्बहिश्च स्थिरजङ्गमेषु ब्रह्मात्मभावेन समन्वयेन। व्याप्त्या व्यवच्छे



नित्यश'इति तन्त्रभागवते ॥ ४२ ॥ '[44]गुणान्जीवस्य चेष्टव्यान्सिद्धान्विष्णोर्गुणांस्तथा। तत्तद्दृष्ट्या विचिन्वीत पृथगेव सुधीः सदे'ति लोकतत्त्वे। 'मधुनाम सुखं विन्द्यान्माधुर्यं सुखहेतुता। सुखे रतिर्वा सम्प्रोक्ता शब्दतत्त्वविचक्षणैरि'ति शब्दनिर्णये ॥ ४४ ॥ [45]दूरत एव भजनीयः। 'पराभवो धर्षणः स्यादवज्ञानमथापि वा। न तत्सत्सु सदा कुर्यात्सह शय्यासनं न चे'ति षाड्गुण्ये ॥ ४५ ॥ '[46-47]जीवस्थच्छन्नतां शिक्षेत्प्रविष्टत्वं परात्मनः। तत्तद्गुणविडम्बं च वह्नेः सर्वमथापि वा। अल्पदारौ यथाऽल्पोऽग्निरेवमल्पशरीरगः। दृश्यते परमात्माऽपि स्थूलः स्थूलशरीरग' इति वैभवे ॥ ४६, ४७ ॥ '[49]अवयव्यवयवानां च गुणानां गुणिनस्तथा। शक्तिशक्तिमतोश्चैव क्रियायास्तद्वतस्तथा। स्वरूपांशांशिनोश्चैव नित्याभेदो जनार्दने। जीवस्वरूपेषु तथा तथैव प्रकृतावपि। चिद्रूपायामतोऽनंशा अगुणा अक्रिया इति। हीना अवयवैश्चेति कथ्यन्ते तेऽत्यभेदतः। पृथग्गुणाद्यभावाच्च नित्यत्वादुभयोरपि। विष्णोरचिन्त्यशक्तेश्च सर्वं सम्भवति ध्रुवम्। क्रियादेरपि नित्यत्वं व्यक्त्यव्यक्तिविशेषणम्। भावाभावविशेषेण व्यवहारश्च तादृशः। विशेषस्य विशिष्टस्याप्यभेदस्तद्वदेव तु। सर्वं चाचिन्त्यशक्तित्वायुज्यते परमेश्वरे। तच्छक्त्यैव तु जीवेषु चिद्रूपप्रकृतावपि। भेदाभेदौ तदन्यत्र ह्युभयोरपि दर्शनात्। कार्यकारणयोश्चापि निमित्तं कारणं

---

सङ्गमात्मनो मुनिर्नभोवद्विततस्य भावयेत् ॥ ४२ ॥ तेजोऽबन्नमयैर्भावैर्मेघौघैर्वायुनेरितैः। न स्पृश्यते नभस्तद्वत्कालसृष्टैर्गुणैः पुमान् ॥४३॥ स्वच्छः प्रकृतितः स्निग्धो माधुर्यस्तीर्थवन्नृणाम्। मुनिः पुनात्यघान्मित्रमीक्षणस्पर्शकीर्तनैः ॥ ४४ ॥ तेजस्वी तपसा दीप्तो दुर्धर्षो दूरभाजनः। सर्वभक्षोऽपि युक्तात्मा नादत्ते पापमग्निवत् ॥ ४५ ॥ क्वचिच्छन्नः क्वचित्स्पष्ट उपास्यः श्रेय इच्छताम्। भुङ्क्ते सर्वत्र दातॄणां दहन्प्रागुत्तराशुभम् ॥ ४६ ॥ स्वमायया सृष्टमिदं सदसल्लक्षणं विभुः। प्रविष्ट ईयते तत्तत्स्वरूपोऽग्निरिवैधसि ॥४७॥ कालनद्योघवेगेन भूतानां

विने'ति ब्रह्मतर्के । 'आत्मनि चैवं विचित्राश्च हि' । 'सर्वोपेता च तद्दर्शनात्' । 'सर्वधर्मोपपत्तेश्च' । 'स्वाभाविकी ज्ञानबलक्रिया च' । 'यत्रासप्तऋषीन्पर एकमाहुरि'त्यादेश्च ॥ 'विना दोषांच्छ्रुतमद्धाऽवगम्यं तथा स्मृतं परमे सत्यरूपम् । नैवासत्यं क्वचिदस्मिन्परेशे सर्वं युक्तं पूर्णशक्तेः सदैवे'ति च विश्वम्भरश्रुतिः । तस्मादेकस्मिन्नपि शरीरे भेदाभेदात्प्रभवाप्ययौ युज्येते । न च विरोधः । स्थूलसूक्ष्मवत् । आपेक्षिकमत्रापि युज्यते ॥४९॥ '[51]बुद्धिसंस्थस्त्वात्मभेदो व्यक्तस्थो जीव उच्यते । तेनैव सह संस्थानात्परात्मा स्थूलबुद्धिभिः । जीववल्लक्ष्यते विष्णुर्यथैवाम्बुस्थितार्कवत् । परमार्कः पारिमाण्याद्वर्तुलत्वादिना तथा । अर्कस्वरूपानभिज्ञैः शिरःपादादिवर्जितः । अचेतनश्च कल्प्येत तत्तेजोमात्रदर्शिभिः । सूर्यदेहादिभिन्नं हि तेजोमण्डलमेव तु । दृश्यते स्थूलमतिभिरेवमेव जनार्दन'इति प्रभासके ॥ ५१ ॥ इति एकादशतात्पर्ये सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः

'[7]महतां वनिताकामः पतत्यन्वे तमस्यलम् । अन्यत्र निरयं याति दुःखवान्स्याद्विपर्यय'इति धर्मसंहितायाम् ॥ 'मोहकारणभूतां तु मायेत्याहुर्मनीषिणः । अविद्यमानं मेत्युक्तं तज्ज्ञापयति यत्स्वयम् । कुत्रचिज्ज्ञानरूपं सद्भाभरूपं च भण्यते । मयं प्राचुर्यमुद्दिष्टं माया स्यात्प्रचुरेत्यपी'ति तन्त्रनिरुक्ते ॥ 'स्वतन्त्रं परमार्थाख्यं स्वतन्त्रैका हरेर्मतिः । सैव माया समुद्दिष्टा मुख्यतस्तत्स्वरूपिका । मतिमन्मति-

---

प्रभवाप्ययौ । नित्यावपि न दृश्येते आत्मनोऽग्नेर्यथार्चिषाम् ॥ ४९ ॥ बुद्धिसंस्थेन भेदेन व्यक्तस्थ इव तद्वतः । लक्ष्यते स्थूलमतिभिरात्मा चाम्बुस्थितार्कवत् ॥ ५१ ॥

अष्टमोऽध्यायः

दृष्ट्वा स्त्रियं देवमायां तद्भावैरजितेन्द्रियः । प्रलोभितः पतत्यन्धे





भेदोऽपि न विष्णोः क्वचिदिष्यते । पारमार्थ्येन नास्त्येव तदन्यत्तद्वशं यतः । अनाद्यनन्तकालेषु विद्यमानमपि ध्रुवम् । अतो मायामयं प्राहुः सर्वं तद्वशगं यत'इति मायावैभवे ॥ 'स्वाधीनं सदिति प्रोक्तं पराधीनमसत्स्मृतम् । अविद्यमानमेतस्माज्जगदाहुर्विपश्चितः । अनाद्यनन्तकालेषु विद्यमानमपि ध्रुवम् । अस्वातन्त्र्यात्तु नास्त्येवेत्येवं वाच्यं जगत्सदा । सदा वृत्तेर्विद्यमानमिति ब्रूयाद्यदि क्वचित् । तथापि नाशवद्धीदं प्रवाहाद्यस्य नित्यता । अतो निवर्त्यमित्याहुः प्रपञ्चो ह्यस्ति यद्यपि । विष्णोरिच्छावशत्वाच्च मायामात्रमिति स्फुटम् । परमार्थं त्वेकमेव स्वातन्त्र्याद्विष्णुमव्ययम् । यदि कल्पयतीदं स स एव विनिवर्तयेत् । विष्णुस्तस्मात्तद्वशत्वान्नास्तीति द्वैतमुच्यते । स्वातन्त्र्येण हरौ ज्ञाते पराधीनत्वनिश्चयात् । इत्याहुरुपदेष्टार आचार्यास्तत्त्ववेदिनः ॥ यथैव राजन्विज्ञाते नान्योऽस्तीति स्फुटं वचः । स्वातन्त्र्यात्पारतन्त्र्याच्च तद्भृत्यादिषु सत्स्वपि । यथैकछत्रवांश्चैव एकवीर इतीव च । तथैव सर्वप्राधान्याददद्वितीयो हरिः स्मृतः । एवं मुक्ता विजानन्ति सायुज्यं प्रापिता विभोः । अनन्तकालं पश्यन्तो जगदेतच्चराचरम् । तस्यैतस्य ह्यविज्ञानात्केवलभ्रान्तिरूपकम् । जगदुक्त्वा तमो यान्ति ईशितव्येशमापत'इति च ॥ 'पुत्रा मे यदि विद्यन्ते मरिष्यन्त्येव ते ध्रुवम् । यदि राज्यं करोत्येष नश्यत्येतदसंशयमि'ति धृतराष्ट्रवचनात् । 'प्रपञ्चो यदि विद्येते'त्यादि । 'यदिशब्दस्त्ववस्तुत्वे चास्वातन्त्र्ये च संशये । अवस्तुशब्दश्चाशक्ते ह्यल्पशक्तौ च कीर्त्यत'इति शब्दनिर्णये ॥ ७ ॥ '[34]भगवद्भार्यतायोग्याः काश्चिदप्सरसःस्त्रियः । रमाऽऽवेशात्कदाचित्स्युस्तास्वेका पिङ्गलाऽभवत् । तदन्यासां महान्दोषो भगवद्भर्तृतास्मृतावि'ति स्वाभाव्ये ॥३४॥ इति एकादशतात्पर्ये अष्टमोऽध्यायः ॥८॥

---

तमस्यग्नौ पतङ्गवत् ॥७॥ सुहृत्प्रेष्ठतमो नाथ आत्मा चायं शरीरिणाम् । तं विक्रीयात्मनैवाहं रेमेऽनेन यथा रमा ॥३४॥ सन्तुष्टा श्रद्दधत्येतद्यथालाभेन जीवती । विहराम्यमुनैवाहमात्मना रमणेन वै ॥ ३९ ॥

## नवमोऽध्यायः

‘[10]असज्जनैस्तु संवासो न कर्तव्यः कथञ्चन। यावद्यावच्च बहुभिः सज्जनैः स तु मुक्तिद’इति षाड्गुण्ये ॥ १० ॥ ‘[12]बाह्यं मनो विलीनं स्यान्मुक्तौ चिन्मात्रकं मनः। तेनैवानुभवेत्सर्वं स्वात्माभिन्नेन मुक्तिद’-इति मुक्तितत्त्वे ॥१२॥ ‘[17-18]कालप्रकृतिजीवादौ लयेऽसत्यप्रवर्तनात्। तन्निमित्तस्य कार्यस्य विष्णुरेक इतीर्यते। स हि कालादिकं सर्वं वर्तयत्यमितद्युतिरि’ति तत्त्वलये ॥ ‘प्रकृतिश्च गुणाश्चैव शक्यत्वाच्छक्तयः स्मृताः। विष्णोः स्वरूपभूता तु शकनाच्छक्तिरुच्यत’इति शक्तिविवेके ॥ १७, १८ ॥ ‘[22]भयादपि हरिं भक्त्या चिन्तयंस्तत्स्वरूपताम्। पेशस्कारिवदायाति द्विषन् द्वेषसरूपताम्। सुखरूपस्य हि द्वेषो दुःखरूप इतीर्यते। तस्माद्दुःखं सदा याति द्वेषवान्पुरुषोत्तमे। नृसिंहद्वेषतो दुःखं रक्षोरूपेण रावणः। अगाच्च रामविद्वेषाच्छिशुपालस्तथैव च। ततो भक्त्या परं यातो द्वेषरूपस्त्वधोगतिम्। तस्मात्सर्वगुणोद्रेकिविद्वेषात्सर्वदोषवान्। भवेदिति सरूपत्वं द्वेषादेः पुरुषस्य ही’ति भागवततन्त्रे ॥ ‘तं यथा यथोपासते तदेव भवति’। ‘तं भूतिरिति देवा उपासाञ्चक्रिरे ते बभूवुस्तस्माद्धाप्येतर्हि सुप्तो भूर्भूरित्येव

---

नवमोऽध्यायः

वासो बहूनां कलहो भवेद्वार्ता द्वयोरपि। एक एव चरेत्तस्मात् कुमार्या इव कङ्कणः ॥ १० ॥ यस्मिन् मनो लब्धपदं यदेतच्छनैः शनैर्मुञ्चति कर्मरेणून्। सत्वेन वृद्धेन रजस्तमश्च विधूय निर्वाणमुपैत्यनिन्धनम् ॥ १२ ॥ एको नारायणो देवः पूर्वसृष्टं स्वमायया। संहृत्य कालकलया कल्पान्त इदमीश्वरः ॥१६॥ एक एवाद्वितीयोऽभूदात्माधारोऽखिलाश्रयः। कालेनात्मानुभावेन साम्यं नीतासु शक्तिषु ॥ १७ ॥ सत्वादिष्वादिपुरुषः प्रधानपुरुषेश्वरः। परावराणां परम आस्ते कैवल्यसंज्ञितः ॥ १८ ॥ यत्र यत्र मनो देही धारयेत्सकलं धिया। स्नेहाद्द्वेषा-



श्वसित्यभूरित्यसुरास्ते ह पराबभूवुरि’त्यादि च ॥ २२ ॥ ‘[23]सत्यपत्यल्पविद्वेषे भोजनं दास्यतीति तु। स्नेहबाहुल्यतः कीटः पेशस्कारिसमो भवेत्। द्वेषे सर्वात्मना नष्टे स्नेहे चैव विवर्धति। सरूपता तदैव स्यात्कीटस्यैवं हरेरपि। अत्यल्पोऽपि हरेर्द्वेषः स्नेहस्यानुदयङ्करः। सोऽयं विशेषो नान्यस्य फलदाता च केशवः। न हि पेशस्कृतः किञ्चित्फलदातृत्वमिष्यते। स्वातन्त्र्याद्विद्विषां चैव केशवो न सुखद’इति स्वातन्त्र्यविवेके ॥ २३ ॥ [25]सत्त्वनिधनः सत्त्वं निधीयतेऽस्मिन्परमेश्वर इति। ‘सततमतिशयेनोच्चैरर्करूप’इति सततात्युदर्को भगवान् ॥ २५ ॥ [26]बीजार्थमारोहणादिकं कुर्वन्निति ॥ २६ ॥ ‘[31]एकस्मात्तु गुरोर्ज्ञानं जायते नैव कस्यचित्। एकस्मादेव जायेत योग्याद्ब्रह्मपदस्य तु। स्वयं चोपदिशेज्ज्ञानं वैरिञ्चिपदयोगिनि। अनुग्रहात्तेन चापि ज्ञानं दत्वा विमुक्तिदः। ज्ञानं प्राप्य बहुभ्योऽपि नॄणां मुक्तिश्चतुर्मुखात्। ज्ञानमप्राप्य तेषां तु ज्ञानदो विष्णुरेव ही’ति गुरुविवेके ॥ ३१ ॥ इति एकादशतात्पर्ये नवमोऽध्यायः ॥ ९ ॥

---

द्भयाद्वाऽपि याति तत्तत्सरूपताम् ॥ २२ ॥ कीटः पेशस्करं ध्यायन् कुड्यान्तेन प्रवेशितः। याति तत्साम्यतां राजन् पूर्वरूपमसन्त्यजन् ॥२३॥ एवं गुरुभ्य एतेभ्य एषा मे शिक्षिता मतिः। स्वात्मोपशिक्षितां बुद्धिं शृणु मे वदतः प्रभो ॥ २४ ॥ देहो गुरुर्मम विरक्तिविवेकहेतुर्बिभ्रत्स्म सत्त्वनिधनं सततात्युदर्कम्। तत्त्वान्यनेन विमृशामि यथा तथापि पारक्यमित्यवसितो विचराम्यसङ्गः ॥ २५ ॥ जायात्मजार्थपशुभृत्यगृहाप्तवर्गान् पुष्णाति यः प्रियचिकीर्षितमावितन्वन्। सोऽन्ते सकृच्छ्रमवरुद्धमनाः स्वदेहं सृष्ट्वा स्वबीजमवसीदति वृक्षधर्मा ॥ २६ ॥ न ह्येकस्माद्गुरोर्ज्ञानं सुस्थिरं स्यात्सुपुष्कलम्। ब्रह्मैतदद्वितीयं वै गीयते बहुधर्षिभिः ॥ ३१ ॥

## दशमोऽध्यायः

[3]बुद्धिगुणैः कामक्रोधादिभिरभेदो विफलः । 'वस्तुस्थिते रन्यथात्वं नानात्वमिति कीर्तितम् । ज्ञानस्यैव तु नानात्वान्न स्यात्कामा द्यहंमतिः ॥ कामादिषु स्वधीस्थेषु केवलं जीवसंस्थितिः । इति बुद्धि रभेदः स्यात्स न कार्यः कथञ्चन ॥ अदुष्टकामश्चिद्रूपो जीवाभिन्न स्वरूपतः । दुष्टकामो मनोधर्मस्तस्माच्छेयः सदैव स' इति विवेके ॥३॥ '[4]निष्कामं ज्ञानपूर्वं तु निवृत्तमिह चोच्यते । निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनमि'ति भारते ॥ ४ ॥ '[5]मामेव नित्यं ध्यायेद्यो मदात्मा स प्रकीर्तित'इति च ॥ ५ ॥ '[11]अदेहधर्मवान्विष्णुर्देहधर्म दीर्यते । जीवस्त्वदेहधर्मोऽपि परतो देहधर्मवान् । स्वयं त्वनभिमान सन्नज्ञानामेव दर्शयेत् । विष्णुर्जीवस्त्वभीमानी यावद्विष्णुपदं व्रजेदि'ति विष्णुसंहितायाम् ॥ अवस्त्वशक्तमुद्दिष्टं शक्तं वस्त्विह भण्यते । तस्मादेकं परं ब्रह्म वस्तुशब्दोदितं सदे'ति लक्षणे ॥११॥ '[13]पिशा वत्स्थिता माया तूच्चते जीवगा सदा । दह्यन्ते तद्गुणाः सर्वे सा प्रातिस्विकी नर'इति वैभाव्ये ॥ एतच्छब्देन दुःखादिरपरोक्षतयोच्यते । 'क्वचिद्विश्वं क्वचिद्ब्रह्म क्वचिन्निन्द्यमुदीर्यत'इति तन्त्रनिरुक्ते । 'बाह्यान्त

---

### दशमोऽध्यायः

सुप्तस्य विषयालोको ध्यायतो वा मनोरथः । नानात्मकत्वाद्विफल स्तथा भेदोऽन्यधीगुणैः ॥ ३ ॥ निवृत्तं कर्म सेवेत प्रवृत्तं मत्पर जेत् । जिज्ञासायां सम्प्रवृत्तो नाद्रियेत्कर्मचोदनाम् ॥ ४ ॥ यमानभी सेवेत नियमान् मत्परः क्वचित् । मदभिज्ञं गुरुं शान्तमुपासीत मदा कम् ॥ ५ ॥ निरोधोत्पत्त्यणुबृहन्नानात्वं तत्कृतान् गुणान् । अनुप्र आधत्ते एवं देहगुणान् परः ॥ ९ ॥ तस्माज्जिज्ञासयाऽऽत्मानमा केवलं परम् । सङ्गम्य निरसेदस्य वस्तुबुद्धिं यथाक्रमम् ॥ ११ ॥ वैशारदी सातिविशुद्धबुद्धिर्धुनोति मायां गुणसम्प्रसूतिम् । गुणांश्च



णाज्जन्यं ज्ञानं नश्यति मुक्तिगे । स्वरूपज्ञानतो भोगान्मुक्तौ भुङ्क्ते थेष्टत'इति मुक्तितत्त्वे ॥ १३ ॥ '[14-15]देहापेक्षमनित्यत्वं जीवानां ननं तथा । स्वतस्त्वजाश्च नित्याश्च बहवः सुखरूपिणः । उत्तमा जीवसङ्घास्तु नीचा वै नित्यदुःखिन'इति जीवतत्त्वे ॥ १४, १५ ॥ स्वाधिकारानां वशत्वात्तु परमं सुखमेव तु । तदन्येषां वशे यस्तु किं सुखं तस्य भण्यताम् । स्वाधिकारानां वशत्वं च तेषु भक्तिमतः सुखम् । तदन्येषां तु दुःखाय तस्माद्भक्तोऽधिको भवेदि'ति च ॥ १७ ॥ विदुषामपि देहमानिनां यदा न विद्यते सुखं तदा दुःखमूढाना- हङ्कारिणां च किम्वित्यर्थः । 'पुनःशब्दे प्रस्तुतार्थे तथा शब्द दीर्यत' इति शाब्दे ॥ १८ ॥ [19]ये तु विद्वत्त्वेन प्रसिद्धाः प्राकृतानां ऽप्यद्धा न विदुर्देहाभिमानिनश्चेत् । दुःखमूढा अधीराऽहङ्कारिणो विशेषतोऽप्यविद्यमानगुणाभिमानिनः ॥ १९ ॥ [31]गुणसंयुक्तः कर्म- लानि भुङ्क्ते ॥ ३१ ॥ [32-33]यावत्स्याद्गुणवैषम्यमित्यादि य पासीरंस्ते मुह्यन्ति ॥ ३२, ३३ ॥ [34]असति गुणव्यतिकरे

---

त्ममेतत्स्वयं च शाम्यत्यसमिद्यथाग्निः ॥ १३ ॥ अथैषां कर्मकर्तॄणां भोक्तॄणां सुखदुःखयोः । नानात्वमथ नित्यत्वं लोककालागमात्मनाम् ॥ १४॥ मन्यसे सर्वभावानां संस्था ह्यौत्पत्तिकी तथा । तत्तदाकृतिभेदेन जायते भिद्यते च धीः ॥ १५ ॥ एवमप्यत्र सर्वेषां देहिनां देहयोगतः । कालावयवतः सन्ति भावा जन्मादयोऽसकृत् ॥ १६ ॥ तत्रापि कर्मणां र्तुः स्वातन्त्र्यं च लक्ष्यते । भोक्तुश्च सुखदुःखानां को न्वर्थो विवशं भजेत् ॥ १७ ॥ न देहिनां सुखं किञ्चिद्विद्यते विदुषामपि । तथा च दुःखमूढानां वृथाहङ्कारिणां परम् ॥ १८ ॥ यदि प्राप्तिं विघातं च जानन्ति सुखदुःखयोः । तेऽप्यद्धा न विदुर्योगं मृत्युर्न प्रभवेद्यथा ॥१९॥ अमत्तो गभीरात्मा धृतिमान् जितषड्गुणः । अमानी मानदः कल्पो मैत्रः कारुणिकः कविः ॥ ३१ ॥ यावत्स्याद्गुणवैषम्यं तावन्नानात्वमात्मनः । नानात्वमात्मनो यावत्पारतन्त्र्यं तदैव हि ॥ ३२ ॥ यावदस्यास्वतन्त्रत्वं तावदीश्वरतो भयं । य एतत्समुपासीरंस्ते मुह्यन्ति शुचाऽर्पिताः ॥३३॥

कालादिना मानं मामेवाहुरिति स्वसिद्धान्तः । 'कालः सर्व
गुणोद्रेकादाक्षत्वादात्मनामकः । आगमोऽवगतेरस्य लोको ज्ञान
स्वरूपतः । स्ववशत्वात्स्वभावोऽयं धारणाद्धर्म इत्यपि । उपासते सदा
मुक्ताः परानन्दैकभागिनः । तदेतत्तत्त्वमज्ञात्वा प्राहुर्दुर्मतयः परे ।
यावत्तु गुणवैषम्यं तावन्नानात्वमात्मनः । भेदबुद्धिस्तु यावत्स्यात्ताव
दीश्वरतन्त्रता । यावदीश्वरतन्त्रत्वं तावत्तस्माद्भयं भवेत् । उपासते
एवं तु नित्यशोके पतन्ति ते । महातमस्यनानन्दे तस्मान्नैवं विचिन्त
येत् । तस्मान्नित्यं तु नानात्वं जीवानामीशतन्त्रता । स्वाधिकारानां वशत्वं
च मुक्तावपि सदेष्यते । एवं ज्ञात्वा विमुच्यन्ते परानन्दं व्रजन्ति
च'इति तन्त्रभागवते ॥ ३४ ॥ [35]अदेही परमात्मा । बध्यते चेत्कथं
बध्यते ॥ ३५ ॥ [37]नित्यमुक्तो नित्यबद्ध इत्येकजीववादिमतानुसारेण
चोदयति । 'शिष्योऽपि पूर्वपक्षस्थस्तदेवात्ममतं ब्रुवन् । नैव दुष्य
त्यसत्येन स्थिरत्वार्थं हि तद्वच'इति विक्षेपे । 'न मे मोक्षो न
बन्धनम्' । 'एकस्यैव ममांशस्य जीवस्यैवं महामते । बन्धोऽस्याविद्ययाऽ
नादिर्विद्यया च तथेतरत् । अथ बद्धस्य मुक्तस्य वैलक्षण्यं वदामि
त'इत्यादिपरिहारात् ॥३७॥ इति एकादशतात्पर्ये दशमोऽध्यायः ॥१०॥

## एकादशोऽध्यायः

[1]मे गुणतः । मद्वशसत्वादेः । अमायत्वान्निर्गुणोऽहं बन्धमोक्षौ

---

काल आत्मागमो लोकः स्वभावो धर्म एव च । इति मां बहुधा प्राहुर्गुण
व्यतिकरेऽसति ॥३४॥ उद्धव उवाच—गुणेषु वर्त्तमानोऽपि देहजेष्व
पावृतः । गुणैर्न बध्यतेऽदेही बध्यते वा कथं विभो ॥ ३५ ॥ एतदच्युत
मे ब्रूहि प्रश्नं प्रश्नविदां वर । नित्यमुक्तो नित्यबद्ध एक एवेति मे भ्रमः
॥ ३७ ॥

एकादशोऽध्यायः

श्रीभगवानुवाच—बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः ।



न चापि मे । मदधीनस्य जीवस्य बन्धमोक्षौ सदैव त्वि'ति
स्वाभाव्ये ॥१॥ '[2]स्वप्नोऽयमित्यविज्ञानात्स्वप्ने दुःखमुपाश्नुते । निज-
स्वरूपानुभवराहित्यात्तद्वदेव तु । जाग्रद्दुःखमपि प्रोक्तं विष्णुतत्त्वं न
पश्यतः । तस्मात्तदस्वभावत्वात्सदप्येतदवास्तवमि'ति लोकसंहितायाम् ॥
॥२॥ '[3]विद्याऽविद्ये मम तनू प्रतिमावत्सदोदिते । सदा तद्व्यतिरिक्तस्य
नित्यज्ञानसुखात्मनः । मदिच्छावशगे नित्यमविद्यानिर्मिता गुणाः ।
सत्वाद्या मदधीनत्वादविद्याया न मे गुणाः । अविद्या चैव विद्या च
गुणाः सत्वादिका अपि । देहोत्पत्तिः सुखं दुःखं सर्वमेतन्मदिच्छया ।
अतोऽहं बन्धमोक्षाभ्यां रहितो नित्यमेव तु । मुक्तशब्दोदितो बन्ध-
राहित्यान्न विमोक्त'इति कालसंहितायाम् । 'श्रीस्तु विद्या समुद्दिष्टा
दुर्गाऽविद्या प्रकीर्तिता । ते त्वनादी हरेरिच्छानियते सर्वदैव त्वि'ति
मायावैभवे ॥ '[4]भिन्नांशस्यैव जीवस्य बन्धमोक्षौ न मे क्वचित् ।
अभिन्नांशास्तु मत्स्याद्यास्तेजसः कालवह्निवत् । जीवा भिन्नांशकास्तत्र
तेजसः प्रतिबिम्बवदि'ति वैलक्षण्ये ॥ '[5]मुक्तस्य तु न मे मोक्षो
बन्धाभावात्कथञ्चन । मुक्त इत्यपि नामैतद्दीप्यतेऽसौ दिवाकरः ।
इति बद्धन्धराहित्यान्न तु वृक्षादिदीप्तिवत् । कादाचित्कतया वाच्यं
बन्धाभावादमोक्षतः । जीवस्य बन्धमोक्षस्तु मत्प्रसादात्कदाचने'ति
तत्त्वोदये । मुक्तस्य विष्णोः । 'नित्यशुद्धबुद्धमुक्तसत्यसुखाद्वय-
प्रत्यगेकपूर्णइत्यतः पदान्वयादि'त्यादिवचनात् । बद्धो जीवः । 'बद्धा
जीवा इमे सर्वे पूर्वबन्धसमन्वयात् । नित्यमुक्तत्वतो विष्णुर्मुक्तनामा

---

गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनम् ॥ १ ॥ शोकमोहौ सुखं
दुःखं देहापत्तिश्च मायया । स्वप्ने यथाऽऽत्मनः ख्यातिः संसृतिर्न तु
वास्तवी ॥२॥ विद्याऽविद्ये मम तनू विद्ध्युद्धव शरीरिणाम् । मोक्षबन्ध-
करी आद्ये मायया मे विनिर्मिते ॥ ३ ॥ एकस्यैव ममांशस्य जीवस्यैवं
महामते । बन्धोऽस्याविद्ययाऽनादिर्विद्यया च तथेतरत् ॥ ४ ॥ अथ
बद्धस्य मुक्तस्य वैलक्षण्यं वदामि ते । विरुद्धधर्मिणोस्तात स्थितयोरेक-

सदोदितः । अबद्धत्वादमोक्षोऽपि दीप्यतेऽसौ रविर्यथे'ति ब्रह्मसंहितायाम् ॥ ३ ॥ '[6-7]अनत्तृत्वं हरेर्दुःखानत्तृत्वादुच्यते सदा । विषयान्विनापि पूर्णत्वात्स्वरूपानन्दभोगिनः । सुखमत्त्येव हि सदा सर्वत्रापि स्थितं विभुः । स्वादोरदनवद्ध्यत्ति जीवोऽस्वाद्वपि यत्सदा । अनारतं पारवश्यात्स्वाद्वत्तीति ततः श्रुति'रिति भोगनिर्णये ॥ अस्वादु स्वादुवद्ध्यत्ति जीवो नैवं जनार्दनः । अतो नात्तीतिवचनमश्नतोऽपि सुखं सदे'ति परभोगे । साशनानशनत्वेन नरदेवौ यथोदितौ । अत्तिं विनाऽप्यदौर्बल्यात्तथानत्तिर्हरेर्भुज' इति स्वाभाव्ये । तदेव प्रोक्तं निरन्नोऽपि बलेन भूयानिति । स्वयं त्वत्त्येव तथापि नादननिबन्धनं तस्य बलमित्यर्थः । 'यत्रा सुपर्णा अमृतस्य भागमनिमेषं विदथाभिस्वरन्ति । इनो विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्रा विवेश । यस्मिन्वृक्षे मध्वदः सुपर्णा निविशन्ते सुवते चाधि विश्वे । तस्येदाहुः पिप्पलं स्वाद्वग्रे तन्नोन्नशद्यः पितरं न वेदे'त्यादिवाक्यशेषात् । वृक्षे स्थित्वा मध्वदः सुपर्णा यस्मिन्नश्नन्ति । सुपर्णे निविशन्ते तदाधारत्वेन सुवते च । तस्यैव सुपर्णस्य स्वादु पिप्पलं अन्यस्तु स्वादुवदश्नाति न स्वादु । यावत्पितरं परमात्मानं न वेदेत्यर्थः । 'सुपर्णौ द्वौ शरीरस्थौ जीवश्च परमस्तथा । पारवश्यादनाज्जीवस्तत्रात्तीति श्रुतौ श्रुतः । स्ववशेनादनाद्विष्णुर्नात्तीत्यत्रापि संश्रुतः । स एव हि शुभस्यात्ता जीवोऽत्तास्यैव वेदनादि'ति कूर्मसंहितायाम् ॥ 'सर्वं वा अत्तीति तददितेरदितित्वम्' । 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः' । 'अत्ता चराचरग्रहणात्' । 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव चे'त्यादेश्च । 'जीवो मुक्तोऽपि नो जीवान्परमात्मानमेव च । वेत्ति सर्वात्मना

---

धर्मिणि ॥ ५ ॥ सुपर्णावेतौ सदृशौ सखायौ यदृच्छयैतौ कृतनीडौ च वृक्षे । एकस्तयोः खादति पिप्पलान्नमन्यो निरन्नोऽपि बलेन भूयान् ॥६॥ आत्मानमन्यं च स वेद विद्वानपिप्पलादो न तु पिप्पलादः । योऽविद्य-





विष्णुर्वेत्त्येकः पुरुषोत्तमः । तस्य प्रसादतः किञ्चिद्ब्रह्माद्या अपि जानते । अन्यजीवानपेक्ष्यैको जानाति च चतुर्मुखः । सामस्त्येन तदन्ये तु लेशज्ञानाः क्रमात्स्मृता'इति विनिर्णये ॥ 'तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तपे'त्यादि च । 'अज्ञा जीवास्तु कथ्यन्ते मुक्ता अप्यल्पवेदनात् । ज्ञइत्येवोच्यते नित्यं सर्ववेत्तृत्वतो हरिरि'ति वैशेष्ये ॥ 'अनाद्यविद्ययाऽन्धत्वं जीवस्य यदि योग्यता । प्रयत्नश्चानुकूलः स्यादन्तवद्भवति ध्रुवम् । नित्यमेवान्यथान्धत्वमयोग्या मानुषादयः । बद्धत्वं सर्वजीवानां नियमान्नित्यमेव तु । बद्धत्वं विष्ण्वधीनत्वमन्धत्वं तदर्शनम् । अतः क्वचिदनित्यत्वमन्धताया भविष्यति । मुक्तस्यापि तु बद्धत्वमस्ति यत्स हरेर्वशः । मुक्ताख्या दुःखमोक्षात्स्याद्बद्धाख्या हर्यधीनता । नित्यबद्धा अपि ततो मुक्ता दुःखविमोक्षतः । नित्यमुक्तस्त्वेक एव हरिर्नारायणः प्रभुः । स्वतन्त्रत्वात्स्वतन्त्रत्वं तस्यैकस्य न चापर' इति मुक्तविवेके ॥ 'शतं सहस्राणि चतुर्दशेह परा गतिर्जीवगणस्य दैत्य । आरोहणं तत्कृतमेव विद्धि स्थानं तथा निःसरणं च तेषाम्' ॥ 'कृष्णो मुक्तैरिज्यते वीतमोहैः' । 'मुक्तानां परमा गतिरि'ति भारते ॥ 'कलाः पञ्चदश त्यक्त्वा श्वेतद्वीपनिवासिनाम् । मुक्ताख्या विष्ण्वधीनास्ते स्वाधिकानां वशे स्थिताः । न चास्मादधिकं किञ्चित्सुखमस्ति हरिं विना । नित्यमुक्तः स एवैकः स्वतन्त्रः स यतः सदे'ति माहात्म्ये ॥ ६, ७ ॥ '[8-9]शरीरस्थोऽपि विद्वत्त्वान्न विष्णुर्बध्यते क्वचित् । अविद्वत्त्वात्तु तत्रैव देहे जीवस्तु बध्यते । स्वप्नदृग्वदिमे जीवा हरिः स्वप्नोत्थितो यथा । सदा तमोविहीनोऽपि ज्ञापनार्थमुदीर्यत'इति विवेके । गुणैरपि गुणेषु अप्रधानैर्जीवैरप्रधानेषु

---

याऽन्धः स तु नित्यबद्धो विद्यामयो यः स तु नित्यमुक्तः ॥७॥ देहस्थोऽपि न देहस्थो विद्वान् स्वप्नाद्यथोत्थितः । अदेहोऽपि देहस्थः कुमतिः स्वप्नदृग्यथा ॥ ८ ॥ इन्द्रियैरिन्द्रियार्थेषु गुणैरपि गुणेषु च । गृह्यमाणेष्वहं

विषयेषु । 'आत्मनो वशगैर्जीवैरात्मनो वशगेषु च । दुःखेषु गृह्यमाणेषु मन आदिभिरिन्द्रियैः । अहं दुःखीति नैवेशस्त्वहङ्कुर्यात्परः पुमान् । जीवगं त्वेव तद्दुःखं विष्णुः पश्यति सर्वदा । अतो न दुःखभाग्विष्णुः स्वातन्त्र्यात्पुरुषोत्तमः । पारतन्त्र्यादहं दुःखीत्येवं जीवः प्रपश्यति । तस्मात्स दुःखभाग्युक्तो यावदीशः प्रसीदती'ति स्वातन्त्र्ये ॥ ८, ९ ॥ [10]गुणभाव्येन कर्मणा गुणभूतः अस्वतन्त्रोऽहमस्मिन्कर्मणीति भावनीयेन । 'अस्वतन्त्रः स्वतन्त्रोऽस्मीत्येवं जीवः प्रभावयन् । बध्यते हीशकोपेन राजभावेन भृत्यवदि'ति च ॥ १० ॥ [11]एवं विरक्तः शयने । एवमस्वातन्त्र्येण नित्यबद्धोऽपि एवमात्मनोः स्वातन्त्र्यपारतन्त्र्ययोर्विद्वान् जीवोऽप्यविद्वज्जीववन्न बध्यते । एवं विद्वानित्यन्वयः । 'नित्यबद्धोऽपि जीवो य आत्मनो नित्यबद्धताम् । विष्णुना नित्यमुक्तत्वं तस्य वेत्ति स मुच्यते ॥ तदधीनत्वबन्धे तु विद्यमानेऽप्यदुःखभाक् । देहस्थोऽपि न दुःखी स्यादन्यवत्किमु मुक्तिग' इति प्राथम्ये ॥ 'नानात्वमिति वै मिथ्याज्ञानं कुत्रचिदुच्यते । वस्तुयाथात्म्यतोऽन्यत्वाज्ज्ञानस्योज्झो विवक्षित'इति वाह्लभ्ये ॥ ११ ॥ '[16]दोषश्चैव गुणश्चोभावीशतन्त्रौ न मे वशौ । इति जानन्न दोषः स्याद्वर्जितोऽल्पगुणेन चे'ति प्राथम्ये ॥१६॥ '[18]स्थितिशब्देन नियमः क्वचिज्जीवनमुच्यते । उत्थितत्वं क्वचिच्चैव

---

कुर्यान्न विद्वान्यस्त्वविक्रियः ॥ ९ ॥ दैवाधीने शरीरेऽस्मिन् गुणभाव्येन कर्मणा । वर्तमानोऽबुधस्तत्र कर्ताऽस्मीति निबध्यते ॥१०॥ एवं विरक्तः शयन आसनाटनमज्जने । दर्शनस्पर्शनघ्राणभोजनश्रवणादिषु ॥ ११ ॥ न तथा बध्यते विद्वांस्तत्रतत्राददन् गुणान् । प्रकृतिस्थोऽप्यसंसक्तो यथा खं सवितानिलः ॥१२॥ वैशारद्येक्षया सङ्गशितया छिन्नसंशयः । प्रतिबुद्ध इव स्वप्नान्नानात्वाद्विनिवर्तते ॥ १३ ॥ न स्तुवीत न निन्देत कुर्वतः साध्वसाधु वा । वदतो गुणदोषाभ्यां वर्जितः समदृङ् मुनिः ॥१६॥ शब्दब्रह्मणि निष्णातो न निष्णीयात् परे यदि । श्रमस्तस्य श्रमफलो



चिद्गतिविरोधिते'ति शब्दनिर्णये ॥ १८ ॥ '[20]दुग्धदोहां तु गां
त्क्षीरमात्रप्रयोजनः । यथा तद्वद्धरेरन्यवाचोधारणमिष्यत'इति हरि-
षु ॥ २० ॥ [21]अर्थादन्यथात्वेन मनसः परिवर्तनं नानात्वभ्रमः ।
वस्येशत्वविज्ञानं जीवानामेकता तथा । ईशस्य बहुता ज्ञानमीशस्या-
शता तथा । जगतोऽसत्यताज्ञानं नानात्वभ्रम उच्यत'इति त्रिविवेके ॥
२१ ॥ [28]स्वेच्छोपात्तपृथग्वपुः । वसुदेवादिशरीरं स्वेच्छया येन
कृतमिति । 'नित्यानन्दशरीरोऽपि वसुदेवादिदेहगः । प्रदर्शयेज्जनिं
स्य नित्यं देहविवर्जितः । वसुदेवादिदेहेषु प्रवेशस्तस्य भण्यते ।
होपादानमिति तु न ह्यन्यो देह इष्यते । अन्याभिमतदेहेषु प्रविष्टः
र्वदा हरिः । नान्यानभिमतो देहो विष्णोरस्ति कदाचन । अतोऽ-
रीरो भगवान्पुत्रताभिमतिस्तु या । वसुदेवादिकानां तु सैव मिथ्या-
तिर्भवेत् । अन्याहंभावयुग्देह एवासौ हरिरास्थितः । न तदन्येषु
हेषु क्वचित्तस्य प्रवेशनम् । मम पुत्रस्त्वयमिति भ्रमणाय यदा हरेः ।
सुदेवादिदेहेषु तनूपात्तिस्तु सा गतिः । अनुपात्तशरीरस्य तनूपात्ति-
रितीष्यते । तद्देहं पितृदेहत्वे उपादत्ते यतो हरिरि'ति प्रकाश-
संहितायाम् ॥ २८ ॥ [33]ज्ञात्वाज्ञात्वेति वीप्सा । 'ज्ञात्वाऽपि मम
माहात्म्यं तत्रोत्सुकतया पुनः । विशेषाच्च विशेषेण ज्ञात्वा मामश्नुतेऽ-

---

धेनुमिव रक्षतः ॥ १८ ॥ गां दुग्धदोहामसतीं च भार्यां देहं पराधीन-
मसत्प्रजाश्च । वित्तन्त्वतीर्थीकृतमङ्ग वाचं हीनां च यो रक्षति दुःख-
दुःखी ॥ १९ ॥ यस्यां न मे पावनमङ्ग कर्म स्थित्युद्भवप्राणनिरोधमस्य ।
लीलावतारेहितकर्म वा स्याद्वन्ध्यां गिरं तां बिभृयान्न धीरः ॥२०॥ एवं
जिज्ञासयाऽपोह्य नानात्वभ्रममात्मनि । उपारमेत विरजं मनो मय्यर्प्य
सर्वगे ॥ २१ ॥ त्वं ब्रह्म परमं व्योम पुरुषः प्रकृतेः परः । अवतीर्णोऽसि
भगवन् स्वेच्छोपात्तपृथग्वपुः ॥२८॥ ज्ञात्वा ज्ञात्वाऽथ ये वै मां यावान्य-
श्चास्मि यादृशः । भजन्त्यनन्यभावेन ते मे भक्ततमा मताः ॥ ३३ ॥

धिकमि'ति विज्ञाने ॥ ३३ ॥ '[44]सर्वदेवोत्तमो वायुरिति ज्ञाना चापरम् । प्रियमस्ति हरेः किञ्चित्तथा वायोर्हरेर्विदः । भारतीवा लक्ष्मीणामात्मनश्च यथाक्रमम् । आधिक्यज्ञानतो विष्णुः सर्व सम्प्रसीदती'ति माहात्म्ये ॥ 'वायुर्भीमो भीमनादो महौजाः सर्वेषां प्राणिनां प्राणभूतः । अनावृत्तिर्देहिनां देहपाते तस्माद्वायुर्देवदेवो विशि इति मोक्षधर्मेषु ॥ 'तस्माद्वायुरेव व्यष्टिर्वायुः समष्टिरथ पुनर्मृत्युं जया य एवं वेदे'ति च । 'पञ्चभूतमनोबुद्धिरुद्राणां प्रतिदेहकम् । वाय श्चापि नेतृत्वाद्वायुर्व्यष्टिसमष्टिक' इति प्रभञ्जने ॥४४॥ '[45]स्वात्मनि हरिः पूज्य आत्मनामाऽशनादिकैः । तत्सम्बन्धादात्मशब्दो स्यादुपचारत'इत्यात्मसंहितायाम् ॥ ४५ ॥ इति एकादशतात्पर्ये ए दशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः

'[2]सङ्गस्तु गुणसम्प्रीतिर्गुणवत्त्वेऽतिनिश्चयात् । स चेद्धरौ भ तेन मुच्यते नात्र संशयः । अपरोक्षदृशेर्हेतुर्भवेत्स स्याद्यदि क्षमा अन्यथा सुखभागेव यदृशिर्मोक्षकारणमि'ति दर्शने ॥२॥ '[8]ज्ञात्वा

---

सूर्योऽग्निर्ब्राह्मणो गावो वैष्णवः खं मरुज्जलम् । भूरात्मा सर्वभूतानि भ पूजापदानि मे ॥४२॥ वैष्णवे बन्धुसत्कृत्या हृदि खे ध्याननिष्ठया । वा मुख्यधिया तोये द्रव्यैस्तोयपुरस्कृतैः ॥ ४४ ॥ स्थण्डिले मन्त्रहृदयैर्भो रात्मानमात्मनि । क्षेत्रज्ञं सर्वभूतेषु समत्वेन यजेत माम् ॥ ४५ ॥ धिष्ण्येष्वेतेषु मद्रूपं शङ्खचक्रगदाऽम्बुजैः । युक्तं चतुर्भुजं शान्तं ध्याय न्नर्चेत्समाहितः ॥ ४६ ॥

द्वादशोऽध्यायः

श्री भगवानुवाच—न रोधयति मां योगो न साङ्ख्यं धर्म एव च । न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं च दक्षिणाः ॥ १ ॥ व्रतानि यज्ञ श्छन्दांसि तीर्थानि नियमा यमाः । यथाऽवरुन्धे मत्सङ्गः सर्वसङ्गापहो हि माम् ॥ २ ॥ केवलेन हि भावेन गोप्यो गावः खगा मृगाः । ये



ग्विद्वेषी तमो याति न संशयः । विशेषरूपस्याज्ञोऽपि गुणवत्त्वेऽति-श्चितः । गुणसम्प्रीतिमान्नित्यं तं दृष्ट्वा मुक्तिमेष्यति । अथवा सुख-गेव स्याद्यावद्दर्शनोपग'इति व्यक्ते ॥ ८ ॥ '[9]हरिसङ्गविहीनस्तु र्दर्शनवानपि । न मुच्यतेऽखिलाज्ञोऽपि तमो याति च निश्चयात् । ण्यैर्विहीनोऽपि तद्भक्तेष्वपि च क्रमात् । सङ्गवान्सुखभागेव द्गुणैर्मुक्तिमेति वा । स्वभक्तसङ्गहीनस्य व्युत्क्रमात्सङ्गिनोऽपि वा । सङ्गविघ्नकृद्विष्णुस्तत्सङ्गेतेषु तत्र चे'ति सत्सङ्गे ॥ 'गोपिकाद्या दिवं त्वा हरिं ज्ञात्वा यथातथम् । परं पदं ययुः पूर्वसङ्गादेव शुभोचिता' ति च ॥ 'श्रोतव्यं च श्रुतं चैव वक्तव्यं कार्यमेव च । निवर्त्य च ः पूजेत्येवं कुर्यान्न चाक्रमात् । एवं कृत्वा तु संन्यासी सर्वोत्सङ्गा-री स्मृतः । अन्यथा नैव संन्यासी निष्क्रियोऽपि शिला यथे'ति र्मविवेके ॥ 'नाहं कर्ता तु सर्वस्य कर्तैको विष्णुरव्ययः । इति त्वा तु संन्यासी नान्यथेति कथञ्चने'ति निवृत्ते ॥ 'मयि णि कर्माणि संन्यस्याध्यात्मचेतसा । निराशीर्निर्ममो भूत्वा ध्यस्व विगतज्वर'इति च ॥९॥ [16]वायौ मुख्यधियेत्युक्त्वा विशेषतो गोपिकाप्रशंसनात्संशयः शृण्वत इति चोदयति ॥ १६ ॥ [17]गोपिका पि मामापुः किमु वाय्वाद्या इति दर्शयितुं गोपिकाप्रशंसनम् । सर्वे-र्णः सर्वोत्तमस्तु वायुरेव । स एव च हिरण्यगर्भ इति दर्शयितुमाह ।

---

द्धियो नागाः सिद्धा मामीयुरञ्जसा ॥ ८ ॥ यं न योगेन साङ्ख्येन नव्रततपोऽध्वरैः । व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवानपि ॥९॥ कामा रमणं जारमस्वरूपविदोऽबलाः । ब्रह्म मां परमं प्रापुः सङ्गाच्छत-सहस्रशः ॥१३॥ तस्मात्त्वमुद्धवोत्सृज्य चोदितां प्रतिचोदनाम् । प्रवृत्तञ्च निवृत्तं च श्रोतव्यं श्रुतमेव च ॥ १४ ॥ मामेकमेव शरणमात्मानं सर्व-देहिनाम् । याहि सर्वात्मभावेन यस्मिन्नस्त्यकुतोभयम् ॥ १५ ॥ उद्धव वाच—संशयः शृण्वतो वाचं तव योगेश्वरेश्वर । न निवर्तत आत्मस्थो येन भ्राम्यति मे मनः ॥१६॥ श्री भगवानुवाच—य एष जीवो विवरप्रसूतिः

य एष जीवो विवरप्रसूतिरित्यादि । विशेषेण वराणामहङ्कारादीनामपि प्रसूतिकर्ता । प्राणेन विष्णुना घोषेण वेदात्मिकया प्रकृत्या । मनोमात्रादयश्च हिरण्यगर्भस्य देव्याः परमात्मनश्च व्यक्तिस्थानानीत्युक्तम् । 'प्राणेन घोषेण च सह विवरप्रसूतिर्मनोमयं रूपमुपैती'त्यादिना ॥१७॥ [18]तत्रापि विशेषतो भगवत एव व्यक्तिस्थानमित्याह । यथाऽनल इत्यादिना ॥ १८ ॥ [20]विशेषेण श्लिष्टशक्तिः । अनपगतसामर्थ्यः । यथैकं कलमादिबीजं भूमावुप्तं बह्वङ्कुरं भवति एवं परमात्मानुगृहीतो ब्रह्माऽहङ्कारादिषु बहुधा व्यक्तीभवति । 'सुपर्णशेषरुद्रादिप्रसूतिश्च चतुर्मुखः । सर्वजीवोत्तमो जीवो गुणैर्ज्ञानसुखादिभिः । विष्णुभक्त्यादिभिः सर्वैर्नियमात्सर्वकालिकम् । मुक्तावपि न सन्देहः स हि देवेन विष्णुना । प्राणप्राणेन जगतामीशेन रमया तथा । वेदात्मिक्या च सहितः सूक्ष्मः सन्मनसि स्थितः । वीन्द्रादीनां तु सर्वेषां मात्रावर्णस्वरेषु च । स्थूलरूपी सदा तिष्ठन्नेवं श्रोत्रादिखेषु च । सर्वेषां प्रेरको ह्येको ज्ञानानन्दबलैस्त्रिवृत् । नित्यशक्तिः सर्वगः सन्बहुधेव प्रतीयते । तस्मिन्नोतमिदं सर्वं पटे लक्षणतन्तुवत् । स एव वायुरुद्दिष्टो वायुर्ब्रह्मतामगात् । विशेषतो हरेर्व्यक्तिस्थानान्येतानि सर्वशः । मनआदीन्यहङ्कारो ब्रह्मा वेदात्मिका रमा । त्रिगुणात्मिका च सैव श्रीः सैवोक्ता संविदात्मिका । तस्या अपि नियन्तैको विष्णुः सर्वेश्वरेश्वरः । यथा दारुषु सूक्ष्मः सन्मथितोऽग्निः समिध्यते । तथा वेदादिषु हरिर्मथितः सम्प्रदृश्यते । व्यक्तिस्थानान्यथैतानि वेदादीनि हरेर्विदुरि'ति

---

प्राणेन घोषेण गुहां प्रविष्टः । मनोमयं सूक्ष्ममुपैति रूपं मात्रा स्वरो वर्ण इति स्थविष्ठम् ॥ १७ ॥ यथाऽनलः खेऽनिलबन्धुरुष्माबलेन दारुण्यधि मथ्यमानः । अणुः प्रजातो हविषा समिध्यते तथैव मे व्यक्तिरियं हि वाणी ॥१८॥ एवं गतिः कर्मरतिर्विसर्गो घ्राणो रसो दृक्स्पर्शः श्रुतिश्च । सङ्कल्पविज्ञानमथाभिमानः सूत्रं रजःसत्वतमोविकारः ॥ १९ ॥ अयं हि जीवस्त्रिवृदब्जयोनिरव्यक्त एको जगतां यथाऽद्यः । विश्लिष्टशक्तिर्बहुधे



तन्त्रभागवते ॥ 'मनसि व्यक्ततां यामि तस्माद्व्यक्तिर्हि मे मन'इति भारते ॥ २० ॥ '[21]यथैव वस्त्रे दीर्घे च तिर्यक्चापि सुसंस्थिता । तन्तुभिः क्रियमाणैव पद्माद्याकारसंस्थितिः । यथा जीर्णानि वस्त्राणि तन्त्वाधाराणि वा पुनः । कन्थावयवभूतानि तद्वदेतच्चतुर्मुखे । सोऽपि तद्वद्धरौ नित्यं संस्थितः श्रीरपि स्फुटमि'ति प्रातिस्विके ॥ २१ ॥ '[22]जगद्वृक्षस्य बीजे द्वे ब्रह्मा चैव सरस्वती । मूलभूतानि कर्माणि मनो बुद्धिरहङ्कृतिः । नालत्वेन समुद्दिष्टाः खमाद्याः स्कन्धसंज्ञिताः । एकादशेन्द्रियाण्येव शाखास्तु त्रिगुणास्त्वचः । प्रवृत्तं च निवृत्तं च फले अस्य प्रकीर्तिते । पुष्पमैहिकमुद्दिष्टं रसाः शब्दादयस्तयोः । प्रवृत्ताश्च निवृत्ताश्च पक्षिणस्तत्र संस्थिताः । वृक्षस्य पृथिवीवच्छ्रीर्विष्णुराकाशवायुवत् । तस्या अपि सदाधार एवं ज्ञात्वा विमुच्यत'इति निवृत्ते ॥२२॥ '[24]प्राकृतान्तःकरणजं ज्ञानमस्त्रं सृतिच्छिदम् । तदेव तेन संछेद्यं चित्तं प्रकृतिसम्भवम् । तेनैव सह संत्याज्यं नैव पूर्वं कथञ्चन । ज्ञानं प्रकृतिजं चापि मूलनाशे विनश्यति । ततः परं स्वरूपेण ज्ञानेनैव जनार्दनम् । वेत्ति मुक्तस्तथाऽऽत्मानं जीवानन्यांश्च सर्वश'इति माहात्म्ये ॥ २४ ॥ '[22]बीजभूतावपि ह्यस्य ब्रह्मा चैव सरस्वती । न रिष्यतो जगत्सृष्टौ वटवृक्षादिबीजवत् । स्वकार्यतो महान्तौ च गुणतो रूपतस्तथा । पृथिव्युदकवत्तस्माद्बीजत्वं न तु बीजवत् । व्यञ्जकत्वान्न चाल्पत्वान्महाक्ष्मावद्रमा स्मृता । अण्डो महाक्ष्मा सम्प्रोक्तस्ततः पृथ्व्युदकं तथा । जायते नित्यशस्तस्माद्भुक्तं भुक्तं न हीयते । तत्राप्युदकवद्ब्रह्मा मृद्वच्चापि सरस्वती । जलाधारा यतो मृच्च सर्वत्रापि व्यवस्थिता । अन्यथा तु रजो भूता नीयते वायु-

---

भाति बीजानि योनिं प्रतिपद्य यद्वत् ॥ २० ॥ यस्मिन्निदं प्रोतमशेषमोतं पटे यथा तन्तुवितानसंस्था । य एष संसारतरुः पुराणः कर्मात्मकः पुष्पफले प्रसूते ॥ २१ ॥ द्वे अस्य बीजे शतमूलस्त्रिनालः पञ्चस्कन्धः पञ्च-

नाऽखिला। अथवा सर्वनाशः स्याज्जलाधारा ततः स्मृता। वटादिबीजवत्तस्य पुण्यापुण्यमुदीरितम्। बाह्योदवच्चाग्निवच्च विष्णुरेव प्रकीर्तित'-इति सत्यसंहितायाम्॥ श्रियादेरप्ययनत्वाद्ब्राह्योदवत्। ब्रह्मादेरपि लयकर्तृत्वादग्निवत्। आधारत्वात्सुखदत्वाच्च वायुवत्। अवकाशप्रदत्वाद्व्योमवद्विष्णुः। 'व्रीह्यादिवत्तु मूलत्वं कर्मणां जगतः स्मृतम्। उदवत्पृथिवीवच्च ब्रह्मणो वाच एव च। मूलभूवच्छ्रियश्चैव मूलभूरण्डमुच्यते। बाह्योदाग्नीरखंवत्तु विष्णोर्बीजत्वमिष्यत'इति विश्वसंहितायाम्॥ देहेन्द्रियमनोवाक्षु स्थितो भक्त्यादिसाधकः। सुपर्णशेषरुद्रादेरपि ब्रह्मा चतुर्मुखः। अतो भक्त्यादिकाः सर्वे गुणास्तस्यैव सर्वगाः। अतिरिक्ताश्च सम्पूर्णाः सुपर्णादेः शताधिकाः। सुपर्णादिभिरज्ञातास्तदभीमानवर्जिताः। ब्रह्मणस्तु पुनः सन्ति तेषां कर्ता जनार्दनः। तस्मात्सर्वाधिको ब्रह्मा गुणैः सर्वैर्न संशयः। वर्णस्थो वर्णनामाऽसौ स्वरस्थः स्वरनामकः। मनःस्थश्च मनोनामा तन्नामा चक्षुरादिगः। तस्य सर्वाणि नामानि मुख्यतः कवयो विदुः। तत्स्थानत्वादिन्द्रियादेर्वर्णादेश्चोपचारतः। एवमस्योपचारेण विष्णोः साक्षात्तु मुख्यत'इति शब्दनिर्णये॥ कृष्णप्रियाभ्यो गोपीभ्यो भक्तितो द्विगुणाधिकाः। महिष्योऽष्टौ विना यास्ताः कथिताः कृष्णवल्लभाः। ताभ्यः सहस्रसमिता यशोदा नन्दगेहिनी। ततोऽप्यभ्यधिका देवी देवकी भक्तितस्ततः। वसुदेवस्ततो जिष्णुस्ततो रामो महाबलः। न ततोऽभ्यधिकः कश्चिद्भक्त्यादौ पुरुषोत्तमे। विना ब्रह्माणमीशेशं स हि सर्वाधिकः स्मृत'इत्यन्तर्यामिसंहितायाम्॥ 'पापद्वेषादिका दोषा अवराणां न संशयः। भक्त्यादिगुणपूगस्तु पराणामा विरिञ्चतः। स्वातन्त्र्यात्सर्वदेहेषु स्थितानामपि

रसप्रसूतिः। दशैकशाखो द्विसुपर्णनीडस्त्रिवल्कलो द्विफलः खं प्रविष्टः॥ ॥२२॥ अदन्ति चैकं फलमस्य गृध्रा ग्रामेचरा एकमरण्यवासाः। हंसा॥ एवं बहुरूपमिष्टं मायामयं वेद स वेद वेदम् ॥२३॥ एवं गुरूपासनयैक॥



सर्वशः। स्पृश्यन्ते नैव दोषैस्ते गुणदानैकतत्परा'इति विवेके॥ 'यदु किञ्चेमाः प्रजाः। शोच्यन्त्यमैवासां तद्भवति। पुण्यमेवामुं गच्छति। न ह वै देवान्पापं गच्छती'ति च॥ २२-२४॥ इति एकादशतात्पर्ये द्वादशोऽध्यायः॥ १२॥

## त्रयोदशोऽध्यायः

[2]धर्मात्पुनः सत्वोद्रेकः। सत्वोद्रिक्तया बुद्ध्या पुनः सत्वोद्रेकात्पुनर्धर्मोद्रेकः॥ २॥ [7]वेदो वृत्तिज्ञानम्। 'मुक्ताश्चाधीयते वेदान् जडज्ञानबहिष्कृताः। स्वरूपभूतज्ञानेन पश्यन्तः सर्वमञ्जसे'ति तात्त्विके॥ ॥ ७॥ [18]प्रश्नो बीजमस्येति प्रश्नबीजं परिहारम्। गुणानां चेतसश्च कर्म कारणमिति मन्वानः कर्मधीः। 'ब्रह्मा पृष्टस्तु योगीन्द्रैः सनकाद्यैर्मनोगतेः। कारणं विषयेष्वद्धा कर्मेति प्रत्यपद्यत। हेतुरन्योऽपि तत्रास्तीत्येवं जानन्नपि प्रभुः। विशेषतो मनस्तत्र नाधाज्ज्ञानन्हरेः प्रियम्। स्वात्मना परिहारोक्तिस्तदा ह्यासीद्धरेः प्रिया। अतः स तत्प्रियं जानन्नाकरोत्तद्विचारणम्। तमेवाचिन्तयद्देवः प्रश्ननिर्णयकारणात्। भ्रमतीव मनः क्वापि ब्रह्मणो विष्णुमायया। सर्वज्ञस्यापि

भक्त्या विद्याकुठारेण शितेन धीरः। विवृश्च्य जीवाशयमप्रमत्तः सम्पद्य चात्मानमथ त्यजास्त्रम्॥ २४॥

### त्रयोदशोऽध्यायः

श्री भगवानुवाच—सत्वं रजस्तम इति गुणा बुद्धेर्न चात्मनः। सत्वेनान्यतमौ हन्यात्सत्वं सत्वेन चैव हि॥ १॥ सत्वाद्धर्मो भवेच्छुद्धात्पुंसो मद्भक्तिलक्षणः। सात्विकोपास्तया ज्ञानं ततो धर्मः प्रवर्तते॥ २॥ वेणुसङ्घर्षजो वह्निर्दग्ध्वा शाम्यति तद्वनम्। एवं गुणव्यत्ययजो वेदः शाम्यति तद्यथा॥७॥ अप्रमत्तो हि युञ्जीत मनो मय्यर्पयन् शनैः। अनिर्विण्णो यथाकालं जितश्वासो जितासनः॥१३॥ सनकादय ऊचुः—गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रभो। कथमन्योन्यसन्त्यागो मुमुक्षोः सन्तितीर्षतः॥ १७॥ श्री भगवानुवाच—एवं पृष्टो महादेवः स्वयम्भू-

तत्रात्मा वक्तुमिच्छेज्जनार्दनः। तज्ज्ञात्वा चिन्तितं तस्य चिन्तयत्यमु-
मेव तु। न स्वयं चिन्तयत्यर्थं स हि तद्भाववित्सदा। अन्ये त्वज्ञान-
संयुक्ता मोहमीयुर्यथाक्रमम्। तस्य मध्यन्दिने सूर्ये क्षोभवत्क्षोभ-
मात्रकम्। नैवाज्ञानं यथा सूर्ये तमो नास्ति कदाचने'ति भावविवेके॥
॥ १८ ॥ [22]आत्मनो वस्तुनः परमात्मवस्तुन एकत्वं यद्यङ्गीकृतम्।
तदा कथं प्रश्नो घटेत ॥ [23]न हि परमात्मनोऽन्योऽत्र ब्रह्मणा पूज्यः
स्यादभिवदनादिना। तस्माद्ब्रह्मणो वन्द्यः परमात्मैव स चैक एव
अतः कथं प्रश्नः परिहारो वा ॥ २२ ॥ वस्तुतः समानेषु हिरण्यगर्भा-
वरत्वात्तद्वन्द्यत्वाभावापेक्षया। तस्माद्ब्रह्मणो वन्दनानन्तरं विचारो न
घटते। तस्मात्को भवानिति वाचा प्रारब्धः प्रश्नो निरर्थकः ॥ २३ ॥
[24]यस्मान्मन आदिभिर्गृह्यमाणमहं न भवाम्येव। स्वयमपि प्रसादात्कथं-
चिद्गृह्यत इत्यत आह। मत्तोऽन्यदिति। यन्मनआदिभिर्विचार्य
मत्तोऽन्यत्वेनैव ज्ञायते। तदहं न भवाम्येवेति बुध्यध्वम्। विचारित-
स्यापि पुनः संशयकारणं परिकल्प्य संशयो न कर्तव्यः। अतः को
भवानिति नारब्धव्यः, गुणेष्वाविशते चेत इत्येव प्रश्न आरब्धव्यः। 'न
युष्माकमपि प्रश्नो घटेतायं कथञ्चन। मामृते न हि वन्द्योऽस्ति विरिञ्चे
क्वापि कश्चन। अभिवन्दितपादं मां विरिञ्चेन कथं पुनः। पृच्छथान्ये
समा यस्मादवरत्वे चतुर्मुखात्। देवा मनुष्याः पितरो गन्धर्वा असुरा-
स्तथा। इति पञ्चात्मकं सर्वं ब्रह्मणस्त्ववरं यतः। यन्मदन्यद्विचारेण
गृह्यते तन्न चास्म्यहम्। इति जानीध्वमद्धैव मत्प्रसादाद्धि मद्दृशिः।
अन्यत्स्वभावतो दृश्यं मम प्रेरणयैव तु। तस्माद्विवक्षितार्थे तु प्रश्नारम्भो

भूतभावनः। ध्यायमानः प्रश्नबीजं नाभ्यपद्यत कर्मधीः ॥ १८ ॥ वस्तुनो
यद्यनानात्वमात्मनः प्रश्न ईदृशः। कथं घटेत वो विप्रा वक्तुं वाऽन्य
आश्रयः ॥२२॥ पञ्चात्मकेषु भूतेषु समानेषु च वस्तुतः। को भवानिति
वः प्रश्ने वाचारम्भो निरर्थकः ॥२३॥ मनसा वचसा दृष्ट्या गृह्यतेऽन्यै



न मद्गत'इति तन्त्रभागवते ॥ 'इदं हि सर्वं भगवानिवेतर'इति च।
'प्रकृतेर्व्यतिरिक्तो यः पुरुषश्चेति कथ्यते। तं विद्यात्परमात्मानं
वासुदेवेति यं विदुरि'ति भारते ॥ 'प्रकृतेः प्राकृताच्चैव व्यतिरिक्तं
गुणाधिकम्। ये विदुः परमात्मानं ते यान्ति परमं पदमि'ति च ॥
'नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह। बहूनां पुरुषाणां हि यथैका
योनिरुच्यते। तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकमि'ति च ॥
॥२४॥ [25]मय्येव मनो यस्य स मदात्मा तस्योभयं देहे दग्धमभवत् ॥
॥२५॥ [26]मत्स्वरूपे तदुभयं त्यजेत्। मयि स्थिताश्चेतो गुणाश्चेति।
'विष्णुस्था विषयाः सर्वे विष्णावेव मनो मम। इति मय्यर्पयन्सर्वं
त्यजेत्तत्तन्न बाधत'इति साम्ये ॥ २६ ॥ [28]गुणचेतसां त्याग एव
बन्धत्यागः ॥ २८ ॥ '[30]भिन्नस्य त्वेकभावेन तथैकस्य च भेदतः।
ज्ञानं नानार्थधीः प्रोक्ता नानात्वादर्थतद्धियोरि'ति ब्रह्मतर्के ॥ ३० ॥
'[31]अभिदा किङ्कृतैतेषां भावानां परमेश्वरे। यतोऽसत्वमशक्तत्वाद्भावानां
तस्य शक्तता। ततः सत्वं साधुभावः सत्वमित्युच्यते बुधैः। साधु-
भावश्च शक्तस्य ततोऽन्याऽसाधुता ततः। अभेदे जगतो विष्णोर्या
वाचो ये च हेतवः। स्वप्नजाग्रत्कल्पकवत्सर्वे ते भ्रमदर्शिता'इति शाश्व-
त्संहितायाम् ॥ ३१ ॥ '[32]दक्षिणाक्षिस्थितो विष्णुर्भुङ्क्तेऽर्थान् जाग्रदा-
स्थितान्। कण्ठसंस्थस्तथा स्वप्नान् जीवानन्दं च सुप्तिगः। श्रुत्यन्वया-

रपीन्द्रियैः। अहमेव मत्तोऽन्यदिति बुध्यध्वमञ्जसा ॥२४॥ गुणेष्वाविशते
चेतो गुणाश्चेतसि च प्रजाः। जीवस्य देह उभयं गुणाश्चेतो मदात्मनः ॥
॥२५॥ गुणेषु वा विशेच्चित्तमभीक्ष्णं गुणसेवया। गुणाश्च चित्तप्रभवा
मद्रूप उभयं त्यजेत् ॥ २६ ॥ यर्हि संसृतिबन्धोऽयमात्मनो गुणवृत्तितः।
मयि तुर्ये स्थितो जह्यात्त्यागस्तु गुणचेतसाम् ॥ २८ ॥ यावन्नानार्थधीः
पुंसो न निवर्तेत युक्तिभिः। जागर्त्यपि स्वपन्नज्ञः स्वप्ने जागरणं यथा ॥
॥३०॥ असत्वादात्मनोऽन्येषां भावानां किं कृताऽभिदा। गतयो हेतव-
श्चास्य मृषा स्वप्नदृशो यथा ॥ ३१ ॥ यो जागरे बहुविधान् क्षणधर्मिणो-

त्स्मृतिभ्यश्च स एकः परमेश्वरः । अस्वतन्त्रस्य जीवस्य स्वतन्त्रो जाग्रदादिदः । स्वयं स्वप्नादिहीनः सन्क्रीडते पुरुषोत्तम'इति तत्त्वे ॥ 'स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीती'त्यादि च ॥ ३२ ॥ [34]जाग्रदादिषु परमात्मभेदं विभ्रमं वीक्षेत । जाग्रदादिकरो देवः परमात्मैक एव तु । इति वीक्षेत सततं मुच्यते संसृतेरत'इति प्रकाशसंहितायाम् ॥ यदा विभ्रमोऽयमिति दृष्टस्तदैव विनष्टः। श्रुतियुक्तिभिर्विचारितेऽतिलोलः । क्षिप्रं विनश्यतीत्यर्थः । अलातस्य चक्राकारत्वभ्रमवत् परमात्मभेदभ्रमः । त्रिगुणैस्तत्कार्यैः पापादिभिश्च बद्धः सन् विज्ञानरूपं परमात्मानं भ्रान्त्या बहुधा पश्यति । 'देहभेदेष्ववस्थासु प्रादुर्भावेषु चैकलम् । ज्ञानानन्दैकसद्रूपं भ्रान्त्या भिन्नं प्रपश्यति । सा च भ्रान्तिर्विनश्येत यदा भ्रान्तित्ववेदनम् । अतिक्षिप्रं विनश्येच्च न स्थिरं दिग्भ्रमादिवत् । त्रिगुणैर्बद्धिता जीवा ज्ञप्तिमात्रं जनार्दनम् । पश्यन्ति बहुधा स्वप्ने यथैकं बहुधा क्वचित् । अभिन्नोऽपि विभिन्नेषु व्यवहारो यथा भवेत् । तथैव व्यवहाराय शक्तत्वान्नैव दूषणम् । ईशस्य तु तदन्येषामपि यच्छक्तिदायक'इति ब्रह्मतर्के ॥ अलातभ्रामको यदा निवर्तते तदैव भ्रमो निवर्तते । तद्वद्यदा भ्रमनिवृत्तिमिच्छति तदैव गुरूपसदनान्निवर्तयितुं शक्यः । 'अशक्योऽप्यपि शक्योऽयं विनिवर्तयितुं भ्रमः । ईशस्थो गुरुसम्पत्त्या यदि शुद्धमनाः पुमानि'ति सम्यग्ज्ञाने ॥ ३४ ॥ [35]निपातमन्धं तमः मोक्षमारभ्य तावत्पर्यन्तं स्मृतिर्यस्माज्ज्ञानिनो वर्तते अतो मूढेषु अविद्याव्यवस्थितो भ्रमो यद्यपि

थान् भुङ्क्ते समस्तकरणो हृदि तत्सदृक्षान् । स्वप्नेऽथ सुप्त उपसंहरते स एकः स्मृत्यन्वयात्त्रिगुणवृत्तिदृगिन्द्रियेशः ॥ ३२ ॥ ईक्षेत विभ्रममिमं मनसो विलासं दृष्टं विनष्टमतिलोलमलातचक्रम् । विज्ञानमेकमुरुधेव विभाति माया स्वप्ने यथा त्रिगुणसर्गकृतो विकल्पः ॥ ३४ ॥ दृष्टिं ततः प्रतिनिवर्त्य निवृत्ततर्षस्तूष्णीं भवेन्निजसुखानुभवो निरीहः । सन्दृश्यते



संदृश्यते तेन तथापि भ्रमाय न भवति । फलं हि निपातं स्मरति ॥ ॥ ३५ ॥ [36]त्रिगुणसर्गकृतो विकल्प इत्युक्तं ज्ञानिनोऽपि देहवत्त्वेन त्रिगुणित्वाद्विकल्पो भवतीत्यत आह । देहं च नश्वरमिति ॥ ३६ ॥ '[37]आदरो भजनं भक्तिर्बहुमानं च सेवनम् । पर्यायवाचकाः सर्वे स्मृतिस्तज्जन्म कर्म चे'ति शब्दनिर्णये ॥ ३७ ॥ '[40]अपूर्णगुणरूपास्तु सम्पूर्णगुणरूपकम् । भजन्ति परमं ब्रह्म देवास्त्रिगुणवर्जितमि'ति कालसंहितायाम् ॥ ४० ॥ इति एकादशतात्पर्ये त्रयोदशोऽध्यायः ॥१३॥

## चतुर्दशोऽध्यायः

'[1]रुद्रमिन्द्रं कुमारं च विनैवान्याग्रजो मनुः । ब्रह्मपुत्रेष्वादिसृष्टावन्यथात्वं पुनर्जनेरि'ति स्कान्दे ॥ 'पूर्वसृष्टौ पूर्वजा ये तेऽधिकाः सर्वतो गुणैः । अनाद्यनन्तकालेषु मुक्तावपि यथाक्रममि'ति निबन्धे ॥ अनेन पारम्पर्येण केषाञ्चिदेव देवादीनाम् ॥ ४ ॥ '[11]मद्भक्तिवर्जितं श्रेयो ये मन्यन्ते दुराशयाः । तेषामन्ते तमो घोरमनन्तं प्राप्यते ध्रुव-

क च यदीदमवस्तु बुध्या त्यक्तं भ्रमाय न भवेत्स्मृतिरा निपातात् ॥३५॥ देहं च नश्वरमवस्थितमुत्थितं च सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम् । दैवादुपेतमुत दैववशादपेतं वासो यथा परिकृतं मदिरामदान्धः ॥ ३६ ॥ देहोऽपि दैववशगः खलु कर्म यावत्स्वारम्भकं प्रतिसमीक्षत एव सासुः । तं सप्रपञ्चमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः ॥ ३७ ॥ मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम् । सुहृदं परमात्मानं साम्यासङ्गादयो गुणाः ॥ ४० ॥

### चतुर्दशोऽध्यायः

श्री भगवानुवाच—कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता । मयाऽऽदौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ॥ ३ ॥ तेन प्रोक्ता च पुत्राय मनवे पूर्वजाय सा । ततो भृग्वादयोऽगृह्णन्छन्दब्रह्म महर्षयः ॥४॥ एवं प्रकृतिवैचित्र्याद्भिद्यन्ते मतयो नृणाम् । पारम्पर्येण केषाञ्चित्पाखण्डमतयोऽपरे ॥ ८ ॥ आद्यन्तवन्त एवैषां लोकाः कर्मविनिर्मिताः । दुःखोदर्का-

मि'ति मान्यसंहितायाम् ॥ ११ ॥ '[15]कृपानिमित्ता या प्रीतिर्नीचभक्तेषु साऽधिका । आन्तरे(रै)व तु या प्रीतिः सा तूच्चेषु यथाक्रमम् । यथा कश्चित्स्वमात्मानं प्रियां पुत्रमथापि वा । अतिहाय कृपायुक्तो भिक्षवेऽन्नं ददात्यपि । कदाचिदेव न पुनः स्वात्मादेः सार्वकालिकम् । योगक्षेमवहत्वं च नित्यं स्वात्मादिषु स्फुटम् । एवमेव परेशस्य भक्तेषु श्रियजादिष्वि'ति प्रियविवेके ॥ 'यादवेभ्यश्च सर्वेभ्य उद्धवो भगवत्प्रियः । उद्धवाच्च प्रियतमः प्रद्युम्नस्तु महारथः । तस्मादपि प्रियतमो रामः कृष्णस्य सर्वदा । नैव तस्मात्प्रियतमो विनैकं तु चतुर्मुखम् । सर्वेऽभ्योऽपि प्रियतमा हरेः श्रीरेव वल्लभा । नैव तस्याः प्रियतमो विना स्वात्मानमेव त्वि'ति यादवाध्यात्मे ॥ १५ ॥ [16]स्वाङ्घ्रिरेणुभिस्तं शोधयामीत्यनुव्रजामि । 'अनुगच्छति विष्णुस्तु स्वभक्तं तस्य शुद्धये । तस्याङ्घ्रिरेणुभिर्वातनीतैरग्रेसरैः शुचिः । अग्रतो गमने विष्णोः पदा स्पृष्टं रजो भवेत् । अतः स्वभक्तं पूयेयेत्यनुव्रजति केशव'इति सङ्ख्याने ॥ १६ ॥ '[24]चित्तद्रवस्तथा स्थैर्यं प्रसादो भक्तिलक्षणम् । आधिक्येन तु तत्रापि स्थैर्यमेव विशेषतः । दम्भस्य चलभक्तेश्च यस्मा- दश्र्वादिकं भवेत् । दम्भादिपरिहारार्थं निगृह्णीयाच्च धीरधीः । अत आध्यात्मिकक्लेशैराधिभूताधिदैविकैः । वाक्यैश्च वेदतन्त्राद्यैरुपदेशै- स्तादृशैः । बलवच्छासनैर्वापि यस्य भक्तिर्न चाल्यते । स एव परमो भक्तो विष्णोर्हृदयवल्लभ'इति भक्तिविवेके ॥२४॥ '[29]केशवे त्वन्यथा- बुद्धिः सैव स्त्री सम्प्रकीर्तिता । त्रिकालदुःखदत्वेन पुंसा सह निवास-

स्तमोनिष्ठाः क्षुद्रानन्दाः शुचाऽर्पिताः ॥११॥ न तथा मे प्रियतम आत्म- योनिर्न शङ्करः । न च सङ्कर्षणो न श्रीर्नैवात्मा च यथा भवान् ॥ १५ ॥ निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम् । अनुव्रजाम्यहं नित्यं पूयेय स्वाङ्घ्रिरेणुभिः ॥ १६ ॥ वाग्गद्गदा द्रवते यस्य चित्तं रुदत्यभीक्ष्णं हसति क्वचिच्च । विलज्ज उद्गायति नृत्यते च मद्भक्तियुक्तो भुवनं पुनाति ॥२४॥ स्त्रीसङ्गसङ्गिनां सङ्गं त्यक्त्वा दूरत आत्मवान् । क्षेमे विविक्त आसीन-



नात्' ॥ २९ ॥ [30]जुष्टत्वाद्योषिदित्युक्ता वननाद्वनितेति च । प्रमादकरणत्वात्तु प्रमदेति च गीयते । त्यजेत्तत्सङ्गिनां सङ्गं बुभूषुः पुरुषः सदा । न तादृशः क्वचिद्दोषः पुरुषस्यासुखावहः । क्षुद्रपापानि पापानि चोपपातकपातके । महापातकनामानि सुमहापातकान्यपि । तथा स्वस्तिमहान्तानि पातकानि विदो विदुः । पिपीलिकवधादीनि क्षुद्रपापोदितानि च । पापमस्थिमतां हत्या फलचौर्यादिरेव वा । परदारादिकं चापि ह्युपपातकसंज्ञितम् । पातकं शूद्रहत्यादि ब्रह्महत्यादिकं महत् । देवस्वहरणादीनि सुमहान्ति विदो विदुः । देवावज्ञा सतां चैव ततोऽपि सुमहत्तरा । महन्महत्तरा तस्य अवज्ञा केशवे तु या । केशवस्य समोऽस्तीति केशवोऽस्म्यहमित्यपि । ब्रह्माद्याः केशवात्मानः श्रीर्वा निर्गुण इत्यपि । मुक्तस्य तद्भावमतिररूपत्वमतिस्तथा । त्रिगुणात्मकदेहोऽस्याप्यस्तीत्यपि तु या मतिः । जन्ममृत्यादिबुद्धिर्वा दुःखज्ञानादिसाधनम् । तस्यापि परतन्त्रत्वविज्ञानं च तदुत्तमः । अस्तीति या मतिस्तस्य वशादन्यस्य कस्यचित् । अस्तीति भावनेत्याद्या अवज्ञा सम्प्रकीर्तिता' इति धर्मविवेके ॥ 'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्' । 'अपि चेत्सुदुराचारो भजते मामनन्यभागि'त्यादि च ॥ 'बाध्यमानोऽपि मद्भक्त' इत्यादि च । 'परदारदृशिः प्रोक्ता क्षुद्रपातकसंज्ञिता । उपपातकं तद्गतिश्च वर्णबाह्येषु पातकम् । महापातकसंज्ञं तु पित्रादेर्दारधर्षणम् । दारदृष्टिः स्वोत्तमानां मानुषाणां स्वभावतः । सुमहापातकं प्रोक्तं तद्गतिः सुमहत्तरः । ऋषिदारेषु मनसो गतिरेव ततोऽधिका । देवदाराभिकामानां सङ्गिसङ्गस्ततोऽधिकः । किमु विष्णोस्ततो योषित्सङ्गस्य व्यत्ययस्थितेः । न समं पातकं क्वापि न हि स्वस्त्र्यभिगामिनः । अवज्ञाता माधवादेस्तस्मात्तं दूरतस्त्यजेत् । मानुषेषु तु दुःखित्वं क्षुद्रपापफलं स्मृतम् । पापात्तु वर्णबाह्यत्वं तिर्यग्योनिगति-

चिन्तयेन्मामतन्द्रितः ॥ २९ ॥ न तथाऽस्य भवेत्क्लेशो बन्धश्चान्य-

स्तथा। सहस्रवर्षनरकं क्षुद्रपातकजं फलम्। उपपातकतश्चापि नरकं युगमात्रकम्। चतुर्युगावसानं तु पातकस्य फलं स्मृतम्। महापातकजन्यं च कल्पावधि समीरितम्। सुमहापातकाच्चापि यावद्ब्रह्मलयो भवेत्। तत्पराणां पातकानां फलमन्धन्तमः स्मृतम्। अधोऽधो दुःखबहुलं विष्णुदाराभिमर्शनात्। वधादपि हि दारस्य धर्षणं कोपकारणम्। तस्माद्देव्यः सदा वन्द्या अग्निवन्नाभिकामत'इति धर्मतत्त्वे ॥ ३० ॥ '[35]उपास्य प्राणतोऽनुज्ञां हृदिस्थात्प्राप्य सेवकः। अनुज्ञानन्तरं मासाद्वशे प्राणो भविष्यति। प्रसादभात्त्वं सम्प्रोक्तं प्राणविष्ण्वोर्जयस्त्विति ॥ न हि सर्वविजेतारौ विजेयौ केनचित्क्वचित्। अपेक्षितं फलं येन दीयते तज्जितं त्विति। यथा जिता वसुमती यथा मोक्षपदं जितमि'ति प्रभञ्जने ॥ ३५ ॥ '[43]व्योमेति व्याप्तशब्दः स्याद्विशेषादोतता यत'-इति शब्दनिर्णये ॥ व्योम्नि धारयेत् सर्वाङ्गेषु धारयेदित्यर्थः। तच्च धारणं त्यक्त्वा स्वत एव मनसस्तत्रैव समाहितत्वादन्यत्किमपि न चिन्तयेत्। 'यावत्समग्रस्मरणमचलं केशवे भवेत्। समग्रं चिन्तयेत्तावद्यदा तु विचलेत्ततः। प्रत्यङ्गं धारणं कुर्यान्मनो यावत्समग्रगम्। प्रत्यङ्गाभ्यासतो यावत्समग्रे सुस्थिरं मनः। तदा पुनः समग्रं तु धारयेद्यत्नतो बुधः। यदा तु धारणोत्साहं विना तत्राचलं मनः। तिष्ठेत्त्यक्त्वा तमुद्योगं शङ्खचक्राम्बुजाङ्किते। आरूढचेताः परमे शृङ्गाराद्येकधामनि। नैवान्यच्चिन्तयेत्तस्मात्पूर्णानन्दाच्चतुर्भुजात्। यतोऽन्यस्मरणे तस्मान्मनश्चलति सुस्थिरम्। धारणार्थप्रयत्नेन तस्मात्तदुभयं त्यजेत्। यावत्स्वारूढचेताः स्याद्विष्णो रूपे चतुर्भुज'इति ध्यानयोगे ॥

---

प्रसङ्गतः। योषित्सङ्गाद्यथा पुंसो यथा तत्सङ्गिसङ्गतः ॥ ३० ॥ प प्रणवसंयुक्तं प्राणसंयममभ्यसेत्। दशकृत्वस्त्रिषवणं मासादर्वाग्जितानिलः ॥ ३५ ॥ तत्सर्वं व्यापकं चित्तमाकृष्यैकत्रधारयेत्। नान्यानि चिन्तयेद्भूयः सुस्मितं भावयेन्मुखम् ॥ ४३ ॥ तत्र लब्धपदं चित्तमाकृ





॥ ४३ ॥ [45]परमात्मानं मां स्वदेहे पश्यन्ति। जीवं ज्योतिर्मयि संयुतं प्रपश्यन्ति। 'समाधियोगे सम्पूर्णे हृदि पश्यन्ति केशवम्। जीवं तत्प्रतिबिम्बं च तेनैव सह संस्थितम्। तदाधारं तदन्तस्थं तेनैव सदृशं तदा। आनन्दज्ञानशक्त्याद्यैः सदा तदवरं गुणैः। जीवन्मुक्तौ च मुक्तौ वा सततं तद्वशे स्थितमि'ति। 'स्वयं प्रकाशरूपत्वाज्जीवोऽपि ज्योतिरुच्यत'इति च तत्त्वप्रतिपत्तौ ॥ ४५ ॥ [46]द्रव्यज्ञानक्रियाविषये भ्रमरूपं मनो लयं याति ॥ ४६ ॥ इति एकादशतात्पर्ये चतुर्दशोऽध्यायः ॥ १४ ॥

## पञ्चदशोऽध्यायः

[3]मय्येव प्राधान्येन सन्ति अन्येषूपचारत इति मत्प्रधानाः। 'सर्वाधिका अणिमाद्या विष्णोर्नान्यस्य कस्यचित्। स्वाभाविका विरिञ्चस्य तत्प्रसादात्पराधिका'इति स्वाभाव्ये ॥ गुणभूतानामन्यासामपि सिद्धीनां ता एव हेतवः। स्वतस्तास्वेवाष्टस्वन्यासामन्तर्भावात्। 'निःसीमाष्टगुणाभावात्सिद्धयोऽष्टादश स्मृताः। देवेभ्योऽन्यत्र देवानां सिद्धयोऽष्टैव सम्मता' इति प्राकाश्ये ॥ ३ ॥ [4-5]शक्तिप्रेरणमेवेशितृत्वं असङ्ग एव वशित्वम्। 'यादृशानन्दकामः स्यात्तादृशानन्दसम्भवः। भोगान्विनैव

---

व्योम्नि धारयेत्। तच्च त्यक्त्वा मदारोहो न किञ्चिदपि चिन्तयेत् ॥४४॥ एवं समाहितमतिर्मामेवात्मानमात्मनि। विचष्टे मयि सर्वात्मन् ज्योतिर्ज्योतिषि संयुतम् ॥ ४५ ॥ ध्यानेनेत्थं सुतीव्रेण युञ्जतो योगिनो मनः। संयास्यत्याशु निर्वाणं द्रव्यज्ञानक्रियाभ्रमः ॥ ४६ ॥

## पञ्चदशोऽध्यायः

श्री भगवानुवाच—सिद्धयोऽष्टादश प्रोक्ता धारणायोगपारगैः। तासामष्टौ मत्प्रधाना ता एव गुणहेतवः ॥३॥ अणिमा महिमा मूर्तेर्लघिमा प्राप्तिरिन्द्रियैः। प्राकाश्यं श्रुतदृष्टेषु शक्तेः प्रेरणमीशिता ॥ ४ ॥ गुणेष्वसङ्गो वशिता यत्कामस्तदवाप्स्यति। एता मे सिद्धयः सौम्य अष्टा-

प्राकाम्यमणिमादेः पृथक् तत'इति च ॥ ४, ५ ॥ [6]'अनूर्मिमत्त्वं प्राकाम्येऽन्तर्भूतम् । दूरश्रवणदर्शनं त्रिकालज्ञत्वम् । परचित्ताद्यभिज्ञता च प्रकाश्यान्तर्भूतानि । मनोजव इत्यादिषट्कं प्राप्त्यन्तर्भूतम् । अन्यत्सर्वमीशत्वान्तर्भूतमपि परमेशत्वाभावे पृथगित्यष्टादश । अग्न्यर्काम्बुविषादीनामित्यादिशब्दोक्ताः । शस्त्रास्त्रनखदन्तताडनशापादिभिरप्रतिहतिः पृथगेव सिद्धिः सप्तदशी । अप्रतिहता आसमन्ताद्गतिर्यस्या आज्ञायाः साऽप्रतिहतागतिः । अद्वन्द्वमप्रतिहतं त्रिकालज्ञत्वम् । अग्न्यर्काम्बुविषाणां प्रतिस्तम्भाश्चतस्रः सिद्धयः । दूरश्रवणदर्शने द्वे सिद्धी । 'गरिम्णः सैव हेतुः स्यान्महिमा हेतुधारणा । प्रायोऽष्टसिद्धिकथनेष्वथो न पृथगुच्यत'इति च ॥ 'प्राप्तिप्राकाश्ययोश्चापि धारणैकापि सम्भवेत् । अत ऐक्येन तामुक्त्वा गरिमाणं पृथक्क्वचिदि'ति च ॥ दूरश्रवणदर्शने द्वे सिद्धी । 'मूलभूतास्तु सिद्धीनां देवानामष्टसिद्धयः । सर्वसिद्धिप्रधानास्तास्तज्ज्ञा अष्टादश स्मृताः । अष्टस्वन्तर्गतास्तास्तु तदपेक्षतयाल्पका' इति च ॥ कामरूपत्वस्याणिमादित्रयेऽप्यन्तर्भावोऽष्टसिद्धिपक्षे अग्न्यर्कस्तम्भ एकैव सिद्धिः अदाहत्वात् । अग्न्यादिप्रतिस्तम्भस्य वशित्वेऽपि । अनूर्मिमत्त्वाद्यष्टादशपृथक्सिद्धिपक्षेऽग्न्यर्कस्तम्भयोः पृथक्त्वम् । तस्मिन्पक्षे तासां सकाशात्प्रधानाष्टौ मत्प्रधाना इति व्याख्या । 'अनूर्मिमत्त्वसिद्धिस्तु प्राकाम्यान्तर्गता मता । दूरश्रुतिर्दूरदृष्टिस्त्रिकालज्ञत्वमेव च । परचित्ताद्यभिज्ञानं प्राकाश्यान्तर्गतानि च । अणिमादित्रयान्तश्च कामरूपत्वमिष्यते । अग्न्यर्काम्बुविषादीनां प्रतिस्तम्भो वशित्वतः । मनोजवः कामरूपं परकायप्रवेशनम् । स्वच्छन्दमृत्युता देवैः सह क्रीडेष्टसाधनम् । प्राप्तावन्तर्गतान्याहुराज्ञाऽप्रतिहतिस्तथा । अग्निस्तम्भो रविस्तम्भ उदकस्तम्भ एव च । विषस्तम्भस्तथा शस्त्रशापादिस्तम्भ एव च । ईशत्वान्तर्गतान्याहुरपराजय एव च । एवमष्टादशाष्टाभ्यो जायन्ते सिद्धयः

वौत्पत्तिका मताः ॥५॥ अनूर्मिमत्त्वं देहेऽस्मिन् दूरश्रवणदर्शनम् । मनोजवः



क्रमात् । अष्टादशभ्यश्चान्यास्तु जायन्ते सिद्धयोऽमिताः । अनूर्मिमत्त्वं दुःखस्याभावमात्रमुदाहृतम् । यथेष्टानन्दसम्प्राप्तिः प्राकाम्यमिति कीर्त्यते । दुःखाभावोऽपि प्राकाम्ये नेतरे सुखितेष्यते । प्राकाश्यं सर्ववेदादिज्ञानमेव विदो विदुः । सहस्रयोजनान्ते तु दूरदर्शनमिष्यते । दूरश्रवणमप्येवं तस्मिन्नेव युगे स्थिते । वेदादिकं विना प्रोक्तं त्रिकालज्ञानिता बुधैः । शरीरस्थं विना देहे परचित्ताद्यभिज्ञता । अन्येन्द्रियैर्दर्शनादि यथासङ्कल्पवेगिता । प्राप्तिरित्युच्यते सद्भिः स्वमनःसमवेगिता । मनोजव इतिप्रोक्तः पश्वाद्याकारता तथा । कामरूपत्वमुद्दिष्टं स्वदेहत्यागतः परे । परकायप्रवेशः स्याद्युगादर्वाक्तना स्मृता । स्वच्छन्दमृत्युता देवैः क्रीडा चेन्द्रादिभिर्विना । यथासङ्कल्पसिद्धिश्चाप्यन्नपानसुतादिषु । चक्षुर्दृश्येष्वणुत्वं तु अणिमा सम्प्रकीर्तिता । महिमा चापि सम्प्रोक्ता त्रिलोकान्तरपूरणा । चक्षुर्दृश्यैर्विवाह्यत्वं लघिमा चापि कीर्तिता । त्रिलोकसमभारस्तु गरिमा चापि कीर्तिता । पूर्वशक्तेः कोटिगुणशक्त्युद्रेकस्तथेशिता । भुविस्थैः प्राणिभिश्चोक्तकरणं चापि कीर्त्यते । आज्ञाऽप्रतिहतिर्ब्राह्मादर्वागस्त्रविघातनम् । विना महातपस्वींश्च शापाप्रतिहतिः स्मृता । अपराजयो मनुष्येभ्यो वशित्वं चाप्यलोलता । दाहादिसहनं चापि प्रतिस्तम्भ इतीर्यते । इति षड्विंशतिः प्रोक्ता गरिम्णा सह सप्त वा । विंशतिश्च सुरेभ्योऽन्यदेवेष्वष्टैव सिद्धयः । यतो निःसीमकास्तेषां देवानामष्टसिद्धयः । अतोऽष्टादशसिद्धीनां तदन्तर्भाव इष्यते । देवेष्विन्द्रेशवायुश्रीविष्णूनामुत्तरोत्तरम् । सिद्धयः परिपूर्णास्तु विष्णोरेकस्य नान्यगा'इत्यैश्वर्ये ॥ 'श्रुतेषु तु यथायोगं क्षिप्रग्रहणमेव तु । उक्तं प्राकाश्यमन्येषां देवानामश्रुतेष्वपि । ऋषीणां मिश्रभावेन भासते किञ्चिदश्रुतम् । विषयेभ्योऽधिकसुखव्यक्तिः प्राकाम्यमेव तु । इतरेषां सुराणां तु निःसीमानन्दभोजनम् । एवमेव तु

कामरूपं परकायप्रवेशनम् ॥ ६ ॥ स्वच्छन्दमृत्युर्देवानां सह क्रीडानु-

निःसीमा देवानामष्टसिद्धयः। उत्तरोत्तरमत्रापि यावद्विष्णुः स पूर्णभुगि'ति हरिवंशेषु ॥ 'अग्न्यादिशक्तिसंस्तम्भ अग्न्यादिस्तम्भ इष्यत' इति कौर्मे ॥ एकस्मात्सिद्धयो विष्णोः स्थानभेदात्पृथग्विधाः। एकस्थानगताद्वा स्युः सुस्थिरोपासना यदी'ति भारते ॥ ६ ॥ [10]भूतसूक्ष्माणामात्मनि परमाणुस्थितेऽणुरूपे। 'तन्मात्रावयवे सूक्ष्मे परमाण्वभिधानके। प्रत्येकमणुरूपं तु विष्णुं ध्यायन्नणुर्भवेदि'ति कापिलेये॥ 'आकाशवत्सूक्ष्मतां यो व्यापित्वेनैव मन्यते। तन्मात्रव्यापिनं विष्णुं चिन्तयन्स तथा भवेदि'ति च ॥१०॥ [11]महति व्याप्ते। महत्तत्त्वस्य पृथगुक्तेः। अस्मात्स्थूलतां प्राप्नुवानीत्यपेक्षायां तस्मात्प्राप्नोति। ततोऽन्यस्मादित्यपेक्षायां तस्मादिति पृथक्पृथक् ॥ ११ ॥ [12]परमाणुमये भूतानां सकाशादतिशयेनाणुरूपे। कालसूक्ष्माणामात्मनि ॥ १२ ॥ [13]अहंतत्त्वस्थिते मयि ॥ १३ ॥ [14]सूत्रे स्थिते मयि। गृहे पीठ इतिवत्। अव्यक्तजन्मनः अव्यक्तस्यापि किञ्चित्स्थूलत्वकर्तुः। 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तमे'ति मोक्षधर्मेषु ॥ 'अजरादमरादमूर्तितः शाश्वततमस' इति च। 'अव्यक्तस्याजन्मवतो विकारो जनिरुच्यत'इति हरिवंशेषु ॥ मे सकाशान्विन्दते। परमेष्ठिप्रसादादन्येषां भवतीति पारमेष्ठ्यम्। सर्वगुणानां ज्ञानमूलत्वादुपलक्षणत्वेन प्राकाश्यं पारमेष्ठ्यमित्युक्तम्। 'सर्वेगुणास्तु प्राणस्य परमात्मप्रसादतः। प्राण-

---

दर्शनम्। यथा सङ्कल्पसंसिद्धिराज्ञाऽप्रतिहता गतिः ॥७॥ त्रिकालज्ञत्व-मद्वन्द्वं परचित्ताद्यभिज्ञता। अग्न्यर्काम्बुविषादीनां प्रतिस्थम्भो पराजयः॥ ॥ ८ ॥ भूतसूक्ष्मात्मनि मयि तन्मात्रं धारयन्मनः। अणिमानमवाप्नोति तन्मात्रोपासको मम ।१०॥ महत्यात्मन्मयि परे यथा संस्थं मनो दधत्। महिमानमवाप्नोति भूतानां च पृथक् पृथक् ॥ ११ ॥ परमाणुमये चित्तं भूतानामपि रञ्जयन्। कालसूक्ष्मात्मके योगी लघिमानमवाप्नुयात् ॥१२॥ धारयन् मय्यहंतत्त्वे मनो वैकारिकेऽखिलम्। सर्वेन्द्रियाणामात्मत्वं प्राप्तिं प्राप्नोति मन्मनाः ॥ १३ ॥ महत्यात्मनि यः सूत्रे धारयन्मयि



विष्ण्वोः प्रसादेन भारत्याः सम्प्रकीर्तिताः। प्रसादात्तु त्रयाणां वाप्यनन्तादेः सदा गुणा'इति माहात्म्ये ॥ १४ ॥ [15]सर्वत्राधीश्वरत्वादौ विद्यमानेऽपि तत्रतत्रोक्ताधीश्वरत्वादिगुणविशिष्टत्वेन तत्रतत्रोपासनमिति विशेषः। 'तं यथायथोपासते तदेव भवती'ति च श्रुतेः। 'उपासतः सत्य इति सत्यसङ्कल्पता भवेत्। ईशत्वमीश्वर इति गुणं तं तं यथा हरिमि'ति विशेषे ॥ 'शुद्धः श्वेतः सुखी श्वेतः श्वेतवर्णः क्वचिद्भवेदि'ति शब्दनिर्णये ॥ १५ ॥ [19]आकाशस्यात्मनि तत्राकाश उपलब्धानां आसमन्तात्स्थितानां भूतानां वाचः। हंसो जीवः 'त्यागात्पूर्वशरीराणां नवानां सञ्चयेन च। जीवं हंस इति प्राहुस्तद्धेतुत्वाद्धरिं परमि'ति भारते ॥ १९ ॥ [21]मनसि मनस्तत्त्वे वायुना संयोज्य मनोऽनुदेहं मनस्तत्त्वे मद्धारणा ॥ २१ ॥ '[22]गजादिरूपमाकाङ्क्षन्गजादिस्थितमीश्वरम्। ध्यायन् गजादिरूपः [23]स्यात्परकायस्थितं हरिम्। ध्यायन्विशेत्परे काये वायावन्तर्गतः पुमान्। प्राणनामा हरिः प्रोक्तस्तस्मिन्वायुः समाश्रितः। वायावन्तर्गतो जीवो देहाद्देहं प्रयास्यति ॥ २२ ॥ '[24]षडाधारस्थितं विष्णुं ध्यायन्नायुः क्षयं विना। यदि मृत्युमभीप्सेत

---

मानसम्। प्राकाश्यं पारमेष्ठ्यं मे विन्दतेऽव्यक्तजन्मनः ॥ १४ ॥ विष्णौ त्र्यधीश्वरे चित्तं धारयन् कालविग्रहे। स ईशत्वमवाप्नोति क्षेत्रे क्षेत्रज्ञचोदनम् ॥ १५ ॥ श्वेतद्वीपपतौ चित्तं शुद्धे धर्ममये मयि। धारयन् श्वेततां याति षड्ऊर्मिरहितोऽमरः ॥१८॥ मय्याकाशात्मनि प्राणे मनसा घोषमुद्वहन्। तत्रोपलब्धा भूतानां हंसो वाचः शृणोत्यसौ ॥ १९ ॥ मनो मनसि संयोज्य देहं तदनु वायुना। मद्धारणानुभावेन तत्रात्मा यत्र वै मनः ॥ २१ ॥ यदा मन उपादाय यद्यद्रूपं बुभूषति। तत्तद्भजेन्मनो रूपं मद्योगबलमाश्रितः ॥२२॥ परकायं विशन् सिद्धमात्मानं तत्र भावयेत्। पिण्डं हित्वा विशेत्प्राणो वायुभूतः षडङ्घ्रिवत् ॥२३॥ पार्ष्ण्याऽऽपीड्य गुदं प्राणं हृदुरः कण्ठमूर्धसु। आरोप्य ब्रह्मरन्ध्रेण ब्रह्म नीत्वोत्सृजेत्तनुम् ॥२४॥ विहरिष्यन् सुराक्रीडे मत्स्थं सत्त्वं विभावयेत्। विमानेनोपतिष्ठन्ति सत्त्ववृत्तिं सुरस्त्रियः ॥ २५ ॥ यथा सङ्कल्पयेद्बुद्ध्या यथा

तथा प्राप्नोत्यसंशयम् ॥ २४ ॥ [28]त्रिकालप्रेरकं विष्णुं ध्यातुः कालत्रयज्ञता ॥२८॥ '[29]अग्न्यादिषु हरिं ध्यायन् तत्प्रतिस्तम्भको भवेदि'ति हरिसंहितायाम् ॥ २९ ॥ [23]आत्मानं परमात्मानं तत्रतत्र परकाये भावयेत् । तदा वायौ स्थितः । प्राणः परमात्मा तत्र गच्छति तमनु जीवोऽपि गच्छति । वायौ भूतो वायुभूतः ॥ २३ ॥ [24]प्राणं परे ब्रह्मणि नीत्वा । 'प्राणस्थं प्राणनामानं बहिष्ठे ब्रह्मनामके । विष्णुं विष्णावनुस्मृत्य विसृजेद्देहमञ्जसे'ति प्रभञ्जने ॥ 'अनेयस्य हरेर्नीतिस्तद्गतस्य हरेः स्मृतिः । न हि नेयः क्वचित्क्वापि केनचित्स्ववशत्वत'इति च ॥ २४ ॥ [27]मम भावना मद्भावः । 'भावो मनश्च भक्तिश्च क्वचिदभ्यास इष्यत' इति शब्दनिर्णये ॥ २७ ॥ [31]उपासनयाऽपरोक्ष्यं कृतवतः, पुनरुपासनं कार्यकाले कुर्वतः कार्यसिद्धिरित्यतो योगधारणया पुनरित्युक्तम् ॥ ३१ ॥ '[32]उपास्य वायुं प्रथमं वायौ सुष्ठ्वपरोक्षिते । अनुज्ञातस्ततस्तद्वं तत्रतत्र हरिं स्मरेत् । कृत्वापरोक्षं तं चापि कालेकाले स्मरेत्पुनः । अभीष्टकार्यसिद्धिः स्यात्तस्य नास्त्यत्र संशयः । अकामो यदि वायुं च ध्यात्वा दृष्ट्वा हरिं तथा । न किञ्चित्कामयेत्पश्चात्स क्षिप्रं मुक्तिमेष्यति ॥३२॥ '[33]यदि योगैः फलं भुङ्क्ते पुनः काममपास्य तु । तेनैव क्रमयोगेन वायुं दृष्ट्वा हरिं तथा । एष्टव्या मुक्तिपदवी नान्यथा तु कथञ्चन । पूर्वदृष्टिर्हि कामार्थे पश्चान्मोक्षार्थमिष्यते । येषां तु

---

वा मत्परः पुमान् । मयि सत्ये मनो युञ्जंस्तथा तत्समुपाश्नुते ॥ २६ ॥ यो वै मद्भावमापन्न ईशितुर्वशितुः पुमान् । कुतश्चिन्न विहन्येत तस्य चाज्ञा यथा मम ॥ २७ ॥ मद्भक्त्या शुद्धसत्वस्य योगिनो धारणाविदः । तस्य त्रैकालिकी बुद्धिर्जन्ममृत्यूपबृंहिता ॥ २८ ॥ अग्न्यादिभिर्न हन्येत मुनेर्योगमयं वपुः । मद्योगश्रान्तचित्तस्य यादसामुदकैर्यथा ॥ २९ ॥ उपासकस्य मामेवं योगधारणया पुनः । सिद्धयः पूर्वकथिता उपतिष्ठन्त्यशेषतः ॥३१॥ जितेन्द्रियस्य दान्तस्य जितश्वासात्मनो मुनेः । मद्धारणां धारयतः का नु सिद्धिः सुदुर्लभा ॥ ३२ ॥ अन्तरायान्वदन्त्येतान्युञ्जतो



जन्मतः सिद्धिस्तेषां दोषो न विद्यत'इति निवृत्ते ॥ ३३ ॥ [34]यैर्यैः कैश्चित्कैश्चिदेव जन्मादिभिः योगगतिं व्रजेत् । 'जन्मादिभिः कैश्चिदेव प्राप्यते योगजं फलम् । योगेन सर्वं प्राप्येत योगे यत्नं ततः कुर्वि'ति च ॥ 'कश्चिदर्थे च यच्छब्दः प्रश्नार्थे च क्वचिद्भवेत् । क्वचित्परामर्शवाची क्वचिदाक्षेपवाचक'इति तन्त्रनिरुक्ते ॥ ३४ ॥ इति एकादशतात्पर्ये पञ्चदशोऽध्यायः ॥ १५ ॥

## षोडशोऽध्यायः

'[9]सृष्टिस्थित्यादिहेतुत्वाद्भूतानि हरिरुच्यते । न तु भूतस्वरूपत्वात्स हि सर्वेश्वरेश्वर'इति वस्तुतत्त्वे ॥ ९ ॥ [10-11]स्वस्वजात्युत्तमत्वं तु भवेद्यद्रूपसन्निधेः । विभूतिरूपं तत्प्रोक्तमिन्दिरादिषु संस्थितम् । तथा बहिःस्थितं रूपं विभूतीत्येव शब्दितम् । सर्वसाधारणं रूपमन्तर्यामीति चोच्यते । यथा कृष्णात्मना दुष्टहन्ता व्यासात्मना समः । असमोऽप्येकरूपोऽपि सामर्थ्यात्पुरुषोत्तम'इति च ॥ ब्रह्मरुद्रेन्द्रजीवेभ्यः पृथगेव व्यवस्थितम् । विभूतिरूपं विष्णोस्तु तद्गश्रेष्ठ्यैककारणम् ।

---

योगमुत्तमम् । मया सम्पद्यमानस्य कालक्षपणहेतवः ॥३३॥ जन्मौषधितपोमन्त्रैर्यावतीरिह सिद्धयः । योगेनाप्नोति ताः सर्वा यैर्यैर्योगगतिं व्रजेत् । सर्वासामपि सिद्धीनां हेतुः पतिरहं प्रभुः ॥ ३४ ॥

### षोडशोऽध्यायः

याः काश्च भूमौ दिवि वै रसायां विभूतयो दिक्षु महाविभूतेः । ता मह्यमाख्याह्यनुभावितास्ते नमामि ते तीर्थपदाङ्घ्रिपद्मम् ॥ ५ ॥ श्री भगवानुवाच—एवमेतदहं पृष्टः प्रश्नं प्रश्नविदां वर । युयुत्सुना विशसने सपत्नैरर्जुनेन वै ॥ ६ ॥ ज्ञात्वा ज्ञातिवधं गर्ह्यमधर्मं राज्यहेतुकम् । ततो निवृत्तो हन्ताऽहं हतोऽयमिति लौकिकः ॥७॥ स तदा पुरुषव्याघ्रो युक्त्या मे प्रतिबोधितः । अभ्यभाषत मामेवं यथा त्वं रणमूर्धनि ॥ ८ ॥ अहमात्मोद्धवामीषां भूतानां सुहृदीश्वरः । अहं सर्वाणि भूतानि तेषां स्थित्युद्भवाप्ययः ॥ ९ ॥ अहं गतिर्गतिमतां कालः कलयतामहम् ।

तदेव ब्रह्मरुद्रादिनामभिर्वाच्यमञ्जसा । तदेव देवेष्विन्द्रोऽस्मि तथा रुद्रेषु शङ्करः । इत्यादिनोक्तं कृष्णेन नेन्द्राद्या जीवसञ्ज्ञया'इति गीताकल्पे ॥ गतिर्ज्ञानम् । 'प्रधानो ज्ञानिनां ब्रह्मा ज्ञानमानी हृदिस्थितः । स एव कालमानी तु संहर्तॄणां प्रभुः स्मृत'इति विभूतौ ॥ 'आनन्दानुभवस्तूम उत्कृष्टानुभवात्स्मृतः । तद्युक्तत्वं यथा सौम्यं गुणानामधिकं हि तत् । भक्त्यादिगुणपूर्णोऽपि दुःखहेतुत्वभावनात् । निष्फलो भवति ह्यद्धा प्रीतस्य सफलो भवेत् । तस्मादानन्दमानं तु गुणेषूत्कृष्टमुच्यते । तस्याभिमानी ब्रह्मैको भक्तिज्ञानादिकस्य च । श्रद्धाभिमानिनी देवी तथैव तु सरस्वती । तदन्येषां गुणानां तु तदन्ये विबुधाः स्मृताः । गुणानां तु प्रभुर्ब्रह्मा तस्मादेकश्चतुर्मुखः । औत्पत्तिकगुणो नाम शुभप्राप्त्यैकयोग्यता । तस्याभिमानी प्राणस्तु स हि सर्वगुणाधिक'इति च । गुणिनां मध्ये गुणिनि स्थितमौत्पत्तिकगुणरूपं सूत्रमित्यर्थः । 'गुणिनां गुणयोग्यत्वं यत्सर्वगुणिषु स्थितम् । वायुस्तदभिमान्येकः सर्वगुण्यधिकस्तत' इति प्रभञ्जने । रूपान्तरत्वादेकस्यापि बहुस्थानेषु प्राधान्योक्तिर्नो विरुध्यते । गुणान्तरोक्तेश्च 'रामः शस्त्रभृतां वृष्णीनां वासुदेव' इत्यादिवत् ॥ १०, ११ ॥ [12]पदानि वाच्यानि छन्दसाम् । 'स्वयूथानामथाधिक्ये स्वजातीनामथापि वा । यत्कारणं विभूत्याख्यं विष्णोस्तद्रूपमुच्यत'इति प्राधान्ये ॥ वर्णेशानि पदान्याहुः पादाश्चापि तदीश्वराः । पादानामीश्वरार्धर्चा तदीशा ऋच एव च । ऋचामधीशा वर्गाश्च तेषां सूक्तमधीश्वरम् । सूक्ताधीशास्तथाध्यायास्तदधीशास्तथाष्टकाः । तदधीशास्तथा शाखा वेदाश्चापि तदीश्वराः । वेदानामीश्वरा वाच्या वाच्यानामीश्वरो हरिः । न हरेरीश्वरः कश्चित्कदाचित्क्वापि विद्यत'इति च ॥

गुणानां चाप्यहं सौम्यं गुणिन्यौत्पत्तिको गुणः ॥ १० ॥ गुणिनामप्यहं सूत्रं महतां च महानहम् । सूक्ष्माणामप्यहं जीवो दुर्जयानामहं मनः ॥११॥ हिरण्यगर्भो देवानां मन्त्राणां प्रणवस्त्रिवृत् । अक्षराणामकारोऽस्मि पदानि





पद्यन्त इति पदानि वाच्यानि । 'पदं पदसहस्रेण यश्चरन्नापराध्यत' इतिवत् । 'पदं तु वाचकं प्रोक्तं क्वचिद्वाच्यमपीष्यत' इति शब्दनिर्णये ॥ १२ ॥ '[13]सर्ववेदाभिमानिन्यो देव्यो लक्ष्मीस्ततोऽधिका । वेदाभिमानिनी साक्षात्सा विष्णोर्दूरतः स्थिता । यज्ञाख्या सैव विष्णोस्तु या तूरःस्थलमाश्रिता । हरिणा रतियोगस्था दक्षिणाख्यापि सैव तु । उत्तरोत्तरतः साऽपि विशिष्टा दक्षिणा सुखे । एवं वेदाभिमानिभ्यो देवीभ्यः सर्व एव तु । तदर्थरूपाः पतयस्तस्यास्तस्यास्तथोत्तमाः । शच्या इन्द्रस्ततश्चोमा तस्या रुद्रस्ततस्तथा । भारती प्राण एवास्यास्ततः श्रीस्तद्वरो हरिरि'ति वैशिष्ये ॥ 'ऋते रुद्रादिकानिन्द्रः सर्वदेवाधिकः स्मृतः । ऋते भीमं फाल्गुनश्च पाण्डवेभ्यो वरस्तथा । तथा शुक्रः कवीशस्तु बृहस्पत्यादिकानृते । यमः संयमतामीशः शङ्करादीन्विनैव त्वि'ति गीताकल्पे ॥ १३ ॥ '[19]गार्हस्थ्यं च यतित्वं च देवेष्वेकत्वमागतम् । प्राधान्योक्तिर्यतित्वस्य गार्हस्थ्यस्य क्वचित्क्वचिदि'त्याश्रमविवेके ॥१९॥ '[22]वसिष्ठोऽभ्यधिकस्तेषु मानुषाणां पुरोधसामि'ति त्रैकाल्ये ॥ २२ ॥ [24]जीवेशादिभेदवादी विकल्पः । ख्यातिवादिनां ज्ञानवादिनाम् । 'जीवेशादिविशेषं यो याथार्थ्येन प्रकल्पयेत् । कलिमारभ्य वा विष्णोराधिक्यादुत्तरोत्तरम् । नियमेनैव केनापि न हेयं स विकल्पकः । सर्वज्ञानिविशेषेभ्यः स ज्ञानी सर्वथाऽधिक'इति विज्ञाने ॥ 'भेददृष्ट्याभिमानेने'त्युक्तम् । 'विद्यात्मनि भिदा बोध'इति च वक्ष्यति ॥ २४ ॥ '[25]शतरूपा वरा स्त्रीणां पुंसा-

छन्दसामहम् ॥ १२ ॥ इन्द्रोऽहं सर्वदेवानां वसूनामस्मि हव्यवाट् । आदित्यानामहं विष्णू रुद्राणां नीललोहितः ॥१३॥ नागेन्द्राणामनन्तोऽहं मृगेन्द्रः शृङ्गिदंष्ट्रिणाम् । आश्रमाणामहं तुर्यो वर्णानां प्रथमोऽनघ ॥१९॥ पुरोधसां वसिष्ठोऽहं ब्रह्मिष्ठानां बृहस्पतिः । स्कन्दोऽहं सर्वसेनान्यामग्रण्यां भगवानजः॥२२॥ योगानामात्मसंरोधो मन्त्रोऽस्मि विजिगीषताम् । आन्वीक्षिकी कौशलानां विकल्पः ख्यातिवादिनाम् ॥ २४ ॥ स्त्रीणां तु

मभ्यधिको मनुः। तयोरप्यधिकौ नित्यमिन्द्राणीन्द्रौ शुभैर्गुणैरि'ति वैशेष्ये ॥ २५ ॥ ‘[29]ऐश्वर्यादिगुणैः षड्भिः सामग्र्यात्सर्वदेवताः। भगवच्छब्दवाच्याश्च साक्षात्तु भगवान्हरिः। निरपेक्षं तु सामग्र्यं तस्य सर्वाधिकं यत'इति च। अतो भगवतां देवानाम्। ‘सर्वभागवताधीश उद्धवो भगवत्प्रियः। तस्मादभ्यधिको जिष्णुः प्रियत्वे भक्तितो हरेः। तस्मादभ्यधिको रामः कृष्णा त्वभ्यधिका ततः। तस्या अभ्यधिको भीमो न तु तत्सदृशः क्वचिदि'ति च। ‘यत्किञ्चात्मनि कल्याणं सम्भावयसि पाण्डव। सहस्रगुणमप्येतत्त्वयि सम्भावयाम्यहम्। धर्मो ज्ञानं तथा मोक्षो यशः कीर्तिस्तथैव च। त्वय्यायत्तमिदं सर्वं लोकस्यापि न संशय'इति भारते ॥ २९ ॥ ‘[32]विष्णोः श्रियो ब्रह्मणश्च वायोः सङ्कर्षणस्य च। सुपर्णस्य च सम्प्रोक्ताः प्रत्येकं नवमूर्तयः। पूज्याः सात्वततन्त्रेषु तत्राद्या मूर्तयो हरेः। प्रधानास्ता हि सर्वासां मूर्तीनां हरिमूर्तयः। अभेदादेव मूर्तीनामेकमूर्तिश्च सा स्मृते'ति सहस्रावरणे। श्रियादिनवमूर्तीनां मध्ये स्वकीयनवमूर्तिरहमित्यर्थः। ‘स्वरूपतश्च गुणतो न विशेषः कथञ्चन। विष्णोस्तु नवमूर्तीनां पूज्या च नवधेष्यत'इति च। अतो स्वनवमूर्तीनामन्येभ्योऽन्यनवमूर्तीनामपि प्राधान्यकारणं सन्निधानमात्मनस्तास्वप्यस्तीति पुरेतिविशेषणम्। प्रथमपूज्यास्ता इत्यर्थः। ‘नारायणः परं ब्रह्म वासुदेवादिकास्तथा। नरसिंहवराहौ च परञ्ज्योतिर्हरेर्नव। इन्दिरा च रमा लक्ष्मीर्हिरण्या गगना तथा। रक्ता रक्ततरा भूतिर्विभूतिश्च श्रियो नव। ब्रह्मा चतुर्मुखो धाता विधाता विधिरेव च। कर्ता विरिञ्चो भूतेशः शतानन्दश्च ता नव। धनञ्जयमृते चैव वायोस्तु नवमूर्तयः। शेषोऽनन्तो नरश्चैव लक्ष्मणो

शतरूपाऽहं पुंसां स्वायम्भुवो मनुः। नारायणो मुनीनां च कुमारो ब्रह्मचारिणाम् ॥ २५ ॥ वासुदेवो भगवतां त्वं तु भागवतेष्वहम्। किं पुरुषाणां च हनूमान्विद्याध्राणां सुदर्शनः ॥ २९ ॥ ओजः सहो बलवतां



बल एव च। सङ्कर्षणो नीलवासा जगद्रक्षो जलेशयः। सुपर्णो गरुडश्चैव वैनतेयो महाशनः। नववर्णः पञ्चवर्णः पन्नगाशोऽमृताकरः। तथैव सर्ववेदात्मा सुपर्णो नवधा स्मृत'इति च ॥ ३२ ॥ ‘[37]यस्य यस्य स्वभावो यस्तत्तन्नामा हरिः परः। नियामकः स्वभावस्य तत्तच्छब्दादिनामवान्। वैशेष्याख्या विभूतिश्च विभूतिश्च स्वभावजा। द्विधा विभूतिर्विज्ञेया विष्णोस्तु परमात्मन'इति च ॥ ‘सत्वादिनाम विष्णोस्तु सत्वादिस्थस्य केवलम्। जीवस्थस्य च तन्नाम जीवादेरुपचारत'इति च ॥३७॥ [39]कालेन सर्वगुणात्मकेन मया असङ्ख्यत्वात्तथा न क्रियते। नाविज्ञानात्। ‘अनन्तमिति वेत्तीशस्त्वनन्तं त्वन्तवत्तथा। अनन्तस्य हि सङ्ख्याने न तु सर्वज्ञता भवेत्। अनन्तमपि वेत्तीशः प्रत्येकं च विशेषतः। सर्वज्ञत्वान्न सङ्ख्यानमसङ्ख्यस्य कुतो हि से'ति च ॥३९॥ [41]यथा वाचाऽभिधीयते। नामादिकं जीवादीनां ते सर्वे शब्दामनोविकाराः ॥४१॥ [42]स्वतो मय्येव सर्वशब्दास्तस्मान्मय्येव वाचं यच्छ। आत्मानं परमात्मानं मय्येव लक्ष्यत्वेन यच्छ ॥ ४२ ॥ [43]यो मयि न संयच्छति। तस्य ज्ञानं स्रवति ॥ ४३ ॥ [44]वाङ्मनः प्राणबुद्ध्यादीन्नियच्छेत्केशवे परे। सर्वशब्दाभिधेयत्वं तस्य ज्ञात्वा विशेषतः।

कर्माहं विद्धि सात्वताम्। सात्वतां नवमूर्तीनामादिमूर्तिरहं पुरा ॥३२॥ विश्वावसुः पूर्वचित्तिर्गन्धर्वाप्सरसामहम्। भूधराणामहं स्थैर्यं गन्धमात्रमहं भुवः ॥३३॥ पृथिवी वायुराकाश आपो ज्योतिरहं महान्। विकारः पुरुषोऽव्यक्तं रजः सत्वं तमः परः। अहमेतत्प्रसङ्ख्यानं ज्ञानं तत्वविनिश्चयम् ॥ ३७ ॥ सङ्ख्यानं परमाणूनां कालेन क्रियते मया। न तथा मे विभूतीनां सृजतोऽण्डानि कोटिशः ॥३९॥ एतास्ते कीर्तिताः सर्वाः सङ्क्षेपेण विभूतयः। मनोविकारा एवैते तथा वाचाऽभिधीयते ॥४१॥ वाचं यच्छ मनो यच्छ प्राणं यच्छेन्द्रियाणि च। आत्मानमात्मना यच्छ न भूयः कल्पसेऽध्वने ॥४२॥ यो वै वाङ्मनसी सम्यक् न संयच्छेद्धिया यतिः। तस्य व्रतं तपो ज्ञानं स्रवत्यामघटाम्बुवत् ॥४३॥ तस्माद्वचो

मुख्यवृत्त्याऽभिधेयत्वमन्येषां मनसो भ्रमात् । तस्मात्तथा चिन्तयतः स्ववेज्ज्ञानं यथातथम् । तस्मान्मनो वचः प्राणान्माधवैकपरायणान् । कुर्यात्तद्धि तपो ग्राह्यं महाधर्मोत्तमश्च स'इति धर्मविवेके ॥ 'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि । ज्ञानमात्मनि महति नियच्छेच्छान्त आत्मनी'ति च ॥ ४४ ॥ इति एकादशतात्पर्ये षोडशोऽध्यायः ॥ १६ ॥

## सप्तदशोऽध्यायः

'[5]विना प्रसादं विष्णोर्न धर्मं ब्रह्माभिवक्ष्यति । तत्प्रसादेन वक्तुं तु ब्रह्मा शक्ष्यति नापर'इति प्राधान्ये । कलाः प्राणाद्याः । 'स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुं ज्योतिरापःपृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोकेषु नाम च ता इमाः षोडशकलाः पुरुषायणा' इतिश्रुतेः ॥ '[50]प्रतिमावद्धरेरूपं तिर्यङ्नरसुरादयः । साक्षाद्रूपाणि मत्स्यादीन्यभिन्नान्येव सर्वदे'ति च ॥ ५ ॥ इति एकादशतात्पर्ये सप्तदशोऽध्यायः ॥ १७ ॥

## अष्टादशोऽध्यायः

'[14]असम्पूज्य न्यसिष्णूंस्तु देवा वै पातयन्त्यधः । सुसम्पूज्य न्यसिष्णूंस्तु देवा एवानुजानते । अथवा तद्यशोवृद्ध्यै विघ्नन्तीव पुनः-

मनः प्राणान् नियच्छेत् मत्परायणः । मद्भक्तियुक्तया बुद्ध्या तत परिसमाप्यते ॥ ४४ ॥

सप्तदशोऽध्यायः

वक्ता कर्ताऽविता नान्यो धर्मस्याच्युत ते भुवि । सभायामपि वैरिञ्च्यां यत्र मूर्तिधराः कलाः ॥ ५ ॥

अष्टादशोऽध्यायः

विप्रस्य वै संन्यसतो देवा दारादिरूपिणः । विघ्नं कुर्वन्त्ययं



पुनः । तात्पर्याद्विघ्नितो देवैर्नोत्थातुं शक्नुयात्कचिदि'ति देवहार्दे ॥ ॥१४॥ '[27]त्रिगुणा प्रकृतिर्माया तज्जत्वाद्विश्वमीदृशम् । अनाद्यनन्तकालेषु मायेत्याहुर्विपश्चितः । अचेतनत्वान्नैवैतत्प्रयोजकतया स्मरेत् । चेतनत्वं स्वतन्त्रत्वं स चैको विष्णुरेव तु । आयस्तु फलमुद्दिष्टं प्रोक्तं मायेति निष्फलम् । फलाल्पत्वात्तु मायैषा सम्प्रोक्ता त्रिगुणादिका । महाफलप्रदत्वात्तु विष्णुराय इतीरित'इति निवृत्ते ॥ २७ ॥ '[30]वेदेन सह वादो यो वेदवाद इतीरितः । तर्केण वेदस्यान्यार्थकल्पनं तं विदो विदुः । तन्न कुर्यात्कदाचिच्च तत्कुर्वन्वेदहा भवेदि'ति च । 'योगसाङ्ख्यकणादाक्षपादा वै हेतुवादिनः । पश्वीशशाक्तबुद्धाद्या पाषण्डा इति कीर्तिता'इति च ॥ ३० ॥ '[33]भूतानामेक एवात्ताऽथैको भूतेषु सन्ततः । एको भूतानि चादत्ते तस्मादेकात्मकानि त्वि'ति भद्रमाने ॥ 'घटादिषु महाकाशो निर्विशेषश्च सन्ततः । घटावयवरूपस्तु तथैवान्यो घटानुगः । घटनाशेऽप्यनाशः सन्मध्यमाकाश इष्यते । एकदेशाभिमानित्वादित्याकाशास्त्रयः स्मृताः । महाकाशो विघ्नराजो विघ्नास्तत्र तु मध्यमाः । क्षुद्रविघ्नास्तदितर एवमात्मा त्रिधा स्मृतः । महाखवत्परस्त्वात्मा जीवा मध्यखवत्स्मृताः । घटानुगखवत्प्रोक्ता असुरा नित्यदुःखिनः । महाकाशवशाः सर्वे आकाशा इतरे स्मृताः । परमात्मवशे तद्वज्जीवाः सर्वेऽपि संस्थिताः । एवं विष्ण्वात्मकमिदं जगत्पश्येद्यतिः सदे'ति विनिर्णये ॥ ३३ ॥ '[37]स्वभावतो धर्मपरो न विधेश्चकितश्चरेत् । अल्पं फलं च चकिते स्वभावे फलमुत्तममि'ति च ॥ ३७ ॥

यस्मानाक्रम्य समियात्परम् ॥ १४ ॥ यदेतदात्मनि जगन्मनोवाक्प्राणसम्भृतम् । सर्वं मायेति तर्केण स्वस्थस्त्यक्त्वा न तत्स्मरेत् ॥ २७ ॥ वेदवादरतो न स्यान्न पाखण्डी न हैतुकी । शुष्कवादविवादेन कञ्चित्पक्षं न संश्रयेत् ॥ ३० ॥ एक एव परो ह्यात्मा भूतेष्वात्मन्यवस्थितः । खं यद्वदुपपात्रेषु भूतान्येकात्मकानि च ॥ ३३ ॥ शौचमाचमनं स्नानं न तु चोदनया चरेत् । अन्यांश्च नियमान् ज्ञानी यथाऽहं लीलयेश्वरः ॥ ३७ ॥

(विधि)[38]विरुद्धत्वेन कल्पनं विकल्पः । 'निषिद्धं मनसा कल्प्य भीतो विहितमाचरेत् । अज्ञो ज्ञस्य तु सङ्कल्पः स्वभावाद्विहितानुगः । शरीरधर्मिणः क्वापि निषिद्धेऽपि मनो व्रजेत् । तथापि तस्य नानर्थो मोक्षे चैवान्यथा व्रजेदि'ति धर्मतत्त्वे ॥ ३८ ॥ '[40]शुश्रूषेत्सहितस्तावद्यावज्ज्ञानोदयो गुरुम् । ततः परं च शुश्रूषेद्यथा तस्य प्रियं भवेदि'ति च ॥ ४० ॥ इति एकादशतात्पर्ये अष्टादशोऽध्यायः ॥ १८ ॥

## एकोनविंशोऽध्यायः

'[1]त्रिगुणा प्रकृतिर्माया पश्येत्तन्मात्रकं जगत् । निर्मिमीते जगत्सर्वमतो मायेति सा स्मृते'ति प्रभवे ॥ 'इदं ज्ञानं हरेः पूजा हरेरेवोदितं सदा । हर्यधीनं च सर्वत्रेत्येवं न्यासो हरौ स्मृत'इति च ॥१॥ '[7]अन्यस्थं निर्मितं जीवे जन्मादि हरिणा यतः । तस्मान्मायेति तत्प्राहुर्माया निर्माणमुच्यते । न हि जीवस्य जन्मादि स्वतो नित्यस्य सम्भवेत् । सृष्टेः प्राक् प्रलये चैव यतो जन्मादि नास्य हि । तस्मान्मध्येऽपि नास्यास्ति देहादिस्थं तु विष्णुना । कर्मभिर्निर्मितं जीवे प्रलये यन्न जीवगम् । यन्न विद्येत हि लये यन्न विद्येत मुक्तिगे । जीवस्य न स्वभावोऽसौ प्रायेणेतिविनिश्चित' इति प्राकाशिकायाम् ॥ 'मायेत्युक्तं निर्मितं तु यतो जन्मादि निर्मितम् । देहादिगं परेशेन माया जन्मादि तेन त्वि'ति प्रकृते ॥ मां प्रति वद । तस्य देहादेर्जन्मादयोऽस्य चिदानन्दरूपस्य तव स्युः किम् । अस्वतन्त्रत्वादवस्तुनो जगतः आद्यन्तयोः यज्जीवस्यास्ति तदेतस्य स्वाभाविकम् । संसारेऽपि अन्यदभिमाननिमित्तं प्रलये विद्यमानस्य कथं जन्मादि स्यादितिभावः ॥ तदा नाशाद्देहादेस्तु युज्यते । मुक्तिगमेव जीवस्य स्वाभाविकम् । किमु लयेऽप्यविद्यमानं स्वतः स्यादित्यर्थः । 'आद्यन्तयोरनुगमादाद्यन्तरहितस्य तु । आद्यन्ते भाविनो मध्ये कथमन्यादृशं वपुरि'ति ब्रह्मतर्के ॥ 'अनित्यत्वात्तु देहस्य तस्य जन्मादिकं भवेत् । मुक्तिप्रलयसम्बन्धे कथं जीवे तदिष्यत'इति च ॥ 'अनित्यस्य गुणा मध्ये भवेयुः स्वत एव तु । न तु स्वतस्तु नित्यस्य कादाचित्कगुणैर्युति'रिति च ॥ ७ ॥ [15]एतदेव च विज्ञानं तथापि न तथैव ॥ १५ ॥ '[14]ज्ञात्वा तत्त्वानि तेष्वीशं सर्वतत्त्वेश्वरं प्रभुम् । जानञ्ज्ञानी भवेत्स्वस्य योग्यं ज्ञानं विशेषतः । पूर्वोक्त एव यो जानन्स विज्ञानी भवत्युते'ति प्रभासे ॥ ॥ १४ ॥ [16]नः तत्त्वानां मध्ये येन यद्यत्र स्थित्वा च स्युः । तदेव सत् । 'सत्वं स्वातन्त्र्यमुद्दिष्टं तच्च कृष्णे न चापरे । अस्वातन्त्र्यान्न चान्येषामसत्वं विद्धि भारते'ति भारते ॥ १६ ॥ [17]विकल्पाद्विरुद्धकल्पनात् ॥ १७ ॥ '[27]एकः प्रधानमुद्दिष्टो विष्णोः प्राधान्यदर्शनम् । ऐकात्म्यदर्शनं प्रोक्तं सर्वज्ञानोत्तमं च तदि'ति त्रैकाल्ये ॥ २७ ॥

---

न हि तस्य विकल्पाख्या क्रिया मद्वीक्षया हता । आदेहान्तं क्वचित्ख्यातिस्ततः सम्पद्यते मया ॥ ३८ ॥ दुःखोदर्केषु कामेषु जातनिर्वेद आत्मवान् । अजिज्ञासितमद्धर्मो गुरुं मुनिमुपाव्रजेत् ॥ ३९ ॥ तावत्परिचरेद्भक्तः श्रद्धावाननसूयकः । यावद्ब्रह्म विजानीयान्मामेव गुरुमादृतः ॥ ४० ॥

## एकोनविंशोऽध्यायः

श्री भगवानुवाच—यो विद्याश्रुतसम्पन्न आत्मवान्नानुमानिकः । मायामात्रमिदं ज्ञात्वा ज्ञानं च मयि संन्यसेत् ॥ १ ॥ त्वय्युद्धवाश्रयति यस्त्रिविधो विकारो मायान्तराऽऽपतति नाद्यपवर्गयोर्यः । जन्मादयोऽस्य यद् मां तव तस्य किं स्युराद्यन्तयोर्यदसतोऽस्ति तदेव मध्ये ॥ ७ ॥ न यैकादशपञ्चत्रीन् भावान्भूतेषु येन वै । ईक्षेताथैकमप्येषु तज्ज्ञानं मम निश्चितम् ॥१४॥ एतदेव हि विज्ञानं न तथैकेन येन यत् । स्थित्युत्पत्त्यप्यया न स्युर्भावानां त्रिगुणात्मनाम् ॥ १५ ॥ आदावन्ते च मध्ये च यज्ञं सृज्यं यदन्वयात् । पुनस्तत्प्रतिसङ्क्रामे यच्छिष्येत तदेव सत् ॥ १६ ॥ श्रुतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम् । प्रमाणेष्वनवस्थानाद्विकल्पात्स विरज्यते ॥ १७ ॥ धर्मो मद्भक्तिकृत्प्रोक्तो ज्ञानं चैकात्म्यदर्शनम् । गुणेष्वसङ्गो वैराग्यमैश्वर्यं चाणिमादयः ॥ २७ ॥ दरिद्रो यस्त्वसन्तुष्टः

'[45]विषये दोषबुद्धिःसन्निन्द्रियाणां वशे स्थितः ॥ कृपणः स तु सम्प्रोक्तो गुणबुद्धिर्विपर्यय'इति विवेके ॥ 'पुरुषार्थमतिर्यस्य विषयेष्वेव देहिनः । विपरीतः स विज्ञेयः स्वात्मनो विपरीतत'इति निवृत्ते ॥ वित्तासन्तोषमात्राद्दरिद्रः । सर्वविषयसङ्गी विपरीतः ॥ ४५ ॥ इति एकादशतात्पर्ये एकोनविंशोऽध्यायः ॥ १९ ॥

## विंशोऽध्यायः

'[5]स्वतः सर्वगुणात्मा तु विष्णुरेकः सनातनः । अन्यत्सर्वं तत्प्रियत्वाद्गुणो दोषस्तथाऽप्रियम् । एवं ज्ञानवतां दृष्टिरज्ञः सन्नावगच्छति । कालदेशविशेषेषु प्रीतिभेदमवेक्ष्य तु । अविज्ञानवतस्तस्य मर्यादा वेदतः कृता । गुणदोषभिदा नास्ति भगवत्प्रियमन्तरा । गुणदोषदृशेर्दोषो ह्यन्यत्र भगवत्प्रियात् । गुणा यद्दोषतामीयुर्दोषाश्च गुणतां क्वचित् । अतो दोषो न दोषः स्यादगुणोऽपि गुणो भवेत् । भगवत्प्रीतिविज्ञानाद्गुणदोषभिदां यदि । पश्येत्तत्तु गुणायैव विपर्यासं न कारयेत् । गुणदोषभिदा क्वापि स्वातन्त्र्येण न हि क्वचिदि'ति ब्रह्मनये ॥ स्वतस्तु गुणदोषत्वदृशेर्भेदेन वस्तुनाम् । दोषोऽथ गुण एव स्याद्भगवत्प्रीतितो गुणः । दोषस्तु तद्वैपरीत्यादितिदृष्ट्या भवेद्गुणः । कालदेशविशेषेण प्रीत्यज्ञानाज्जगत्स्थितेः । मर्यादा गुणदोषाणां कृता वेदेषु सर्वदे'ति परायणे ॥ एतदेवोच्यते । 'स्वेस्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः । विपर्ययस्तु दोषः स्यादुभयोरेष निर्णय'इति

---

कृपणो योऽजितेन्द्रियः । गुणेष्वसक्तधीरीशो गुणसङ्गी विपर्ययः ॥४५॥ एते उद्धव ते प्रश्नाः सर्वे साधु निरूपिताः । किं वर्णितेन बहुना लक्षणं गुणदोषयोः ॥ ४६ ॥ गुणदोषदृशिर्दोषो गुणस्तूभयवर्जनम् ॥ ४७ ॥

विंशोऽध्यायः

गुणदोषभिदादृष्टिर्नियमात्तेन हि स्वतः । नियमेनापवादश्च भिदाया इति हि भ्रमः ॥ ५ ॥ श्रीभगवानुवाच—योगास्त्रयो मया प्रोक्ता नृणां



च ॥ ५ ॥ '[67]सनकाद्या ज्ञानयोगा भक्तियोगास्तु देवताः । मानुषाः कर्मयोगास्तु त्रिधैवैते योगिनः स्मृताः । सर्वेषां सर्वयोगैश्च प्राप्या मुक्तिर्न संशयः । तथापि तु विशेषेण स स तेषां विधीयते ॥ ७ ॥ '[8]भगवद्गुणानुसारेण वेदार्थो नीयते हि यैः । भक्तियोगास्तु ते प्रोक्तास्तादृशा हि सुराः सदा । अङ्गानुसारि वेदार्थं ज्ञात्वा तदनुसारतः । भगवद्गुणा यैर्नीयन्ते ते प्रोक्ता ज्ञानयोगिनः । कर्माणि शास्त्रतो ज्ञात्वा तत्प्राधान्यानुसारतः । विज्ञाता यैर्गुणा विष्णोर्ज्ञेयास्ते कर्मयोगिनः । भक्तिर्ज्ञानं च किञ्चित्तु पश्चात्तेष्वपि जायते । तथापि ते कर्मयोगाः कर्मपूर्वत्वकारणात् । भगवद्गुणानुरागित्वमधिकं भक्तियोगिनाम् । तस्मात्तेऽभ्यधिका ह्येषु देवा एव विशेषतः । ईषद्वैराग्यमल्पं तु पूर्वं देवेषु जायते । पश्चाद्विरागोऽभ्यधिको देवानां नात्र संशयः । ज्ञानाधिक्यं तु देवानां भक्त्याधिक्यं तथैव च । विरागोऽभ्यधिकस्तेषां सदैव सनकादिनाम् । ज्ञानाधिक्यान्मनुष्येभ्यो भण्यन्ते ज्ञानयोगिनः । न तु ज्ञानाधिकास्ते वै देवेभ्यस्तु कथञ्चन । देवानामपि कर्मित्वं विद्यते यद्यपि स्फुटम् । तथापि प्रत्यवायित्वान्मनुष्याः कर्मयोगिनः । त्रियोगाभ्यधिको ब्रह्मा सर्वेभ्यः परमो विभुः । महायोगेश्वरेशेशस्तस्माद्ब्रह्मा चतुर्मुख'इति त्रियोगे ॥८॥ [17]मार्गणवच्छरीरान्ते पतति ॥ ॥ १७ ॥ [27]स्वतोऽशुद्धानां कर्मणाम् । अनेन गुणदोषविधानेन नियमःकृतः । स्वतोऽशुद्धत्वेऽपि कर्मणां विध्यनुसारेणानुष्ठाने गुणत्व-

---

श्रेयो विधित्सया । ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ॥ ॥६॥ निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु । तेष्वनिर्विण्णचित्तानां कर्मयोगस्तु कर्मिणाम् ॥७॥ यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् । न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ॥८॥ नृदेहमासाद्य सुदुर्लभं यः प्लवं सुकल्पं गुरुकर्णधारम् । मयाऽनुकूलेन नभस्वतेरितः पुमान्भवाब्धिं न तरेत्समार्गणः ॥ १७ ॥ कर्मणां जात्यशुद्धानामनेन नियमः कृतः । गुणदोषविधानेन त्वंहसां त्याजनेच्छया ॥ २७ ॥

मेवेत्यर्थः ॥ २७ ॥ [31]हृदयग्रन्थिः अन्तःकरणाख्यो बन्धः ॥ ३१ ॥ [32]मद्भक्तियुक्तस्य भक्त्यनुसारिज्ञानवैराग्ये विनाऽन्यस्माज्ज्ञानाद्वैराग्याच्च न श्रेयो भवेत् । 'रागिणोऽपि विमुच्यन्ते देवा नास्त्यत्र संशयः । रागापनोदनार्थं च ज्ञानं साध्यं यतीश्वरैरि'ति च ॥ 'स्मर्तव्या विषये दोषा यतिभिर्न तु दैवतैः । हरिरेव सदा पूज्य इत्यर्थं दैवतैरपी'ति च ॥ वैराग्यार्थमपि विषयदोषादिज्ञानं सनकादीनां भाव्यं देवानां तदपि भगवद्भजनस्यैव सारतापरिज्ञानार्थमेवेत्यर्थः ॥३२॥ [35]रागिणोऽपि ते भक्तियोगिनो भक्तिफलत्वेन किमपि नापेक्षन्ते ॥ ३५ ॥ '[36]यदि दद्याद्भक्तियोगफलं मोक्षमपीश्वरः । भक्तियोगफलत्वेन न तद्गृह्णीयुरेव ते । कामिनोऽपि स्वयं कामान्भुञ्जते न फलात्मना । तस्माद्विरागेऽप्यधिका देवा एव हि तादृशा' इति च ॥ ३६ ॥ '[38]उत्तमो भक्तियोगस्तु ज्ञानयोगस्तु मध्यमः । अधमः कर्मयोगश्च ब्रह्मैको मुख्यभक्तिभाक् । ज्ञानमप्यधिकं तेषां नियतं भक्तियोगिनाम् । उदेति भगवद्भक्त्या तद्वन्न ज्ञानयोगिनः । भक्त्यंशकं यतो ज्ञानं ज्ञानस्नेहात्मिका च सा । तथापि ज्ञानयोगित्वं मानुषज्ञानतोऽधिकम् । भक्तियोगे

---

जातश्रद्धो मत्कथासु निर्विण्णः सर्वकर्मसु । वेद दुःखात्मकान् कामान् परित्यागेऽप्यनीश्वरः ॥२८॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चाऽस्य कर्माणि मयि दृष्टेऽखिलाऽऽत्मनि ॥ ३१ ॥ तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः । न ज्ञानाञ्च च वैराग्यात्प्रायः श्रेयो भवेदिह ॥ ३२ ॥ यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् । योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥ ३३ ॥ सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा । स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छति ॥ ३४ ॥ नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमकल्मषम् । तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेत् ॥ ३५ ॥ न किञ्चित्साधवो वीरा भक्ता ह्येकान्तिनो मम । वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥ ३६ ॥ एवमेतान्मयाऽऽदिष्टाननुतिष्ठन्ति मे पथः । क्षेमं विन्दन्ति मत्स्थानं यद्ब्रह्म परमं विदुः ॥ ॥ ३८ ॥



ततो यत्नः कार्यो विद्वद्भिरञ्जसे'ति च ॥ ३८ ॥ इति एकादशतात्पर्ये विंशोऽध्यायः ॥ २० ॥

## एकविंशोऽध्यायः

[3]विवेकेन पुण्याधिक्यं भवतीति विचिकित्सार्थं गुणदोषौ विधीयेते । 'पञ्चभूतात्मकत्वेन समता सर्ववस्तुषु । हरिसन्निधिवैशेष्याद्विशेषश्च महान्सदे'ति वैशेष्ये ॥ ३ ॥ [6]धातुः परमेश्वरः । 'यद्यद्धरेः सन्निहितं तत्तच्छुद्धतरं मतम् । स्वतः शुचितमो विष्णुः सान्निध्यं च स्वभावत'इति च ॥ एतेषां जीवानाम् ॥ ६ ॥ '[8]नदीसमुद्रगिरय आश्रमाश्च वनानि च । नगराणि च दिव्यानि शालग्रामादयस्तथा । तेषां समीपगाश्चैव देशा योजनमात्रतः । कर्मण्यास्तु समाख्यातास्तदन्ये कीकटाः स्मृताः । तदन्येऽपि तु ये देशाः कृष्णसारोपिताः स्वतः । कर्मण्या एव ते ज्ञेया यदि नाध्युषिताः खलैः । खलैरध्युषिताश्चापि यदि सद्भिरधिष्ठिताः । कर्मण्या इति विज्ञेया विष्णुलिङ्गानि यत्र चे'ति स्कान्दे ॥ ८ ॥ '[15]आन्तरः सन्निधिर्विष्णोर्बाह्यसन्निधिरेव च । द्विविधः सन्निधिः प्रोक्तः कृत्रिमो बाह्य उच्यते । स्वाभाविकस्त्वान्तरः स्यात्प्रतिमाजीवगो यथे'ति च ॥१५॥ [16]तद्विदामेव न तिर्यगादीनाम् । 'वर्षाच्चतुर्दशादूर्ध्वं ये न विद्युः शुभाशुभम् । तेषामज्ञानजो दोषः सुमहान्कर्मजादपि । तिरश्चामिन्द्रियासक्तेर्न दोषो-

---

एकविंशोऽध्यायः

शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुषु । द्रव्यस्य विचिकित्सार्थं गुणदोषौ शुभाऽशुभौ ॥ ३ ॥ भेदेन नामरूपाणि विषमाणि समेष्वपि । धातुशुद्ध्यै विकल्प्यन्त एतेषां स्वार्थसिद्धये ॥६॥ कृष्णसारोऽथ देशानां ब्राह्मणानां शुचिर्भवेत् । कृष्णसारोऽप्यसौवीरकीकटासंस्कृतेरिणः ॥८॥ मन्त्रस्य च परिज्ञानं कर्मशुद्धिर्मदर्पणम् । धर्मः सम्पाद्यते सद्भिरधर्मस्तु विपर्ययैः ॥१५॥ क्वचिद्गुणोऽपि दोषः स्याद्दोषोऽपि विधिना गुणः । गुण-

ऽज्ञानजो भवेत् । गुणोऽपि नैव कश्चित्स्याद्यतो ज्ञानबहिष्कृता'इति च । अतो मूर्खाणामदोष इति न ॥ १६ ॥ [17]समानकर्माचरणे आत्मयोग्यकर्माचरणे । पूर्वमपतितो येन पतति । प्रायश्चित्तत्वेन तत्समानकर्माचरणेऽपि न दोषः तप्तसुरापानवद्देहत्यागिनः । तथा शयानः शूद्रोऽपि न पतति लशुनभक्षणादिभिः ब्राह्मणादिपातकैः । औत्पत्तिको यतस्तस्य तादृशगुणसङ्गः । अतः स्वायोग्य एव कर्मणि पतति । 'त्रैवर्णिकाः सञ्चरन्तो वेदकर्मप्रवर्तनात् । शयानः शूद्र उद्दिष्टो वेदकर्माप्रवर्तनात् । न तस्याभक्ष्यजो दोषः शुश्रूषायां प्रवर्ततः । यथा सुवर्णस्य मलं शुल्बं ताम्रस्य नैव तत् । एवं विप्रादिदोषैस्तु न शूद्रो दोषितामियात् । मलं तु तस्यापि मलं यथैवं शूद्रजन्मनः । स्वधर्मप्रातिरूपस्य चरणं दोषदं मतमि'ति च समाचारे ॥ 'शूद्रस्यापि हरेर्दीक्षां प्रविष्टस्य तु विप्रवत् । अभक्ष्यादिकृतो दोषः स हि शूद्रो हि मुख्यत'इति विष्णुतन्त्रे ॥ १७ ॥ [18]सर्वतोऽप्यभिमानविमोकेन परमात्मसमर्पणमेव दोषहानिदमित्याह यतोयत इत्यादिना । 'मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसे'त्यादेश्च ॥१८॥ '[22]दोषिणो गुणवत्त्वेन श्रूयन्ते विषयाः सदा । असतां सङ्गतेस्तेषु दोषाः श्रोतुं सुदुर्लभाः । अतो नित्यगुणध्यानात्तद्गुणे प्रीतिमान्भवेत् । अतस्तत्र भवेत्कामः कामिनं कलिराविशेत् । अधर्मज्ञानरूपेण कलिनाविष्टदेहिनः । सत्सु क्रोधो दुर्विषहस्ततस्तमसि पात्यते । अन्धे तमसि मग्नस्य चेतनेन्द्रियसन्तता । सुखानुभवशक्तिर्या सा विनश्यति सर्वदा । तदा शमूनभावेन शून्य इत्युच्यते नरः । सर्वात्मना तु सम्भ्रंशस्तस्य दुःखविवर्धनः । अमूर्च्छितस्यैव भवेन्मृत्यनन्तरमेव च । दुःखाख्याविषयावेशान्नात्मानं परमेव च । यथावद्वेत्ति पतितस्तमस्यन्धे कदाचन । वृक्षवद्भ्रश्यते नित्यं निष्प्रयोजनजीवनः । नित्यदुःखपरीतायुर्दृतिवत्प्रश्वसित्यपी'ति तन्त्रभागवते । स्वार्थस्य सुखस्य भ्रंशो विपरीतमतिशयेन जनयतीति स्वार्थविभ्रंशः ॥ तस्मात्स्वर्गादिविषयेष्वपि नेच्छेत ॥ २२ ॥ '[23-25]फलस्य श्रुतिरेवेयं न कामकुसुमश्रुतिः । स्वर्गादिकामनायुक्तस्त्वैहिकेष्वपि सज्जते । तत्रापि देवकामेभ्यो विशेषं चाभिवाञ्छति । ततस्तमसि पातः स्यादतो वेदः कथं हि तान् । काम्यत्वेनाभिचक्षीत सर्वं जानन्स्वयं सदे'ति ॥ नः श्रेयोरोचनं अस्मत्सकाशाच्छ्रेयो मोक्षाख्यं तदेव रोचयति फलश्रुतिः । कुसुमस्यानित्यतादिदोषज्ञानान्मोक्षस्यादोषत्वज्ञानाच्च । ईषदुत्तमस्य श्रोतुर्विवक्षया । बुधो वेदः कथं युञ्ज्यात् । अन्तरालागतोऽपि स्वर्ग एवं विधः किमु साक्षात्फलरूपो मोक्ष इति रोचकः । अनेकब्रह्मकालप्राप्यत्वान्मोक्षस्य तावन्तं कालं तप एव कर्तुं न शक्यत इति मन्दाधिकारिणां स्वर्गादिष्वप्यभिरुचिर्भवति तान्प्रत्यन्ते मोक्ष एव भवति । अन्तरालेऽप्येवंविधस्वर्गादिकं सुखं भवति । तस्माद्विहितं कर्म कर्तव्यमिति रोचयति । उत्तमानां तु यस्मादेतादृशमप्यनित्यत्वादिदोषवत्स्वर्गादिकं तस्मान्मोक्षफल एव वेद इति दर्शयति । न हि सर्वप्रमाणोत्तमो वेदोऽल्पफले पर्यवसितः । 'मन्दाधिकारिणां

---

दोषार्थनियमस्तद्धिदामेव बाधते ॥ १६ ॥ समानकर्माचरणे पतितानां न पातकम् । औत्पत्तिको गुणैः सङ्गो न शयानः पतत्यधः ॥ १७ ॥ यतो यतो निवर्तेत विमुच्येत ततस्ततः । एष धर्मो नृणां क्षेमः शोकमोहभयापहः ॥१८॥ विषयेषु गुणाध्यानात्पुंसः सङ्गस्ततो भवेत् । सङ्गात्तत्र भवेत्कामः कामादेव कलिर्नृणाम् ॥१९॥ कलेर्दुर्विषहः क्रोधस्तमस्तदनुवर्तते । तमसा ग्रस्यते पुंसश्चेतना व्यापिनी ततः ॥२०॥ तथा च रहितः साधो जन्तुः शून्याय कल्पते । ततोऽस्य स्वार्थविभ्रंशो मूर्छितस्य मृतस्य च ॥ २१ ॥ विषयाभिनिवेशेन नात्मानं वेद नापरम् । वृक्षजीविकया जीवन् व्यर्थं ग्रस्तवयाः श्वसन् ॥ २२ ॥ फलश्रुतिरियं नृणां नः श्रेयो रोचनं परम् । श्रोतुर्विवक्षया प्रोक्तं यथा भैषज्यरोचनम् ॥ २३ ॥ उत्पत्त्यैव हि कामेषु प्राणेषु स्वजनेषु च । आसक्तमनसो मर्त्या आत्मनोऽनर्थहेतुषु ॥ २४ ॥ न तानविदुषः स्वार्थं भ्राम्यतो वृजिनाध्वनि ।

नित्यं तपसैव प्रतीक्षितुम्। मोक्षो न शक्यतेऽधैर्यात्ततः स्वर्गादिकं वदेत्। स्वर्गादिष्वल्पफलतां ज्ञापयित्वा विमोक्षदम्। एवं वक्तुं तूत्तमानां नित्यो वेदः प्रवर्तते। इक्षुदण्डं ददानीति यथा भैषज्यरोचनम्। एवं मन्देषूत्तमेषु मोक्षमाहात्म्यमुच्यते। नह्यल्पफलभाग्वेदो वासुदेवैकसंश्रय' इति विचारे ॥ २३-२५ ॥ '[27]अयोग्यभार्यापुत्रादिकामिताऽनर्थसाधिनी। योग्यकामाद्धरेः प्रीतिरतो ब्रह्मादयोऽमलाः। भार्यापुत्रादिसंयुक्ता वासुदेवमुपासत' इति च ॥ २७ ॥ [26]एवं वेदस्य व्यवसितम्। फलश्रुतिं कुसुमिताम्। फलं मोक्षः। तद्विषयां श्रुतिं स्वर्गादिकुसुमविषयां वदन्ति ॥ २६ ॥ '[27]नित्यानन्दो हरेर्भक्तिज्ञानाद्याः स्वर्गशब्दिताः। पुत्रभार्याक्षवित्ताद्यं सर्वं मोक्षगतं फलम्। उद्दिश्य स्वर्गकामस्य यजनं श्रुतिचोदितम्। तदविज्ञाय पुष्पाख्यमनित्यं स्वर्गमिच्छवः। यजन्ति मन्दमतयो वेदवादपरायणा' इति च ॥ 'स्त्रीभिर्वा यानैर्वे'त्यादि च ॥२७॥ '[29]मोक्षाख्यं फलमेवात्र स्वर्गादिवचनं तु यत्। पुष्पस्वर्गादिवत्तस्य वचनं मन्दरोचनमि'ति च ॥ 'असुराणामयं स्वर्गशब्दः पुष्पात्मकं वदेत्। देवानां हरिसम्प्राप्तिं वेदो विष्णुपरो यत' इति च ॥ २९ ॥ [27]स्वलोकं स्वाश्रयम् ॥ २७ ॥ [28]कोऽसावाश्रयः मां ते ये उक्थेन प्राणेन शास्याः। 'विष्ण्वभक्तान् सदा वायुः शासयेत्तमसि क्षिपन्। विष्णुभक्तान्विमोक्षाय प्रापयित्वा सुखं नयेदि'ति च ॥ 'पथ एकः पीयाय तस्करो यथाँ एष वेद निधीनामि'ति च। मे मताविज्ञानात्परोक्षविषयात्मकाः। परोक्ष-

कथं युञ्ज्यात् पुनस्तेषु तांस्तमोविशतो बुधः ॥ २५ ॥ एवं व्यवसितं केचिदविज्ञाय कुबुद्धयः। फलश्रुतिं कुसुमितामवेदज्ञा वदन्ति हि ॥२६॥ कामिनः कृपणा लुब्धाः पुष्पेषु फलबुद्धयः। अग्निमुग्धा धूमितान्ताः स्वलोकं न विदन्ति ते ॥२७॥ न ते मामङ्ग जानन्ति हृदिस्थं य इदं यतः। उक्थशास्त्रोऽसुतृपो यथा नीहारचक्षुषः ॥ २८ ॥ ते मे मतमविज्ञाय परोक्षविषयात्मकाः। वृथा पशून्विनिघ्नन्ति हिंस्यन्ते प्रेत्य तैस्तु ते ॥



मन्धन्तमः। तद्विषयस्वरूपाः। तद्गमनार्थस्वरूपाः। 'अन्धन्तमः परोक्षं च पञ्चकष्टं तथोच्यत' इति सुव्यक्ते ॥ तेषामासुराणां यदा हिंसायां कामः। तदा यज्ञ एव न चोदना। यद्यदात्मनो हिंसितुमिष्टं तत्तद्विहितमिति प्रापयन्ति कुतर्कैः। 'आसुरोऽविहितां हिंसां विहितत्वेन वर्णयेत्। आसुरा याज्ञिकाः सर्वे नारायणपराङ्मुखा' इति च ॥ २८ ॥ '[32]विष्णुं विहाय ये देवान्पितॄन् भूतेशमेव वा। साम्येन वा पूजयन्ति ते ज्ञेया आसुरा गणा' इति च। तामसेष्वेव रजःसत्वतमोनिष्ठाः। 'तामसेषु तु ये सत्वा निरयप्रचुरास्तु ते। ईषत्स्वर्गादिसंयुक्ता एवं निष्ठाश्च ते स्मृताः। केवलं निरये निष्ठा ये ते तामसराजसाः। अन्धे तमसि ये निष्ठास्ते वै तामसतामसाः। एवं त्रिभेदयुक्तास्तु याज्ञिका विष्णुवर्जिता' इति हरिवंशेषु ॥ ३२ ॥ '[35]ब्रह्मत्वं पूर्णता प्रोक्ता तद्यस्य स्वत एव तु। स ब्रह्मात्मा समुद्दिष्टो वासुदेवः सनातन' इति च ॥ ३५ ॥ [36]प्राणेन्द्रियमनोभिर्मीयते। 'मेयत्वान्मय उद्दिष्टो वेदः प्राणादिभिः सदे'ति वाराहे ॥ 'अन्तो विनाश उद्दिष्टः पारः परिमितिस्तथा। अनन्तपारो वेदोऽयं ताभ्यां स रहितो यत' इति व्यासस्मृतौ ॥ ३६ ॥ [35]भूम्ना ब्रह्मणा अतिमहापरिपूर्णेन ॥ ३५ ॥ [38-40]आस्पर्शरूपिणा आस्पर्शो विष्णुस्तं रूपयति प्रकाशयतीत्यास्पर्शरूपि प्राणस्य मनः। आसमन्तात्स्पर्शा भोगा अस्यैवेत्यास्पर्शः। 'भुङ्क्ते

हिंसायां यदि कामः स्याद्यज्ञ एव न चोदना ॥ २९ ॥ हिंसाविहारा-ह्यालब्धैः पशुभिः स्वसुखेच्छया। यजन्ते देवता यज्ञैः पितॄन् भूतपतीन् खलाः ॥ ३० ॥ रजःसत्वतमोनिष्ठा रजःसत्वतमोजुषः। उपासते इन्द्रमुख्यान् देवादीन् यथैव माम् ॥३२॥ वेदा ब्रह्मात्मविषयास्त्रिकाण्डविषया अपि। परोक्षवादो वेदोऽयं परोक्षं मम च प्रियम् ॥३५॥ शब्दब्रह्म सुदुर्बोधं प्राणेन्द्रियमनोमयम्। अनन्तपारं गम्भीरं दुर्विगाह्यं समुद्रवत् ॥३६॥ मयोपबृंहितं भूम्ना ब्रह्मणाऽनन्तशक्तिना। भूतेषु घोषरूपेण बिसेषूर्णेव लक्ष्यते ॥ ३७ ॥ यथोर्णनाभिर्हृदयादूर्णामुद्वहते मुखात्।

यदखिलान्स्पर्शानास्पर्शो विष्णुरूच्यते । तस्य प्रकाशकं नित्यं नमस्ये प्राणमेकलम् ।। प्राणस्यैव मनो नित्यं वासुदेवं प्रकाशयेदि'ति वायुप्रोक्ते ।। 'मीयन्तेऽनेन छन्दांसि प्राणश्छन्दोमयस्तत'इति च । 'त्रिमात्रमादितः कृत्वा यावच्चानन्तमात्रकाः ।। प्रणवास्ते विभेदेन ह्यनन्ताः परिकीर्तिताः । एकमात्रोत्तरा सर्वे वासुदेवाभिधायकाः । तेषां व्याख्यानरूपा हि सर्वे वेदाः प्रकीर्तिताः । ॐकारव्यञ्जितास्तस्मात्सदोच्चार्या हरेः प्रियैरि'ति प्रण्वमाहात्म्ये ।। 'गुह्यदर्शनभाषे च भाषा चैव समाधिका । तिस्रस्तु मूलभषाः स्युरेकैका च त्रिधा पुनः । गुह्यदर्शनसंज्ञा च गुह्यगुह्या तथाऽरा ! एवमादि क्रमेणैव त्वेकाशीतिविभेदिताः । भाषास्तत्र च गुग्र च प्रसिद्धार्थेष्वनन्विता । गुह्यार्थतत्परैवान्धो मणिमित्यादिका चसा । दर्शनान्यवलम्ब्यैव पशुपत्यादिनां तु या । बहुश्रुतिविरुद्धं तु वदेसा दर्शनात्मिका । अन्ते निषेधसंयुक्ता भस्मस्नानादिका च सा । यथा ऽदृश्यमानार्था समाधिः सा प्रकीर्तिता । विष्णुः परम इत्याद्या सा च विद्वद्भिरीरिते'ति भाषाविवेके । 'भस्मस्नानविधानं तु श्रुत्युक्तं दर्शनानुगम्। भस्मस्नानं ततो ग्राह्यं विधानं तु नृसिंहगमि'ति स्कान्दे । गायत्र्य उष्णिक् चतुर्वर्णाधिकेत्यादि चतुरुत्तरैः जगत्यन्तानामेव चतुरुत्तरत्वनियमः ।। ३८-४० ।। '[41]छन्दस्तु नवपादं यज्जगदित्युच्यते बुधैरि'ति छन्दोविधाने ।।४१।। [42-43]विविधरूपत्वेन कल्पनं विकल्पः चत्वारि वागितादि । तत्र वागित्यनुवादः । 'विधिभागे हरेः पूजैवाभिधाने च तद्गुणा । विकल्पे तद्बहुत्वं चाप्यपोहे तु

आकाशाद्घोषवान् प्राणो मनसा पर्शरूपिणा ॥३८॥ छन्दोमयोऽमृतमयः सहस्रपदवीं प्रभुः । ओङ्कारेष्ञ्जितां स्पर्शस्वरोष्मान्तस्थभूषिताम् ॥ ॥ ३९ ॥ विचित्रभाषाविततां छन्दोभिश्चतुरुत्तरैः । अनन्तपारां बृहतीं सृजत्यक्षिपते स्वयम् ॥४०॥ गयत्र्युष्णिगनुष्टप् च बृहती पङ्क्तिरेव च । त्रिष्टुप् जगत्यातिच्छन्दो ह्यत्यष्टि जगद्विराट् ॥ ४१ ॥ किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेर। इत्यस्या हृदयं लोके नान्यो मद्वेद





दतप्रियम् । उच्यते सर्ववेदेषु तच्च वेद स एव ही'ति आगमतात्पर्ये । 'सुरा हरेर्गुणाः प्रोक्तास्ते मे स्युरिति चिन्तनम् । सुरापानमिति प्रोक्तं तन्न कुर्यात्कथञ्चन ।। ब्राह्मणो विष्णुरुद्दिष्टः स नास्तीत्यभिचिन्तनम् । ब्रह्महत्या समुद्दिष्टा तां न कुर्यात्कथञ्चन । इत्याद्यपोहवाक्यार्थश्चिन्त्यो विष्णुर्बुधैर्जनैरि'त्यादि च । मदन्यः कश्चन कोऽपि न वेद ।। [44]अभिदश्च स एव अश्व अभिदा तं अभिदां मामास्थाय मायामात्रं मदिच्छानिर्मितं शरीरादिकं अनूद्योपासनादिकं विधाय मोक्षरूपेण तच्छरीरादिकं प्रतिषिध्य प्रशाम्यति । 'सर्वावताररूपेषु निर्भेदत्वाददोषतः । अभिदा विष्णुरुद्दिष्टस्तमेवोक्त्वा तदिच्छया । निर्मितं दैहिकं बन्धं तस्योपासन एव तु । प्रतिषिध्य विमोक्षे तु स्वभावोपास्तिरूपतः । प्रतिशाम्यति वेदोऽयं वासुदेवैकसंश्रय'इति च । अभिदामास्थाय कोऽपि शब्दो मेति वा ।। ४२, ४३ ।। इति एकादशतात्पर्ये एकविंशोऽध्यायः ।। २१ ।।

## द्वाविंशोऽध्यायः

[4]मायां मदीयां मत्सामर्थ्यम् । 'विष्णोः सामर्थ्यमालम्ब्य तत्त्वसङ्ख्यां मुनीश्वराः । चक्रुर्हि तदविज्ञाय विवदन्त्यल्पबुद्धयः । तत्रापि कारणं विष्णोः शक्तिर्यस्या विकारतः ।। ४ ।। [4-6]अव्यक्तादेर्विकल्पोऽयं मनसः सम्प्रजायते । विरुद्धकल्पनं तच्च वासुदेवैकनिष्ठया । निरहङ्कारया नश्येद्विवादैकाश्रयं हि तदि'ति तन्त्रभागवते ।। [6]यासां

कश्चन ॥ ४२ ॥ मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्य इत्यहम् ॥ ४३ ॥ एतावन् सर्ववेदार्थः शब्द आस्थाय माऽभिदाम् । मायामात्रमनूद्यान्ते प्रतिषिध्य प्रशाम्यति ॥ ४४ ॥

### द्वाविंशोऽध्यायः

श्री भगवानुवाच—युक्तयः सन्ति सर्वत्र भाषन्ते ब्राह्मणा यथा । मायां मदीयामुद्गृह्य वदतां किं नु दुर्घटम् ॥४॥ नैतदेवं यथात्थ त्वं यदहं वच्मि तत्तथा । एवं विवदतां हेतुः शक्तयो मे दुरत्ययाः ॥५॥ यासां

सकाशादव्यक्तादिव्यतिकराद्विकल्पो विरुद्धकल्पः। स हि विवादाश्रयः। तत्त्वसङ्ख्या विवक्षाभेदेन बहुधा भवति ॥ ४-६ ॥ [10]सर्वथा जीवादन्यः परमेश्वरोऽङ्गीकर्तव्यः। जीवस्य स्वत एव ज्ञानायोगात् ॥ १० ॥ [11]स च पुरुषरूपेण तत्स्थितो ज्ञानमुत्पादयति। ईश्वररूपेण बहिःस्थितः फलं ददाति। न च तयोः स्वरूपयोः किञ्चिद्वैलक्षण्यम्। तयोश्चान्यत्वकल्पना तत्स्वरूपादपगमनप्रयोजनाऽनर्थकारिणीत्यर्थः। ज्ञानस्वरूपस्य जीवस्य कथं ज्ञानोत्पादनमित्यतो वक्ति। ज्ञानं च प्रकृतेर्गुण इति। जन्यज्ञानं प्रकृतेर्गुणः। 'स्वरूपभूतज्ञानं तु सदा जीवस्य विष्णुना। नियतं प्राकृतं ज्ञानं भक्त्या तेनैव दीयत'इति च ॥ ११ ॥ [12]जन्यज्ञानस्य प्राकृतत्वं साधयति। प्रकृतेर्गुणसाम्ये त्वित्यादिना ॥ '[13]अन्तःस्थः पुरुषो नाम ज्ञानदः सर्वदेहिनाम्। बहिःस्थ ईश्वरो नाम ज्ञानादिफलदो हरिरि'ति मात्स्ये ॥ 'पुरुषाख्यो हृद्गतस्तु विष्णुर्जीवविबोधकः। फलदात्रा तु बाह्येन य ईशेन भिदां वदेत्। तथैवान्यस्वरूपेषु विष्णोर्यो भेददर्शकः। ये च जीवेश्वराभेदं पश्यन्तोऽनर्थभागिन'इति ब्राह्मे ॥ कालो भगवान् ॥ १२ ॥ [14]नवैकादश पञ्च त्रीणीत्युक्तानि पुरुषः प्रकृतिरित्यादीनि ॥१४॥ [16]उत्सर्गस्य द्विविधत्वात्पञ्चकद्वयम् ॥१६॥

---

व्यतिकरादासीद्विकल्पो वदतां पदम्। प्राप्ते शमदमे व्येति वादस्तमनुशाम्यति ॥ ६ ॥ अनाद्यविद्यायुक्तस्य पुरुषस्यात्मवेदनम्। स्वतो न सम्भवेद्यस्मात्ततोऽन्यः पुरुषो भवेत् ॥१०॥ पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि। तदन्यकल्पनाऽपार्था ज्ञानं च प्रकृतेर्गुणः ॥ ११ ॥ प्रकृतेर्गुणसाम्ये तु प्रकृतेर्नात्मनो गुणाः। सत्त्वं रजस्तम इति स्थित्युत्पत्त्यन्तहेतवः ॥१२॥ सत्त्वं ज्ञानं रजः कर्म तमोऽज्ञानमिहोच्यते। गुणव्यतिकरः कालः स्वभावः सूत्रमेव च ॥ १३ ॥ पुरुषः प्रकृतिर्व्यक्तमहङ्कारो नभोऽनिलः। ज्योतिरापः क्षितिरिति तत्त्वान्युक्तानि मे नव ॥ १४ ॥ श्रोत्रं त्वग्दर्शनं घ्राणो जिह्वेति ज्ञानशक्तयः। वाक्पाण्युपस्थपाय्वङ्घ्रि-कर्माण्यङ्गोभयं मनः ॥ १५ ॥ शब्दः स्पर्शो रसो गन्धो रूपं चेत्यर्थजातयः। गत्युक्त्युत्सर्गशिल्पानि कर्मायतनसिद्धयः ॥ १६ ॥ सर्गादौ



[17]त्रीनिति त्रिगुणानिति वक्तुं गुणप्रवृत्तिमाह सर्गादावित्यादिना ॥१७॥ [18]कार्यकारणभावादन्योऽन्यानुप्रवेशो युक्त इति वक्तु सृष्ट्युक्तिः। 'सृज्यस्रष्टृस्वरूपत्वादन्योऽन्यानुप्रवेशिनः। तिष्ठन्ति तात्त्विका देवा विशेषप्राप्तिकारणादि'ति नैसर्गे ॥ १८ ॥ [14]अन्वेकमप्येष्वित्युक्तत्वात्पुरुषो हिरण्यगर्भः। 'यदा पुरुषशब्देन विरिञ्चस्यैव वाच्यता। परस्य पृथगुक्त्यैव व्यक्तस्तत्र तु शङ्करः। तदाऽहङ्कारशब्देन स्कन्दस्यैव वचो भवेदि'ति विवेके ॥ १४ ॥ [19]सत्वादीन् गत्यादींश्च विना परमात्मना सह षड्विंशतिः। महदहङ्कारौ ब्रह्मरुद्रौ अङ्गीकृत्य स्कन्दं विना परमात्मना सह पञ्चविंशतिः। 'विषयेन्द्रियप्रकृतिदेवताः परमात्मना। पञ्चविंशतितत्त्वानि सङ्ख्यातानि विदो विदुरि'ति च। 'ज्ञानशब्दोदितो ब्रह्मा तदाधारो हरिः स्मृत'इति च ॥ ततो ज्ञानं विना परमात्मानमङ्गीकृत्यैव देहेन्द्रियाण्यसुश्च नव तत्त्वानि। 'सर्वदेहाभिमानी तु देहिनां तु दिवाकरः। इन्द्रियात्मेन्द्र एवैकः प्राणो नाम प्रजापतिरि'ति च ॥ १९ ॥ [21]अवयविनो जन्म तैः खलु ॥ २१ ॥ '[22]भूतानि मात्राश्च परस्तत्त्वैकादशकं स्मृतमि'ति च। भूतमात्रेत्यारम्भात्तत्सिद्धेरेकादशानां पृथगनुक्तिः ॥ [23]आत्मना सहैव मन उच्यते। 'आत्मनः सन्निधिस्थत्वान्मनसस्तु तदुक्तितः। उक्तो भवेत्परात्मापि तत्त्वषोडशकं

---

प्रकृतिर्ह्यस्य कार्यकारणरूपिणी। सत्त्वादिभिर्गुणैर्धत्ते पुरुषोऽव्यक्तमीक्षते ॥ ॥ १७ ॥ व्यक्तादयो विकुर्वाणा धातवः पुरुषेच्छ(क्ष)या। लब्धवीर्याः सृजन्त्यण्डं संहताः प्रकृतेर्बलात् ॥ १८ ॥ सप्तैव धातव इति यत्रार्थाः पञ्च खादयः। ज्ञानमात्मोभयाधारस्ततो देहेन्द्रियासवः ॥१९॥ षडित्यत्रापि भूतानि पञ्च षष्ठः परः पुमान्। तैर्युक्त आत्मसम्भूतैः सृष्ट्वेदं समुपाविशत् ॥ २० ॥ चत्वार्येवेति तत्रापि तेज आपोऽन्नमात्मनः। जातानि तैरिदं जातं जन्मावयविनः खलु ॥ २१ ॥ सङ्ख्याने सप्तदशके भूतमात्रेन्द्रियाणि च। पञ्चपञ्चैकमनसा आत्मा सप्तदशः स्मृतः ॥ २२ ॥ तद्वत्षोडशसङ्ख्यान आत्मना मन उच्यते। भूतेन्द्रियाणि पञ्चैव मन

यदे'ति च । आत्मशब्देन च ब्रह्मा परमात्मा चोभावुच्येते । 'भूतेन्द्रियाणि च मनो ब्रह्मा विष्णुस्तथैव च । एवं त्रयोदशैवाहुस्तत्त्वानि मुनयो वरा'इति च । 'आत्मेति परमात्मा च विरिञ्चिश्चापि कथ्यते । वायुर्मनश्च देहश्च स्वयमित्यपि कुत्रचिदि'ति प्रत्यये ॥२२॥ [25]यद्यपि परमात्मा प्रकृतिश्च विलक्षणौ तथापि तयोर्वैलक्षण्यं न लक्ष्यते । 'अन्तरं च भिदा चेति वैलक्षण्यं प्रकीर्तितमि'ति च । तद्वैलक्षण्यं कुतो न दृश्यत इति प्रश्नाभिप्रायः ॥ २५ ॥ [26]अन्योन्याधारत्वमेव दृश्यते । न तु परमेश्वरस्यानन्याधारत्वेन प्रकृत्याधारत्वं मन्दमतीनामित्यर्थः ॥ ॥ २६ ॥ '[27]आधारः प्रकृतेर्विष्णुर्नाधारस्तु हरेः क्वचित् । तथाप्यव्यक्तगो यद्वद्दृश्यते मन्दचेतसामि'ति पाद्मे ॥ २७ ॥ [28]प्रकृतिःपुरुषश्चेत्येव अन्योऽन्यविलक्षणावेव । एष विकल्पः । वैलक्षण्यादर्शनं विरुद्धकल्पनमेव । यस्माद्गुणव्यतिकरात्मकः सर्गो विकारनिमित्तः स च गुणव्यतिकरस्त्रिविधः । सत्वरजस्तमसामेकैकप्राधान्येन तत्र तमःप्रधानानामेव विरुद्धकल्पनं तस्मात्तम एवात्र कारणमित्यर्थः ॥ २८ ॥ [29]तत्रापि प्रकृतिरेव कारणं ईश्वरेच्छा च । विकाराज्ञातत्वाद्वैकारिक इत्युच्यते अहङ्कारस्त्रिविधोऽपि । 'वैकारिको महांश्चैव तथाऽहङ्कार एव च । तथैव सात्विकश्चांशो वैकारिक इति त्रिधे'ति शब्दनिर्णये ॥ २९ ॥

---

आत्मा त्रयोदश ॥ २३ ॥ इति नाना प्रसङ्ख्यानं तत्वानामृषिभिः कृतम् । सर्वं न्याय्यं युक्तिमत्त्वाद्विदुषां किमशोभनम् ॥ २४ ॥ उद्धव उवाच— प्रकृतिः पुरुषश्चोभौ यद्यप्यात्मविलक्षणौ । अन्योऽन्यापाश्रयात्कृष्ण दृश्यते न भिदा तयोः ॥ २५ ॥ प्रकृतौ लक्ष्यते ह्यात्मा प्रकृतिश्च तथाऽऽत्मनि । एतन्मे पुण्डरीकाक्ष महान्तं संशयं हृदि । छेत्तुमर्हसि पद्मेश वचोभिस्तत्वनैपुणैः ॥ २६ ॥ त्वत्तो ज्ञानं हि जीवानां प्रमोषस्तनुशक्तितः । त्वमेव ह्यात्ममायाया गतिं वेत्थ न चापरः ॥ २७ ॥ श्री भगवानुवाच— प्रकृतिः पुरुषश्चेति विकल्पः पुरुषर्षभ । एष वैकारिकः सर्गो गुणव्यतिकरात्मकः ॥२८॥ ममाङ्ग माया गुणमय्यनेकधा विकल्पबुद्धिं च गुणैर्विधत्ते । वैकारिकस्त्रिविधोऽध्यात्ममेकमथाधिदैवमधिभूतमन्यत् ॥ २९ ॥



[30]अध्यात्ममिन्द्रियाणि । तैरेव विपरीतं ज्ञानं जायते । 'अहङ्कारे विद्यमाने भ्रमो भवति नान्यदा । सम्यग्ज्ञानं हरेः शक्त्या तन्मुक्तस्य विशेषतः । देवतानुग्रहो नित्यो मुक्तस्यापि ह्यपेक्षते । नित्यं तत्प्रतिबिम्बत्वाज्जीवानामेव कृत्स्नशः । बाह्यज्ञानं च मुक्तस्य न जडाहङ्कृतेः क्वचित् । किन्तु स्वरूपशक्त्यैव देवेभ्यश्चाभिजायत'इति ब्रह्मतर्के ॥ 'पश्यन्नपि जगत्सर्वं चिद्बलेनैव पश्यति । कुतो मुक्तस्य तु जडं चिद्रूपस्य व्यपेक्षत'इति च । एषामुपरमे मुक्तौ । चक्षुरितिपुनर्वचनमवधारणार्थम् ॥ ३० ॥ [32]योऽसौ भ्रमहेतुर्विकारः स गुणक्षोभकृतः आत्मा तु परिज्ञानस्वरूपो न गुणक्षोभकृतः ॥ ३२ ॥ [33]भिदा विपर्ययेण विद्यमानं नास्ति अविद्यमानमस्तीति विवादः । 'असदस्ति च सन्नास्तीत्येवं भेदाद्विवादनम् । सदैव हरिपादाब्जविमुखानां प्रवर्तत'इति च ॥ ३३ ॥ [38]विषयाभिनिवेशेन उत्तरदेहाभिनिवेशेन पूर्वदेहास्मरणं यत्तन्मृत्युः । ईदृशं वर्तमानं आय एष्यत्सः अतीत इति त्रैविध्यं भाति विज्ञाय वस्तुनि विज्ञाते सति दीर्घलोपः । अत्रात इतिवत् । 'क्षिप्रे दीर्घलोप'इति सूत्रात् । अयमेवात्मानात्मनोर्विशेषहेतुः । यथा प्रायोऽसज्जनोऽसज्जनमेव जनयतीति पितृज्ञानात्पुत्रदौरात्म्यं ज्ञायते । एवमनित्यत्वादनात्मत्वं देहादेरित्यर्थः ॥ ॥ ३८ ॥ [44]सोऽयमेवेति मृषा । 'स चायमिति तु ज्ञानं न मृषायं स

---

दृग्रूपमर्कश्च परत्र रन्ध्रे परस्परं सिध्यति न स्वतोऽसौ । आत्मा यदेषामुपराम आद्यः स्वयाऽनुभूत्याऽखिलसिद्ध्यसिद्धिः ॥ ३० ॥ एवं त्वगादि श्रवणादि चक्षुर्जिह्वादि नासादि च चित्तयुक्तम् ॥३१॥ योऽसौ गुणक्षोभकृतो विकारः प्रधानमूलो जगतः प्रसूतिः । अहं त्रिवृन्मोहविकल्पहेतुर्वैकारिकस्तामस ऐन्द्रियश्च ॥३२॥ आत्मा परिज्ञानमयो विवादो ह्यस्तीति नास्तीति भिदार्थनिष्ठः । व्यर्थोऽपि नैवोपरमेत पुंसां मत्तः परावृत्तधियां स्वलोकात् ॥ ३३ ॥ विषयाभिनिवेशेन नात्मानं यत्स्मरेन्मनः । जन्तोर्वै कस्यचिद्धेतोर्मृत्युरत्यन्तविस्मृतिः ॥ ३८ ॥ ईदृशायास्स विज्ञाय त्रैविध्यं भाति वस्तुनि । बहिरन्तर्भिदाहेतुर्जनोऽसज्जनकृद्यथा ॥ ४१ ॥ सोऽयं

एव तु। इति ज्ञानं मृषैव [35]स्याद्भेदाभेदौ यतस्तनोः। अभेद एव जीवस्य नित्यं प्रत्येकशः पृथक्। दीपदेहनदीवारिफलादीनां पृथक्स्वतः। भेदाभेदौ परिज्ञेयौ कार्यकारणयोरपि। गुणस्य गुणिनश्चैव जातिव्यक्त्योस्तथैव च। तथाऽवयव्यवयवयोः क्रियायास्तद्वतस्तथा। एवं जडेषु नियमश्चिद्रूपेष्वभिदैव त्वि'ति च ॥ 'ये धर्मा नियमेनैव धर्मिणो न वियोगिनः। जडस्था अप्यभिन्नास्ते भिन्नाभिन्ना वियोगिन'इति च ॥ ४४ ॥ [48]अभिज्ञाद्वयलक्षणौ अभिमानमात्रौ ॥ ४८ ॥ [49]तरोर्बीजविकारदृष्टान्तेन विद्वान्देहाभिमानं त्यक्त्वा संयमं याति। परमात्मनश्च भेदं जानाति प्रकृत्यादेः। 'बीजाद्यवस्थासंयुक्ताद्वृक्षाद्द्रष्टा यथा पृथक्। एवं विकारिणो विष्णुर्जीवश्च पृथगेव त्वि'ति च ॥ ४९ ॥ '[52]दुःखशोकादयः सर्वे ज्ञेया बुद्धिगुणा इति। सुखज्ञाने तु जीवस्य भक्तिः स्नेहस्तथैव च। विपर्ययेणासुराणां जीवबुद्धिगुणा इती'ति च ॥ 'आत्मनोऽपि गुणा बुद्धिकृतबुद्धिगुणा इति। उच्यन्ते सुखदुःखाद्याः परमात्मकृता यथे'ति त्रैकाल्ये ॥५२॥ [54]मृषा वृथा। 'अल्पप्रयोजनं यत्तन्मृषेत्येव तदुच्यत' इति शब्दनिर्णये। आत्मनः स्वत एव दुःखाद्याः सुखादिवदिति मिथ्याबुद्धिरिति वा ॥ ५४ ॥ इति एकादशतात्पर्ये द्वाविंशोऽध्यायः ॥ २२ ॥

---

दीपोऽर्चिषां यद्वत्स्रोतसां तदिदं जलम्। सोऽयं पुमानिति नृणां मृषा गीर्भिर्मृषायुषाम् ॥ ४४ ॥ आत्मनः पितृपुत्राभ्यां अनुमेयौ भवाप्ययौ। भवाप्ययौ हि वस्तूनां अभिज्ञाद्वयलक्षणौ ॥ ४८ ॥ तरोर्बीजविकाराभ्यां यो विद्वान् जन्मसंयमौ। तरोर्विलक्षणे दृष्ट एवं द्रष्टा तनोः पृथक् ॥४९॥ नृत्यतो गायतः पश्यन् यथैवानुकरोति तान्। एवं बुद्धिगुणान् पश्यन्ननीहोऽप्यनुकार्यते ॥५२॥ यथा मनोरथधियो विषयानुभवो मृषा। स्वप्नदृष्टश्च दाशार्ह तथा संसार आत्मनः ॥ ५४ ॥



# त्रयोविंशोऽध्यायः

[48]सात्विकमनोविवक्षया देवशब्दः ॥ ४८ ॥ [49]तामसमनोविवक्षया शत्रुशब्दः। 'एकस्थानाधिपत्ये तु भिन्नानामपि युज्यते। अभेदेन परामर्शः सादृश्येनापि वस्तुनोरि'ति प्रयोगे ॥४९॥ '[48]ऋते द्वे ब्रह्मणी कस्य मनो याति वशं क्वचित्। श्रियं सरस्वतीं वापि याति वा तत्प्रसादत'इति पाद्मे ॥ ४८ ॥ [49]उदासीनानां रिपुं सम्यग्ज्ञानवतां न रिपुत्वं शक्यत इत्यर्थः ॥ ४९ ॥ [50]अभिमानमात्रेणैव जीवस्य देहेन सम्बन्ध इति मनोमात्रम्। मनसा निर्माणमिति। अहमन्य इत्यपि देहमात्रे मन्यन्ते। 'देहमात्रं स्वमात्मानं यः परं चाभिपश्यति। अन्धे तमसि मग्नस्य नोत्तारस्तस्य कुत्रचिदि'ति च ॥ ५० ॥ '[51]जनशब्दः स्वतो जीवे क्वचिद्देहे च वर्तत'इति प्रयोगे ॥ ५१ ॥ [52]अयोग्यक्रोधादेर्मन एव कारणम्। 'अविकाराश्च ते देवा विकारा इति शब्दिताः। अभिमानाद्विकारस्य स्वतः शक्ता अपि ध्रुवमि'ति च ॥ ५२ ॥ [53]न ह्यात्मनः स्वभावादन्यद्भवति। यदि दृश्यते तथापि मृषा स्यात्। सुखरूपं दुःखं न भवति। अतो मन एव तथा दर्शयति। 'जीवस्य

---

त्रयोविंशोऽध्यायः

मनोवशेऽन्ये हि भवन्ति देवा मनश्च नान्यस्य वशं समेति। भीमो हि देवः सहसः सहीयान्नात्याविशत्तत्स हि देवदेवः ॥ ४८ ॥ तं दुर्जयं शत्रुमसह्यवेगमरुन्तुदन्तन्न विजित्य केचित्। कुर्वन्त्यसद्विग्रहमत्र मर्त्यैर्मित्रैरुदासीनरिपुं विमूढाः ॥ ४९ ॥ देहं मनोमात्रमिदं गृहीत्वा ममाहमित्यन्धधियो मनुष्याः। एषोऽहमन्योऽयमिति भ्रमेण दुरन्तपारे तमसि भ्रमन्ति ॥ ५० ॥ जनोऽस्य हेतुः सुखदुःखयोश्चेत्किमात्मनश्चात्र हि भौमयोस्तत्। जिह्वां क्वचित्सन्दशति स्वदद्भिस्तद्वेदनायां कतमाय कुप्येत् ॥ ५१ ॥ दुःखस्य हेतुर्यदि देवतास्तु किमात्मनस्तत्र विकारयोस्तत्। यदङ्गमङ्गेन विहन्यते क्वचित् क्रुध्येत कस्मै पुरुषः स्वदेहे ॥५२॥ आत्मा यदि स्यात् सुखदुःखहेतुः किमन्यतस्तत्र निजः स्वभावः। न

सुखरूपस्य न दुःखं क्वचिदिष्यते । अतो मनोऽभिमानेन दुःखी भवति नान्यथे'ति भारते ॥ ५३ ॥ [54]गृह्यमाणत्वाद्ग्रहो देहः ॥ ५४ ॥ [55]अजडत्वे आत्मनः ॥५५॥ [56]तदात्मनः कालाधीनस्य । 'स्वातन्त्र्यमात्मशब्दोक्तं स्वरूपमपि कुत्रचिदि'ति विवेके ॥ यथाग्नेर्हिमस्य च नैव दुःखं तापनिमित्तं जडत्वात् । एवं जडत्वाद्देहस्यापि कालादिसम्बन्धे विद्यमानेऽपि न दुःखं युक्तम् । 'सदा कालादिसम्बन्धाद्दुःखं देहस्य युज्यते । तथापि नैव दुःखी स जडत्वान्नियमेन तु । आत्मनः सुखरूपत्वान्न दुःखं युज्यते क्वचित् । तस्मान्मनोभ्रमेणैव दुःखी जीवो न चान्यथा । सर्वेषां मनसो नेता मनोरूपस्त्रिलोचनः । तद्वशाः सर्वदेवाश्च तेनैव सुखदुःखिनः । नियन्ता तस्य च प्राणस्ततोऽपि बलवत्तरः । तन्नियन्ता हरिः साक्षात्परमानन्दलक्षण'इति तात्पर्ये ॥५६॥ [57]आत्मनः मनसः ॥ भौमयोर्विकारयोः उभयमनसोः सतोर्दुःखं भवति । ग्रहस्य ग्रहणरूपस्य मनसः सत एव । जडे मनसि सत्येव । तदात्मनो मनसः सतः । संसृतिरूपिणः आत्मनो जीवस्य यथा तथा न हि परस्य अमनस्त्वादतो मनोऽन्वयव्यतिरेक इति भावः ॥५७॥ इति एकादशतात्पर्ये त्रयोविंशोऽध्यायः ॥ २३ ॥

---

ह्यात्मनोऽन्यद्यदि तन्मृषा स्यात् क्रुध्येत कस्मै न सुखं न दुःखम् ॥ ५३ ॥ ग्रहा निमित्तं सुखदुःखयोश्चेत् किमात्मनोऽजस्य जनस्य ते वै । ग्रहैर्ग्रहस्यैव भवन्ति पीडाः क्रुध्येत कस्मै पुरुषस्ततोऽन्यः ॥ ५४ ॥ कर्मास्तु हेतुः सुखदुःखयोर्वै किमात्मनस्तद्धि जडेऽजडत्वे । देहे स्ववित्पुरुषोऽयं सुपर्णः क्रुध्येत कस्मै न हि कर्ममूलम् ॥ ५५ ॥ कालोऽस्तु हेतुः सुखदुःखयोश्चेत्किमात्मनस्तत्र तदात्मनोऽसौ । नाग्नेर्हि तापो न हिमस्य तत्स्यात्क्रुध्येत कस्मै न परस्य द्वोद्धुः ॥ ५६ ॥ क्षिप्तोऽवमानितोऽसद्भिः प्रलब्धः शापितोऽपि वा । ताडितः सन्निरुद्धो वा वृत्त्या वा परिहापितः ॥ ५७ ॥





## चतुर्विंशोऽध्यायः

'[2]यथैवार्थस्तथा ज्ञानं ज्ञानार्थैक्यमुदाहृतम् । तथा कृतयुगे प्रायस्तदन्येषु तु कस्यचिदि'ति ब्रह्मतर्के ॥ २ ॥ [3]फलं रूपयतीति फलरूपः । ज्ञानार्थैक्येन सत्यं पश्चात्तद्द्विधा समभवत् । तच्छब्दार्थात्मकमुभयं बृहत्तरम् ॥ ३ ॥ '[4]ज्ञानाभिमानी पुरुषः स ब्रह्मा समुदाहृतः । अर्थाभिमानी प्रकृतिर्गायत्री सा प्रकीर्तिता । तयोर्नियामको विष्णुः श्रीश्चानुग्राहिका स्मृता । वायुस्तु ब्रह्मणः पुत्रः प्रकृतौ समजायत । त्रिगुणात्मा समुद्दिष्टः प्रायः सत्वात्मकस्तथा । गायत्री चैव सावित्री तथैव च सरस्वती । एवं त्रिरूपा प्रकृतिरेका सत्वादिभेदतः । तासु वीर्यं समुत्सृष्टं ब्रह्मणैकत्वमागतम् । स सूत्रात्मा समुद्दिष्टो वायुर्लोकप्रणायकः । तस्यापि सूत्रं भगवान्धारणाद्विष्णुरव्ययः । सूत्रपुत्रस्त्वहङ्कारः स रुद्रः समुदाहृतः । सूत्रात्मना महांश्चापि सहजातश्चतुर्मुखः । तस्यापि पुत्रोऽहङ्कारः सचानन्त उदाहृतः । अनन्तादपि रुद्रोऽभूद्ब्रह्मणश्चेति स त्रिधा । वैकारिको ब्रह्मजस्तु तैजसो वायुजः स्मृतः । तामसोऽनन्तजश्चैव स एको गुणभेदत' इति प्राथम्ये ॥ ४ ॥ '[7]चिदचिद्यद्वशे सर्वं स रुद्रश्चिदचिन्मय'इति च ॥७॥ '[10]चिदानन्दशरीरस्तु प्रविष्टोऽण्डे

---

चतुर्विंशोऽध्यायः

आसीज्ज्ञानमथो ह्यर्थश्चैकमेवाविकल्पितम् । यदा विवेकनिपुणा आदौ कृतयुगे जनाः ॥ २ ॥ तन्मया फलरूपेण केवलेन विकल्पितम् । वाङ्मनो गोचरं सत्यं द्विधा समभवद्बृहत् ॥३॥ तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका । ज्ञानं त्वन्यतमो भोगः पुरुषः सोऽभिधीयते ॥४॥ तमो रजः सत्वमिति प्रकृतेरभवन् गुणाः । मया प्रक्षोभ्यमाणायाः पुरुषानुमतेन वा ॥ ५ ॥ तेभ्यः समभवत्सूत्रं मत्सूत्रेण च संयुतम् । ततो विकुर्वतो जातो योऽहङ्कारो विमोहकः ॥ ६ ॥ वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिवृत् । तन्मात्रेन्द्रियमनसां कारणं चिदचिन्मयः ॥ ७ ॥ तस्मिन्नहं समभवमण्डे सलिलसंस्थिते । मम नाभ्यामभूत्पद्मं विश्वाख्यं

हरिः स्वयम् । तन्नाभेर्भूतदेहोऽभूत्पद्मादपि चतुर्मुखः । चतुर्मुखस्तु सर्वाण्डव्याप्तदेहो महातपाः । हरिस्तु सर्वव्याप्तोऽपि भूतदेहो न तु क्वचित् । नैवास्य प्राकृतो देहः प्रादुर्भावेष्वपि क्वचिदि'ति निवृत्ते ॥ ॥१०॥ [14]महदादीनामपि भक्तियोगोऽपेक्षित एव आधिक्येनापेक्षितत्वाद्भक्तियोगस्य मद्गतिरित्युक्तम् । 'नैव विष्णावभक्तस्य महर्लोकादिका गतिः । भक्त्युद्रेकात्क्रमादूर्ध्वं यावद्विष्णुप्रवेशनम् । एवं ज्ञानं विना सापि महर्लोकादिका गतिः । ज्ञानोद्रेकात्क्रमादूर्ध्वं यावद्विष्णुप्रवेशनम् । नित्यशो भगवद्रूपस्यापरोक्ष्येण दर्शनम् । मुहूर्तमात्रं ज्ञानं स्यान्महाज्ञानं ततोऽधिकम् । ज्ञानेन ब्रह्मलोकः स्यान्महाज्ञानाद्धरेर्गतिः । सदैवाखण्डितं ज्ञानं तप इत्युच्यते बुधैः । अपरोक्षदृशा युक्तं नित्यं षण्मात्रकालया । अपरोक्षदृशा नित्यं एकमात्रायुजा युतम् । योगनाम्ना समुद्दिष्टं ध्यानं नित्यमखण्डितम् । तच्चतुर्भागया नित्यमपरोक्षदृशा युतम् । पादयोगाख्यमुद्दिष्टं ध्यानं नित्यमखण्डितम् । पादयोगान्महर्लोको जनोलोकस्तु योगतः । तपसस्तु तपोलोकः प्राप्यते नान्यतः क्वचिदि'ति ध्यानयोगे ॥१४॥ [15]कालात्मना ज्ञानाद्यात्मना ॥१५॥ '[17]प्रकृतेस्तु विकाराणां कोट्यंशो भेद इष्यते । तथैवाकाशतो भेदः सोऽपि नाभेदवर्जितः । भेदाभेदमतः प्राहुरभेदं वा तयोर्बुधा'इति विवेके ॥१७॥ '[18]पारमार्थिकसत्यत्वं स्वातन्त्र्यमभिधीयते । तद्विष्णोरेव नान्यस्य तदन्येषां सदास्तिते'ति च ॥ यद्ब्रह्मोपादाय पूर्वः प्रकृत्यादि-

---

तत्र चात्मभूः ॥ १० ॥ अधो सुराणां नागानां भूमेरोकोऽसृजत्प्रभुः । त्रिलोक्याङ्गतयः सर्वाः कर्मणां त्रिगुणात्मनाम् ॥१३॥ योगस्य तपसश्चैव ज्ञानस्य गतयोऽमलाः । महर्जनस्तपः सत्यं भक्तियोगस्य मद्गतिः ॥ १४ ॥ मया कालात्मना धात्रा कर्मयुक्तमिदं जगत् । गुणप्रवाह एतस्मिन्नुन्मज्जति निमज्जति ॥ १५ ॥ यस्तु यस्यादिरन्तश्च स वै मध्यं च तस्य सन् । विकारो व्यवहारार्थो यथा तैजसपार्थिवाः ॥ १७ ॥ यदुपादाय पूर्वस्तु



रादिरन्तश्च यद्ब्रह्मणि यस्मात्तस्माद्ब्रह्म परमार्थसत्यम् ॥ १८ ॥ [19]परः पुरुषो हिरण्यगर्भः कालोऽपि रूपान्तरेण स एव । 'कालाभिमानी ब्रह्मा तु काल इत्यभिशब्दितः । सर्वजीवाभिमानी स परःपुरुष उच्यते । प्रकृतिर्नाम तत्पत्नी प्रकृतेरभिमानिनी । सा प्रसूते जगत्सर्वं सूत्रमारभ्य सर्वश'इति च । आधारो व्यञ्जकश्चैव प्रसविता च केशवः । 'कालप्रकृतिपुंसां च तन्मूलप्रकृतेरपि । आधारो व्यञ्जकश्चैव सर्वस्यापि नियामक'-इति च ॥ १९ ॥ [20]यावत्स्थितिरस्ति तावदुत्पत्तिरस्त्येव । यावदीक्षणं यावत्प्रलयः स्यादिति भगवतः स्मरणम् ॥ २० ॥ '[21]विशेषेण गुणोद्रेकाद्विशेषः पृथिवी स्मृते'ति प्रवृत्ते । पञ्चत्वानन्तरमविशेषाय ॥२१॥ '[22]देव्यामोषधिमानिन्यां लीयतेऽन्नाभिमानिनी'त्यादि च ॥ २२ ॥ '[25]विकारजत्वात्तु महान्वैकारिक उदाहृतः । ईशनादीश्वरश्चैव ब्रह्मा बृंहणतः स्मृत'इति च ॥ २५ ॥ '[29]गायत्री चैव सावित्री तथैव च सरस्वती । एवं त्रिरूपा प्रकृतिर्ब्रह्मपत्नी प्रकीर्तिता । महत्तत्त्वात्मको ब्रह्मा तज्जत्वात्तत्र लीयते । गुणाधिकः पतिरपि तस्याः सत्वादिभेदतः । त्रिविधा मूलरूपायां प्रकृत्यां सा प्रलीयते । प्रकृतिर्मूलरूपा सा ब्रह्मपत्नी जगन्मया । पुरुषाभिधे विरिञ्चे तु स स्वस्मिन्कालसञ्ज्ञिते ।

---

भावो विकुरुते परम् । आदिरन्तो यतो यस्मिंस्तत्सत्यमभिधीयते ॥१८॥ प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः । सतोऽभिव्यञ्जकः कालो ब्रह्मतत्त्रितयन्त्वहम् ॥१९॥ सर्गः प्रवर्तते तावत्पौर्वापर्येण नित्यशः । महान् गुणविसर्गोऽर्थः स्थित्यन्तो यावदीक्षणम् ॥ २० ॥ विराण्मयाऽऽसाद्यमानो लोककल्पविकल्पकः । पञ्चत्वायाविशेषाय कल्पते भुवनैः सह ॥ ॥२१॥ अन्ने प्रलीयते मर्त्यमन्नं धानासु लीयते । धाना भूमौ प्रलीयन्ते भूमिर्गन्धे प्रलीयते ॥ २२ ॥ योनिर्वैकारिके सौम्य लीयते महतीश्वरे । शब्दो भूताधिमप्येति भूतादिर्महति प्रभुः ॥ २५ ॥ स लीयते महान्स्वेषु गुणेषु गुणवत्तमः । तेऽव्यक्ते सम्प्रलीयन्ते तत्काले लीयतेऽव्यये ॥२६॥ कालो मायामये जीवे जीव आत्मनि मय्यजे । आत्मा केवल आत्मस्थो

कालाभिधो विरिञ्चस्तु महालक्ष्म्यां विलीयते । जीवमायेति यामाहुः सा च सत्वादिभेदतः । त्रिविधैकत्वमापाद्य विष्णावेव विलीयते । हरेरत्यन्तसामीप्यं लयो लक्ष्म्याः प्रकीर्तितः । पुरुषेणापि सामीप्यं प्रकृतेर्लय उच्यते । ब्रह्मा च प्रकृतिश्चैव मुक्तिगौ विलये यतः । अतस्तौ भिन्नदेहौ तु ज्ञानमात्रौ समीपगावि'त्यादि च ॥ २९ ॥ इति एकादशतात्पर्ये चतुर्विंशोऽध्यायः ॥ २४ ॥

## पञ्चविंशोऽध्यायः

‘[3]राजसेऽपि यदा दुःखं तामसे किमुतेति तत् । राजसे दुःखवचनं तामसेऽतिविवक्षये'ति प्रद्योते ॥ ३ ॥ ‘[24]नैर्गुण्यसाधनं यत्तन्निर्गुणं परिकीर्तितमि'ति च । ‘यथाशास्त्रोक्तविज्ञानं केवलं ज्ञानमुच्यते । स्वदृष्टशास्त्रानुकूल्याददृष्टानां च भक्तितः । गुणानां तु हरौ भावं विनिश्चित्यैतदाश्रयात् । यथाशास्त्रानुसन्धानं ज्ञानं तु हरिसंश्रयमि'ति च ॥ २४ ॥ ‘[27]श्रुतशास्त्रानुसारेण या श्रद्धा परमात्मनि । सा सात्विकी तदन्यस्याप्यनुसारेण निर्गुणा । अश्रुत्वाऽपि प्रमाणं यो वासुदेवैकसंश्रयः । स निर्गुणो भागवतः समुद्दिष्टो मनीषिभिरि'ति

---

विकल्पोपायलक्षणः ॥ २७ ॥ एष साङ्ख्यविधिः प्रोक्तः संशयग्रन्थिहेतिकः । प्रतिलोमाऽनुलोमाभ्यां परावरदृशा मया ॥ २९ ॥

### पञ्चविंशोऽध्यायः

कामईहामदस्तृष्णास्थम्भ आशीर्भिदा सुखम् । मनोत्साहो यशः प्रीतिर्धाष्ट्र्यवीर्यबलोद्यमाः ॥ ३ ॥ क्रोधो लोभोऽनृतं हिंसा माया दम्भो क्षमा कलिः । शोकमोहौ विषादार्ती निद्राऽऽशाभीरनुद्यमः ॥४॥ कैवल्यं सात्विकं ज्ञानं कर्मनिष्ठं तु राजसम् । प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम् ॥ २४ ॥ सात्विकः कारकोऽसङ्गी रागान्धो राजसः स्मृतः । तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः ॥२६॥ सात्विक्याध्यात्मिकी श्रद्धा कर्मश्रद्धा तु राजसी । तामस्यधर्मे या श्रद्धा मत्सेवायां तु



च ॥२७॥ ‘[29]परोक्षज्ञानमात्मोत्थमापरोक्ष्येण दर्शनम् । विष्ण्वाश्रयं सुखं नित्यं गमयेत्तत्प्रसादतः । न तु विष्णोः स्वरूपं तु सुखं केनचिदाप्यते । तस्यैव विषयत्वात्तु तत्सुखं चेति भण्यते । परोक्षज्ञानगो यस्माद्विषयः स्वमनोगतः । अत आत्मोत्थमित्येव सुखमाहुर्विपश्चित'- इति च ॥२९॥ ‘[31]दृष्टं श्रुतं बुद्ध्या दृष्टं चानु परं ब्रह्म ध्यायेत् ॥३१॥ ‘[34]सत्वाद्गुणाज्जातमपि व्यवधानं विनैव तु । मुक्तिदं निर्गुणं प्रोक्तं व्यवधानेन सात्विकमि'ति ब्राह्मे ॥ ३४ ॥ इति एकादशतात्पर्ये पञ्चविंशोऽध्यायः ॥ २५ ॥

## षड्विंशोऽध्यायः

‘[2]वस्तु स्वतन्त्रमुद्दिष्टमस्वतन्त्रमवस्तु चे'ति माहात्म्ये ॥ ३ ॥ [35]भगवतोऽपि सतां मध्ये प्रधानत्वात्सन्तोऽहमेव चेत्युक्तम् । ‘विष्णोश्च सत्प्रधानत्वान्न सतां विद्यते परम् । इत्याहुर्वेदविदुषः स हि सर्वेश्वरेश्वर'इति च ॥ ३५ ॥ इति एकादशतात्पर्ये षड्विंशोऽध्यायः ॥ २६ ॥

---

निर्गुणा ॥ २७ ॥ सात्विकं सुखमात्मोत्थं विषयोत्थं तु राजसम् । तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयम् ॥ २९ ॥ सर्वे गुणमया भावाः पुरुषाव्यक्तनिष्ठिताः । दृष्टं श्रुतमनुध्यायेद्बुद्ध्या वा पुरुषर्षभ ॥ ३१ ॥ तस्माद्देहमिमं लब्ध्वा ज्ञानविज्ञानसम्भवम् । मयैव ब्रह्मणा पूर्णो न बहिर्नान्तरश्चरेत् ॥ ३४ ॥

### षड्विंशोऽध्यायः

गुणमय्या जीवयोन्या विमुक्तो ज्ञाननिष्ठया । गुणेषु मायामात्रेषु दृश्यमानेष्ववस्तुतः । वर्तमानोऽपि न पुमान्युज्यतेऽवस्तुभिर्गुणैः ॥२॥ सङ्गं न कुर्यादसतां शिश्नोदरतृपां क्वचित् ॥३॥ सन्तो दिशन्ति चक्षूंषि बहिरर्कः समुत्थितः । देवता बान्धवाः सन्तः पिता माताऽहमेव च ॥ ३५ ॥

## सप्तविंशोऽध्यायः

[22]जीवः कला यस्याः सा जीवकला भगवन्मूर्तिः । 'हृदिस्था या हरेर्मूर्तिर्जीवो यत्प्रतिबिम्बकः । यद्वशे वर्तते जीवः स तु जीवकला स्मृता । शब्दैः सर्वात्मनाऽनुक्तेर्नादान्तस्था च सा मते'ति विवेके ॥ ॥ २२ ॥ '[23]व्याप्तो भूतश्च नित्यं यदात्मभूतो हरिस्ततः । जीवस्य तत्प्रधानत्वं तन्मयत्वमुदाहृतमि'ति तन्त्रभागवते ॥ 'व्याप्तोऽपि भगवान्विष्णुर्देहे सर्वगतत्वतः । भक्तस्य फलदो यस्माद्व्याप्तिकृत्तस्य तेन स'-इति च ॥ २३ ॥ [30]स्वस्य विष्णुसूक्तेन धाम सूक्तं समुद्रादूर्मिरिति । 'नितरां रञ्जयेद्यस्मात्पावमानं तु मण्डलम् । विष्णुनीराजनं तस्माद्विद्वद्भिः समुदाहृतमि'ति च ॥ ३० ॥ [43]मम कर्माणि कीर्तयित्वाऽभितो नयन्सर्वेषां प्रकाशयन्मत्कथाः श्रावयन्नित्यभिनयपदार्थः ॥ ४३ ॥ [51-52]नैरपेक्ष्येण भक्तियोगेनैव साम्यमित्यर्थः । 'निर्दुःखत्वं हरेः साम्यं न तादृशसुखात्मता । सर्वोत्तमः सदानन्दः कथं कस्य कदाप्यत'इति प्रवृत्ते ॥ 'आधिपत्यं त्रिलोकस्य योग्यानामिन्द्रता स्मृता । अयोग्यानां त्रिलोकेऽपि पूज्यत्वं समुदाहृतम् । तद्भवेत्परया भक्त्या विष्णोरालयकारिणः । ततोऽप्युद्रिक्तया भक्त्या विष्णुं पूजयतः सदा । अवाप्यते ब्रह्मलोकस्ततोद्रिक्तश्च मुच्यत'इति च ॥ ५१, ५२ ॥ इति एकादशतात्पर्ये सप्तविंशोऽध्यायः ॥ २७ ॥

---

### सप्तविंशोऽध्यायः

पिण्डे वाय्वग्निसंशुद्धे हृत्पद्मस्थां परां मम । अण्वीं जीवकलां ध्यायेन्नादान्ते सिद्धभाविताम् ॥२२॥ तयाऽऽत्मभूतया पिण्डे व्याप्ते सम्पूज्य तन्मयः । आवाह्यार्चादिषु स्थाप्य न्यस्ताङ्गं मां प्रपूजयेत् ॥ २३ ॥ स्व... धर्मानुवाकेन महापुरुषविद्यया । पौरुषेणापि सूक्तेन धामनीराजनादिभिः ॥ ३० ॥ उपगायन् गृणन्नृत्यन्कर्माण्यभिनयन्मम । सत्कथाः श्रावयन् शृण्वन्मुहूर्तक्षणिको भवेत् ॥ ४३ ॥ प्रतिष्ठया सार्वभौमं सद्मना भुवनत्रयम् । पूजादिना ब्रह्मलोकं त्रिभिर्मत्साम्यतामियात् ॥ ५१ ॥ मामेव नैरपेक्ष्येण भक्तियोगेन विन्दति । स भक्तियोगं लभते एवं यः पूजयेत माम् ॥ ५२ ॥



## अष्टाविंशोऽध्यायः

'[1]न प्रशंसेत निन्द्यांस्तु प्रशंस्यान्नैव निन्दयेत् । उभयं यः करोत्येतदसत्यात्स पतत्यधः । यः प्रशंस्यान्न प्रशंसेन्निन्द्यो येन न निन्द्यते । सोऽपि तद्वदधो याति यतोऽरिवदुदासक'इति सत्कारे ॥ प्रकृत्या पुरुषेण च सहैकेन परात्मना व्याप्तमेकात्मकम् । तथा पश्यत एव यथार्थज्ञानं भवति ॥ १ ॥ '[3]तैजसाहङ्कृतेर्जात इन्द्रियग्रामके परात् । निद्रया वशमापन्ने जीवः स्यान्नष्टचेतनः । अतो विष्णोर्वशे सर्वं तेन व्याप्तमिति स्मरेदि'ति च ॥ 'निद्रा चैव सुनिद्रा च द्विधा निद्रा प्रकीर्तिता । तत्र निद्रा भवेन्नित्या सुनिद्रा मृतिकालगे'ति पाद्मे । 'मनोमात्रस्वरूपत्वात्स्वप्नो मायेति कथ्यत'इति च । तथा नानार्थदं मन एव । मनसा हि विषयाः प्रतीयन्ते ॥३॥ [4]एकं तु शुभमुद्दिष्टमशुभं द्वैतमुच्यते । पुंसोऽशुभस्य किं भद्रं किमभद्रं विशेषतः । सर्वदाऽशुभरूपत्वाद्विशेषोऽत्यल्प एव ही'ति भारते ॥ द्वैतस्याशुभस्य पुरुषस्य कियदल्पमेव हि भद्रमभद्रं वा स्वयोग्यादाधिक्येन न भवति यत्नवतोऽपीत्यर्थः । अतस्तद्विषये ध्यातमुक्तं च शुभमनृतमेव । 'उच्यते ध्यायते वापि कुनरं प्रति यच्छुभम् । असत्यमेव भवति स्वभावोऽसत्यमेव यदि'ति प्रद्योते ॥ ४ ॥ [5]स्वभावतोऽशुभस्याशुभदेहादिकं नाशुभकारणं तर्हीत्यत आह । छायाप्रत्युदकाभासा इति ।

---

### अष्टाविंशोऽध्यायः

श्री भगवानुवाच—परस्वभावकर्माणि न प्रशंसेन्न गर्हयेत् । विश्वमेकात्मकं पश्यन् प्रकृत्या पुरुषेण च ॥१॥ परस्वभावकर्माणि यः प्रशंसति निन्दति । स आशु भ्रश्यते स्थानादसत्याभिनिवेशतः ॥ २ ॥ तैजसे निद्रयाऽऽपन्ने पिण्डस्थो नष्टचेतनः । मायां प्राप्नोति मृत्युं वा तद्वि नानार्थदं मनः ॥ ३ ॥ किं भद्रं किमभद्रं वा द्वैतस्यावस्तुनः कियत् । वाचोदितं तदनृतं मनसा ध्यातमेव च ॥ ४ ॥ छाया प्रत्युदकाभासा

'व्यपेक्ष्य जीवं देहादि निःशक्तत्वादवस्त्वपि । पुनः शुभाशुभनृणां यच्छेदेव शुभाशुभम् । छायानीहारकाभासा निःशक्ता अपि कार्यदाः । एवं शुभादिदेहादेर्भवेत्कार्यं शुभादिकमि'ति सुमते ॥ 'नीहारः प्रत्युदं चैव धूम्रमित्यभिशब्द्यत'इति शब्दनिर्णये ॥ ५ ॥ [6]इदं विश्वं सृजति त्राति हरति च स्वयं स्वात्मनैव सृज्यते त्रायते ह्रियते च । 'दीपाद्दीपान्तरं यद्वत्सृष्टिरीशस्य कीर्त्यते । एतावत्कालमाशिष्ये मानुषेष्विति चिन्तनम् । विष्णोस्त्राणं समुद्दिष्टं स्वस्यैव स्वेच्छयैव तु । दीपेदीपान्तरस्येव ह्यैकीभावश्च संहृतिरि'ति च ॥ 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यत'इति च ॥६॥ [7]आत्मनः परमेश्वरस्य तस्मादन्यो भावो नास्ति । 'सृष्टिः स्थितिश्च संहारो भावनं समुदाहृतम् । तद्यः करोति पुरुषः स भाव इति कीर्त्यत' इति विवेके । अन्येन सृष्टिः स्थितिः संहार इति त्रिविधा मतिर्विद्वद्भिर्नैव निरूपिता निर्मूला प्रमाणवर्जिता । 'अन्यस्मात्सृष्टिसंहारौ स्थितिश्च परमात्मनः ।' निरूपिता न विद्वद्भिः प्रमाणाभावतो हरेरि'ति ब्रह्मतर्के ॥ ७ ॥ [8]अन्यतः सृष्टिः स्थितिः संहार इति त्रयं गुणमयं सत्त्वादिगुणाधीनम् । 'गुणसम्बन्धयोग्यानामुत्पत्त्याद्याः स्युरन्यतः । सर्वदा निर्गुणस्यास्य सर्गाद्याः स्युः कुतोऽन्यत'इति च ॥८॥ '[10]असमर्थमसत्प्रोक्तं सत्समर्थं प्रकीर्तितमि'ति च ॥ १० ॥ '[13]फलवान्मोक्षहेतुत्वान्नित्यानन्दादपार्थकः । जीवात्मनस्तु संसारः स्वप्नवच्चल-

---

ह्यसन्तोऽप्यर्थकारिणः । एवं देहादयो भावा यच्छन्त्यामृत्युतो भयम् ॥ ॥५॥ आत्मैव तदिदं विश्वं सृज्यते सृजति प्रभुः । त्रायते त्राति विश्वात्मा ह्रियते हरतीश्वरः ॥६॥ तस्मान्न ह्यात्मनोऽमुष्मादन्यो भावो निरूपितः । निरूपितेयं त्रिविधा निर्मूला मतिरात्मनि ॥ ७ ॥ इदं गुणमयं विद्धि त्रिविधं मायया कृतम् ॥ ८ ॥ प्रत्यक्षेणानुमानेन निगमेनात्मसंविदा । आद्यन्तवदसज्ज्ञात्वा निःसङ्गो विचरेदिह ॥ १० ॥ श्री भगवानुवाच— यावद्देहेन्द्रियप्राणैरात्मनः सन्निकर्षणम् । संसारः फलवांस्तावदपार्थोऽप्य-





त्वत'इति तत्त्वविवेके ॥ १३ ॥ [14]संसृत्यभावस्यैव फलरूपत्वान्निरर्थ एव संसार इत्यवधारयति । अर्थेऽपीति । 'उच्यते निष्फलत्वेन यदत्यल्पफलं भवेदि'ति च ॥ १४ ॥ [15]अतोऽफलवत्त्वावधारणार्थं च पुनर्वचनम् ॥ १५ ॥ [16]अहङ्कारस्य सकाशाद्दृश्यन्ते । नात्मनः स्वतः । 'अहङ्कारात्तु संसारो भवेज्जीवस्य न स्वतः । कुतश्चिदानन्दतनोः स्वरूपेच्छायुतस्य स'इति तन्त्रभागवते ॥ १६ ॥ [17]देहेन्द्रियप्राणमनसामभिमानयुक्तः । सूत्रं महानित्याद्यधिकारनामभिर्युक्तः । प्रधानजीवो हिरण्यगर्भोऽप्याधावति संसारे किमुतान्य इत्याशयः । 'संसारयुग्यो ब्रह्माऽपि सर्वजीवेश्वरेश्वरः । विष्णवधीनः सदा ज्ञानी किमुतान्येऽल्पचित्तिन'इति सत्तत्त्वे ॥ १७ ॥ [18]अमूलं विष्णुमूलम् । बहुरूपेण तेनैव रूप्यते मनआदीनां विषयः ॥ १८ ॥ [19]केवलं स्वतन्त्रम् । आद्यन्तयोर्यत्स्वतन्त्रं तदेव मध्येऽपि स्वतन्त्रम् । परं ब्रह्म ज्ञानविवेकादिस्वरूपं परिपूर्णगुणत्वात्कालः । अन्यतो विविक्तत्वाद्विवेकः । सर्वं निगमयति प्रापयतीति निगमः । सर्वैरालोच्यत्वात्तपः । प्रतिप्रत्यक्षेषु स्थितत्वात्प्रत्यक्षम् । आचार्यसम्प्रदायसिद्धत्वादैतिह्यम् । अनुमेयत्वादनुमानम् ॥ १९ ॥ [20]हिरण्यखचितत्वेन हिरण्यप्रधानं हिरण्मयम् । शङ्खमश्वकरथादिषु मध्येऽपि केवलं प्राधा-

---

विवेकतः ॥ १३ ॥ अर्थेऽप्यविद्यमानेऽपि संसृतिर्न निवर्तते । ध्यायतो विषयान् ह्यस्य स्वप्नेऽनर्थागमो यथा ॥ १४ ॥ द्रव्यैः प्रसिद्धैर्मद्यागः प्रतिमादिष्वमायया । भक्त्या चैव यथा लब्धैर्हृदि भावेन चैव हि ॥१५॥ शोकहर्षभयक्रोध लोभमोहस्पृहादयः । अहङ्कारस्य दृश्यन्ते जन्ममृत्युश्च नात्मनः ॥१६॥ देहेन्द्रियप्राणमनो जीवोऽन्तरात्मा गुणकर्ममूर्तिः । सूत्रं महानित्युरुधेहगीतः संसार आधावति कालतन्त्रः ॥ १७ ॥ अमूलमेतद्बहुरूपरूपं मनो वचः प्राणशरीरकर्म । ज्ञानासिनोपासनया शितेन छित्त्वा मुनिर्गां विचरत्यतृष्णः ॥ १८ ॥ ज्ञानं विवेको निगमस्तपश्च प्रत्यक्षमैतिह्यमथानुमानम् । आद्यन्तयोरस्य यदेव केवलं कालश्च हेतुश्च तदेव मध्ये ॥ ॥ १९ ॥ यथा हिरण्यं स्वकृतं पुरस्तात्पश्चाच्च सर्वस्य हिरण्मयस्य । तदेव

न्येन व्यवहार्यमाणं तदेव । 'रथोपस्थे परिष्कारात्पूर्वं दारुमयाद्रथात् । सुवर्णं व्यवहाराय मुख्यं रथपरिष्कृतम् । मध्ये चान्ते रथोपस्थान्निष्कृष्य पृथगास्थितम् । यद्वदेवं हरिः साक्षाज्जगद्देहात्पृथक् स्थितः । पूर्वं जगति संस्थश्च जगदन्ते पृथक्स्थितः । स एव मुख्यो जगतः स्वातन्त्र्यात्परमेश्वर'इति ब्रह्मतर्के ॥ सुरपितृमनुजादिकल्पनादिभिरित्याद्यन्तर्याम्यपेक्षया । 'यथा सुवर्णमकृतं क्रियते कुण्डलादिकम् । पुनरेकीभवत्यद्धा तद्वद्विष्णुरजोऽपि सन् । सुराद्यन्तःस्थितो भूत्वा पुनरेकीभवेद्विभुरि'ति च ॥ 'तत्तन्नियामकस्यैव नाम सर्वं सुरादिकम् । तत्सम्बन्धादुदीर्येत व्यवहृत्यै सुरादिष्वि'ति शब्दनिर्णये ॥ 'एकलं केवलं चेति स्वतन्त्रमभिधीयते । स्वतन्त्रस्तु हरिः साक्षात्परिष्कृतहिरण्यवदि'ति प्रवृत्ते । 'प्रत्येकं न तु दार्वादि स्वतन्त्रं विक्रियागतम् । महाफलं स्यात्स्वर्णं तु स्वतन्त्रं विक्रियोपगम् । तद्वत्स्वतन्त्रो भगवान्प्रवृत्तावन्यदन्यथे'ति च ॥ २० ॥ [21]मोक्षदं संसारदं तमःप्रदं चेति त्रिपदस्थं विज्ञानम् । तदिच्छायाः सत्व एतत्सर्वमस्ति अन्यथा नास्तीत्यन्वयव्यतिरेकौ । तदेव केवलं सत्यमिति सर्वत्र सम्बध्यते । 'स्वातन्त्र्यमेव सत्यत्वं विष्णोरन्यस्य सत्यता । प्रवाहतः सदाऽस्तित्वं पुंप्रकृत्योः सदाऽस्तिते'ति वस्तुतत्त्वे ॥ २१ ॥ [22]मध्ये च तत्केवलं नेति सम्बध्यते । 'तत्स्वातन्त्र्येण नैवास्ति यदुत्पत्तिविनाशवत् । स्वातन्त्र्येणास्तिता तस्य यत्सत्ताज्ञानदं सदे'ति वैभवे ॥२२॥ '[23]जगतो नास्तिता सैव या पराधीनता सदा । अभावस्तु कुतस्तस्य यद्विभातीह सर्वदे'ति प्राकाश्ये ॥ 'अविद्यमानता नाम जगतः परतन्त्रता । यथाऽशक्तस्तु पुत्रादिरसन्नित्युच्यते जनैरि'ति विवेके ॥ अतो ब्रह्मण एव विभाति । द्वितीयं ब्रह्मप्रकृतिः । आत्मा जीवः प्रकृतीन्द्रियविषयजीवादिविचित्रं जगद्ब्रह्मत एव विभातीत्यर्थः ॥ २३ ॥ [25]वायुरेव स्वयं प्राणस्तत्रस्थे चोदतेजसी । उदेन तेजसा चैव प्राणस्य हि कृतं वपुरि'ति प्रकाशिकायाम् ॥ 'प्राणस्य वायुरूपस्य भूतत्रयकृतं वपुः । ततो हि पार्थिवं नात्र खं चात्यल्पमुदाहृतमि'ति सन्धारणे ॥ सत्त्वं मूलबुद्धिः । अहं शृणोम्यहं स्पृशाम्यहं पश्यामीति सर्वार्थेषु समत्वादहङ्कारोऽर्थसाम्यम् । 'न देहो नेन्द्रियप्राणमनोबुद्ध्यहमादयः । विष्णुश्चिदानन्दतनुः स हि जीवाधिपः सदे'ति सत्तत्त्वे ॥ २५ ॥ [26]भगवतो गुणदोषाभावेऽपि जीवस्य सङ्गोऽवर्जनीय एव मुक्तिपर्यन्तम् । 'समाहितेन जीवेन विक्षिप्ते वा न तु कश्चित् । विशेषो विद्यते विष्णोस्तथापि तु समाहिते । प्रीतो भवति वै नित्यं सर्वधर्मकृतोऽपि चे'ति पाद्मे ॥ २६ ॥ [32]आत्मस्थमतिः परमात्मस्थमतिः । परमात्मनोऽन्यत्पारतन्त्र्यादेः ॥ ३२ ॥ '[33]नानामानविरुद्धं हि स्वातन्त्र्यं जगतः सदा । स्वतन्त्रो भगवान्विष्णुरेक एव न संशय'इति च ॥ वस्तुतया स्वतन्त्रत्वेन विरुद्धं तथा न मन्यते । 'अस्त्येव स्वाप्नमखिलं वासनारूपमात्मनि । जाग्रदेतदिति ज्ञानं यत्तदेव भ्रमात्मकम् । तद्वज्जगदिदं

---

मध्ये व्यवहार्यमाणं नानापदेशैरहमस्य तद्वत् ॥ २० ॥ विज्ञानमेतत्त्रिपदस्थमङ्ग गुणत्रयं कारणकार्यकर्तृ । समन्वयेन व्यतिरेकतश्च येनैव तुर्येण तदेव सत्यम् ॥२१॥ न यत्पुरस्तादुत यन्न पश्चान्मध्ये च यन्न व्यपदेशमात्रम् । भूतं प्रसिद्धं च परेण यद्यत्तदेव सत्स्यादिति मे मनीषा ॥२२॥ अविद्यमानोऽप्यवभासते यो वैकारिको राजससर्ग एषः । ब्रह्म स्वयंज्योतिरतो विभाति ब्रह्मेन्द्रियार्थात्मविकारचित्रम् ॥२३॥ नात्मा वपुः पार्थिवमिन्द्रियाणि देवा ह्यसुर्वायुजलं हुताशः । मनोऽन्नमात्रं धिषणा च सत्त्वमहङ्कृतिः खं क्षितिरर्थसाम्यम् ॥२५॥ समाहितैः कः करणैर्गुणात्मभिर्गुणो भवेत्तत्सुविविक्तधाम्नः । विक्षिप्यमाणैरुत किं नु दूषणं घनैरुपेतैर्विगतै रवेः किम् ॥२६॥ यथा नभो वाय्वनलाम्बुभूगुणैर्गतागतैर्वा त्रिगुणैर्न सज्जते । तथाऽक्षरं सत्त्वरजस्तमोमलैरहंमतेः संसृतिहेतुभिः परम् ॥२७॥ तथापि सङ्गः परिवर्जनीयो गुणेषु मायारचितेषु तावत् । मद्भक्तियोगेन दृढेन यावद्रजो निरस्येत मनः कषायम् ॥२८॥ तिष्ठन्तमासीनमुत व्रजन्तं शयानमुक्षन्तमदन्तमन्नम् । स्वभावमन्यत्किमपीह यान्तमात्मानमात्मस्थमतिर्न वेद ॥३२॥ यदि स्म पश्यत्यसदिन्द्रियार्थं नानानुमानेन विरुद्धमन्यत् ।

सर्वं विद्यमानं न संशयः । स्वतन्त्रमेतदिति तु यज्ज्ञानं तद्भ्रमात्मकमि'ति च ॥ 'उत्थितो नैव जाग्रत्त्वं क्वचित्स्वप्नस्य पश्यति । स्वातन्त्र्यमेवं जगतो ज्ञानवान्नैव पश्यती'ति विवेके ॥ ३३ ॥ [34]भगवद्गुणविषयं तत्कर्मविषयं चेति गुणकर्मचित्रम् । आत्मनि परमात्मविषयं एतन्न जानामीत्यप्यविविक्तम् । 'अन्यैर्ज्ञातेऽपि वाऽज्ञाते न विशेषो हरेः क्वचित् । तेषामेव विशेषः स्यादज्ञानापगमेन त्वि'ति च ॥ ३४ ॥ '[36]ज्ञानानन्दाद्यभिन्नत्वादेकः सर्वोत्तमत्वतः । अद्वितीयो महाविष्णुः पूर्णत्वात्पुरुषः स्मृत'इति च ॥ ३६ ॥ '[37]एतावानात्मसम्मोहो यद्विरुद्धस्य कल्पनम् । यत्परात्माश्रयाज्जीवान्निश्चयेन न पश्यती'ति तन्त्रभागवते । अचलमिति क्रियाविशेषणम् ॥ ३७ ॥ [38]अयं व्यर्थवादो न भवति किन्त्वर्थवादः । जगत्परमेश्वरं च द्वयं विन्दन्ति ज्ञानिनः । 'पञ्चभूतात्मकं विश्वं भ्रान्तिसिद्धमपण्डिताः । वदन्ति पण्डितास्त्वद्धा जगदाहुरबाधितम् । प्रवाहरूपेण सदा विष्णोरिच्छावशे स्थितमि'ति च ॥ ३८ ॥ इति एकादशतात्पर्ये अष्टाविंशोऽध्यायः ॥ ॥ २८ ॥

## एकोनत्रिंशोऽध्यायः

'[7]आत्मान्तरात्मा परमात्मेति मूर्तित्रयं हरेः । जाग्रत्स्वप्नसुषुप्तीनां सृष्ट्यादेश्च प्रवर्तकमि'ति त्रैकाल्ये ॥७॥ [11]पृथक्स्वयमेव सत्रेण बहुभिः सह वा मम यात्रामहोत्सवं कुर्यात् ॥ ११ ॥ '[13]सर्वभूतेष्वस्ति विष्णुरिति भावः सतां मतः ॥ १३ ॥ [15]अर्चने सर्वभूतानामादित्ये तद्गतात्मने'ति च ॥१५॥ '[18]ब्रह्मणात्तमिदं सर्वं यत्किञ्चित्सचराचरम् । इति पश्येत यो विद्वान्स हि ब्रह्मात्मविन्मत'इति ब्राह्मे ॥ १८ ॥ '[21]नयादिर्दुर्नयः प्रोक्तो यन्नयं सोऽतिसर्वदे'ति शब्दतत्त्वे ॥ २१ ॥ '[22]एकदा ज्ञातरूपेण यन्न तिष्ठति सर्वदा । चञ्चलत्वात्सत्यमपि ह्यनृतं जगदुच्यत'इति च ॥ 'सर्वदैकप्रकारत्वात्सत्यं ब्रह्म सदोच्यत'इति च ॥ २२ ॥ इति एकादशतात्पर्ये एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## त्रिंशोऽध्यायः

[2]तनुमत्यजत् । अतिशयेनाहरत् । अज हरण इति धातोः ।

---

न मन्यते वस्तुतया मनीषी स्वप्नं यथोत्थाय तिरोदधानम् ॥ ३३ ॥ पूर्वं गृहीतं गुणकर्मचित्रमज्ञानमात्मन्यविविक्तमङ्ग । निवर्तते तत्पुनरीक्षयैव न गृह्यते नापि विसृज्य आत्मा ॥ ३४ ॥ एष स्वयं ज्योतिरजोऽप्रमेयो महानुभूतिः सकलानुभूतिः । एकोऽद्वितीयो वचसां विरामो येनेरिता वाग्वचनश्चरन्ति ॥ ३६ ॥ एतावानात्मसम्मोहो यद्विकल्पस्तु केवले । आत्माऽमृते स्वमात्मानमचलं यन्न पश्यति ॥ ३७ ॥ यन्नामाकृतिभिर्ग्राह्यं पञ्चवर्णमबाधितम् । व्यर्थो नाप्यर्थवादोऽयं द्वयं विन्दन्ति सूरयः ॥३८॥

एकोनत्रिंशोऽध्यायः

श्री शुक उवाच—इत्युद्धवेनात्यनुरक्तचेतसा पृष्टो जगत्क्रीडनकः स्वशक्तिभिः । गृहीतमूर्तित्रय ईश्वरेश्वरो जगाद सप्रेम मनोहरस्मितः ॥७॥ पृथक् सत्रेण वा मह्यं मम यात्रामहोत्सवम् । कारयेन्नृत्यगीताद्यैर्महाराजविभूतिभिः ॥ ११ ॥ इति सर्वाणि भूतानि मद्भावेन महाद्युते । सभाजयेन्मन्यमानो ज्ञानं केवलमाश्रयन् ॥ १३ ॥ नरेष्वभीक्ष्णं मद्भावः पुंसो भावयतोऽचिरात् । स्पर्धासूया तिरस्काराः साहङ्कारा वियन्ति हि ॥१५॥ सर्वं ब्रह्मात्मकं तस्य विद्ययाऽऽत्ममनीषया । परिपश्यति च परं परमात्मानमच्युतम् ॥ १८ ॥ अहं हि सर्वकल्पानां सध्रीचीनो मतो मम । मद्भावः सर्वभूतेषु मनोवाक्कायकर्मभिः ॥ १९ ॥ यो योऽपरो मनोधर्मः कल्पते निष्फलाय ते । तदायासो निरर्थः स्याद्भयादेरिव सत्तम ॥ २१ ॥ एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम् । यत्सत्यमनृतेनेह मर्त्येनाप्नोति मामृतम् ॥ २२ ॥

त्रिंशोऽध्यायः

ब्रह्मशापोपसंसृष्टे स्वकुले यादवर्षभः । प्रेयसीं सर्वनेत्राणां तनुं

भूलोकात्स्वर्गलोकं प्रत्यहरदित्यर्थः ॥२॥ [3]कः सुखरूपः । अनुमानः कवीनां मानानुसारी ॥३॥ इति एकदशतात्पर्ये त्रिंशोऽध्यायः ॥३०॥

## एकत्रिंशोऽध्यायः

[6]आग्नेय्या धारणया स्वतनुमदग्ध्वा स्वकं धामाविशत् । 'आग्नेय्याऽन्ये धारणया दग्ध्वा देहं परं पदम् । यान्ति देवाः समस्ताश्च तेषामन्यां तनुं हरिः । नृसिंहरूपी सर्वेषां भित्त्वा ताभिरलङ्कृतः । नृत्यते प्रलये देवः स्वयं कृष्णादिरूपवान् । अदग्ध्वैव तनुं याति नित्यानन्दस्वरूपत'इति तन्त्रभागवते ॥६॥ [11]तनुभृद्वज्जननवदप्ययवच्च ईहा तनुभृज्जननाप्ययेहा । 'प्रजापतिश्चरति गर्भे अन्तः अजायमानो बहुधा विजायत'इति च । 'अजातो जातवद्विष्णुरमृतो मृतवत्तथा । मायया दर्शयेन्नित्यमज्ञानां मोहनाय चे'ति ब्राह्मे ॥ ११ ॥ [13]शेषितं वपुर्बलभद्रादीनाम् । 'जगतो मोहनार्थाय भगवान्पुरुषोत्तमः । दर्शयेन्मानुषीं चेष्टां तथा मृतकवद्विभुः । प्रकाशयेददेहोऽपि मोहाय च दुरात्मनाम् । मायया मृतकं देहं तदा सृष्ट्वा प्रदर्शयेत् । कुतो हि मृतकं तस्य मृत्यभावात्परात्मन'इति च ॥ १३ ॥ '[20]अग्नावन्तर्दधे

---

स कथमत्यजत् ॥२॥ प्रत्याकृष्टुं नयनमबला यत्र मग्नं न शेकुः कर्णाविष्टं न सरति यशो यत्सतामात्मलग्नम् । यच्छ्रीवाक्यं जनयति रतिं किमु मानं कवीनां दृष्ट्वा जिष्णोर्युधि रथगतं यच्च तत्साम्यमीयुः ॥ ३ ॥

### एकत्रिंशोऽध्यायः

लोकाभिरामां स्वतनुं धारणाध्यानमङ्गलाम् । योगधारणयाऽग्नेय्याऽदग्ध्वा धामाविशत्स्वकम् ॥६॥ राजन्परस्य तनुभृज्जननाप्ययेहां मायाविडम्बनमवेहि यथा नटस्य । सृष्ट्वाऽऽत्मनेदमनुविश्य विहृत्य चान्ते संहृत्य चात्ममहिमोपरतः स आस्ते ॥ ११ ॥ तथाप्यशेषस्थितिसम्भवाप्ययेष्वनन्यहेतुर्यदशेषशक्तिधृक् । नैच्छत्प्रणेतुं वपुरत्र शेषितं मर्त्येन किं स्वच्छगतिं प्रदर्शयन् ॥१३॥ प्राणांश्च विजहुस्तत्र भगद्भिरहातुराः । उपगृह्य पतींस्तात चितामारुरुहुः स्त्रियः । रामपत्न्यश्च तं देहमुपगृह्याग्नि-



भैष्मी सत्यभामा वने तथा । न तु देहवियोगोऽस्ति तयोः शुद्धचिदात्मनोरि'ति च ॥ २० ॥ इति श्रीमद्भागवतैकादशस्कन्धतात्पर्ये श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते एकत्रिंशोऽध्यायः ॥ ३१ ॥ एकादशस्कन्धः सम्पूर्णः ॥

---

## द्वादशः स्कन्धः

## चतुर्थोऽध्यायः

श्रीवेदव्यासाय नमः ॥ [20]न यत्र वाच इत्यादि कालाख्यस्य ब्रह्मणः स्वरूपम् ॥ २० ॥ '[23]जीवविष्णोरभेदश्च देहयोगवियोजने । विष्णोर्दुःखं व्रणित्वादि पराभावस्तथैव च । अस्वातन्त्र्यं च वेदादावुक्तवद्भासते विभोः । क्वचित्क्वचिद्विमोहाय दैत्यानां च दुरात्मनामि'ति ब्रह्माण्डे ॥ २३ ॥ '[25]प्रत्येकं विष्णुरूपाणां भ्रान्तिमात्रा भिदा मता । जगतश्चैव विष्णोश्च सत्यो भेदः सदैव तु । यथाऽऽकाशघनौ

---

माविशन् ॥ १९ ॥ वसुदेवपत्न्यस्तद्गात्रं प्रद्युम्नादीन्हरेः स्नुषाः । कृष्णपत्न्योऽविशन्नग्निं रुक्मिण्याद्यास्तदात्मिकाः ॥ २० ॥

---

### द्वादशः स्कन्धः

### चतुर्थोऽध्यायः

तत एकोदकं विश्वं ब्रह्माण्डविवरान्तरम् । तदा भूमेर्गन्धगुणं ग्रसन्त्याप उपप्लवे ॥ १३ ॥ न यत्र वाचो न मनो न सत्वं तमो रजो वा महदादयोऽमी । न प्राणबुद्धीन्द्रियदेवता वा न सन्निवेशः खलु लोककल्पः ॥ ॥२०॥ बुद्धीन्द्रियार्थरूपेण ज्ञानं भाति तदाश्रयम् । अन्वयव्यतिरेकाभ्यामाद्यं तावदवस्तु यत् ॥ २३ ॥ बुद्धेर्जागरणं स्वप्नं सुषुप्तिरिति होच्यते ।

नित्यं भिन्नावेव परस्परम् । एवमीशो जगच्चैव भिन्नावेव परस्परमि'ति च ॥ २५ ॥ ‘[27]अवयव्यवयवाभेदात्कोट्यंशो भेद ईरितः । सोऽपि भेदो न चाभेदात्पृथगेव प्रवर्तते । अवयव्यवयवानां च कार्यकारणवस्तुनाम् । एक एव नियन्ताऽसौ हरिर्नारायणः पर'इति च ॥२७॥ ‘[30]महाकाशो बहिःस्थश्च घटाद्यन्तःस्थ एव च । द्वेधा समुदितोऽन्यौ च द्वावाकाशौ प्रकीर्तितौ । घटरूपस्तदन्यश्च महाकाशात्परो लघुः । महाकाशवदेवात्र परमात्मा सनातनः । घटान्तःस्थमहाकाशप्रतिमोऽन्तर्गतो हरिः । घटस्थान्तर्गताकाशो महाकाशात्परो मतः । तद्वद्देवादयः सर्वे जीवा मुक्त्युपयोगिनः । तमोगाश्चैव ये सर्वे घटरूपखवत्परा'इति तत्त्वसंहितायाम् ॥ ३० ॥ इति द्वादशस्कन्धतात्पर्ये चतुर्थोऽध्यायः ॥ ॥ ४ ॥

## पञ्चमोऽध्यायः

‘[23]स्वसन्तानोद्भवं कीर्त्या योजयन् जनमेजयम् । शक्तोऽप्यशक्तवद्यष्टुरिन्द्र आसीदुपेक्षकः । एवमेव ऋषीणां च कीर्तिं योजयताऽमुना । कृतोपेक्षा महेन्द्रेण किमु विष्णुः परात्परः । तस्माद्विष्णोरशक्यं न भूतभव्यभवत्स्वपि । न चानिष्टं गुणैरेष पूर्णो नारायणः सदे'ति वामने ॥२३॥ इति द्वादशस्कन्धतात्पर्ये पञ्चमोऽध्यायः ॥५॥

नित्यादोषस्वरूपाय गुणपूर्णाय सर्वदा । नारायणाय हरये नमः प्रेष्ठतमाय मे ॥ १ ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्भागवततात्पर्यनिर्णये द्वादशस्कन्धः समाप्तः ॥

॥ श्रीमद्भागवततात्पर्यनिर्णयः समाप्तः ॥

---

मायामात्रमिदं राजन्नानात्वं प्रत्यगात्मनि ॥ २५ ॥ यथा जलधरा व्योम्नि भवन्ति न भवन्ति च । ब्रह्मणीदं तथा विश्वमुपयात्युदयाप्ययम् ॥२६॥ एते ह्यवयवाः प्रोक्ताः सर्वावयविनामिह । विनाऽर्थेन प्रतीयेरन् पटस्येवाङ्ग तन्तवः ॥ २७ ॥ यत्सामान्यविशेषाभ्यामुपलभ्येत स भ्रमः । अन्योऽन्यापाश्रयात्सर्वमाद्यन्तवदवस्तु च ॥ २८ ॥ न हि सत्यस्य नानात्वमविद्वान्यदि मन्यते । नानात्वं छिद्रयोर्यद्वज्ज्योतिषोर्वातयोरपि ॥ ३० ॥

### पञ्चमोऽध्यायः

ब्रह्मभूतस्य राजर्षेर्देहो हि गरलाग्निना । बभूव भस्मसात्सद्यः पश्यतां सर्वदेहिनाम् ॥ १३ ॥ पारीक्षित इति श्रुत्वा प्राहर्त्विज उदारधीः । सहेन्द्रस्तक्षको विप्रा नाश्नं किमिति पात्यते ॥२०॥ तच्छ्रुत्वा जुहुवुर्विप्राः सहेन्द्रं तक्षकं मखे । तक्षकाशु पतस्वेह सहेन्द्रेण मरुत्वता ॥२१॥ इति ब्रह्मोदिताक्षेपैः स्थानादिन्द्रः प्रचालितः । बभूव सम्भ्रान्तमतिः सविमानः सतक्षकः ॥ २२ ॥ तं पतन्तं विमानेन सह तक्षकमम्बरात् । विलोक्याङ्गिरसः प्राह राजानं तं बृहस्पतिः ॥ २३ ॥

B

॥ श्रीकृष्णार्पणमस्तु ॥

'श्रीसर्वमूलग्रन्था' इति साम्प्रदायिकैरनुमताः
सप्तत्रिंशद्ग्रन्थाः समाप्ताः

॥ श्रीमध्वेशार्पणमस्तु ॥

श्रीसर्वमूलग्रन्थानन्तर्गताः परन्तु श्रीमदानन्दतीर्थभगवत्पादैः
रचितत्वेन साम्प्रदायिकैरनुमता ग्रन्थाः

# १. कन्दुक(कृष्ण)स्तुतिः

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मक-
लक्ष्मीहयग्रीवाय नमः ॥

ॐ अम्बरगङ्गाचुम्बितपादः
पदतलविदलितगुरुतरशकटः ।
कालियनागक्ष्वेलनिहन्ता
सरसिजनवदलविकसितनयनः ॥ १ ॥

कालघनालीकर्बुरकायः
शरशतशकलितसुररिपुनिवहः ।
सन्ततमस्मान्पातु मुरारिः
सततगसमजवखगपतिनिरतः ॥ २ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिता कृष्णस्तुतिः सम्पूर्णा

# २. बिल्वमङ्गलः साधुः

# ३. न्यासपद्धतिः

॥ श्री नृसिंहाय नमः ॥

नत्वा नारायणं देवं पूर्णं ब्रह्माक्षरोदितम् ।
यतेराचरणं वक्ष्ये पूर्णं शास्त्रानुसारतः (क्ष्य) ॥ १ ॥

अरुणोदयवेलायामुत्थाय हरिमानसैः । (य, सेः)
शौचादिकं यथान्यायं कृत्वा दन्तान्विशोधयेत् (या) ॥ २ ॥

कटिशौचं भृशं कुर्यात् शुध्यर्थं जलसंस्थितः । (मृरा, मृदा, र्थ, तं)
स्नानं कुर्यात् यथोक्तेन विधिना नियतो यतिः ॥ ३ ॥

धृतोर्ध्वपुण्ड्रो विधिना प्रकल्प्यासनमच्युते । (तौ, ल्पा)
मनोनिविश्याष्टमन्त्रान् यथाशक्ति जपेच्छुचिः (ना) ॥ ४ ॥

द्वादशसाहस्रवृर्ति परंब्रह्माक्षरं जपेत् ।
दण्डोदकं जपशोचे दद्याद्विधिविधानतः ॥ ५ ॥
(जपाशौचे, जपश्रान्ते, जपशान्त्यै, जपस्यान्ते)

देवतां परमां सम्यक् पूजयेच्च विधानतः ।
भिक्षाकाले विधानेन चरेद्भिक्षाटनं यतिः (ते, न) ॥ ६ ॥

एकस्य भिक्षाचरणं जघन्यमिति चोदितम् ।
अनेकभिक्षाचरणं मुख्यधर्मो यतेः स्मृतः ॥ ७ ॥

त्रिपञ्चसप्तसद्मानि गच्छेन्नातोऽधिकं व्रजेत् ।
॥ बुधः ॥ भिक्षाग्रहणकाले तु गृह्णीयाद्दातृतो जलम् ॥ ८ ॥

भिक्षान्ने तज्जलं प्रोक्ष्यं पुनर्ग्राह्यं विदा जलम् । (त)
निवेदयेत्तदन्नं तु वारिजस्योदकेन तु ॥ ९ ॥

प्रोक्ष्य देवाय महते मूलमन्त्रेण वाग्यतः । (न्त्र)
तदन्नं भक्षयेत्स्वस्थो ह्यजवद्धरिमानसः (यो, स) ॥ १० ॥

त्रिवारमुदकस्नानं यतेः शास्त्रेषु चोदितम् ।
अशक्तस्य यतेः शास्त्रे द्विवारं स्नानचोदना (स्त्र) ॥ ११ ॥

अत्यन्ताशक्तविषये त्वेकस्नानं स्मृतं बुधैः ।
वेदान्तशास्त्राभ्यसनं मुख्यधर्मो यतेः स्मृतः (स्त्र) ॥ १२ ॥

ध्येयो नारायणो नित्यं सृष्टिस्थित्यन्तकारकः । (ध्या)
भक्तानां मुक्तिदो नित्यमन्यथाज्ञानिनां तमः (नात्त) ॥ १३ ॥

पूर्णप्रज्ञेन मुनिना व्यासवाक्यसमुद्धृतिः ।
न्यासधर्मस्य विषये शुभा सङ्क्षेपतः कृता ॥

इति श्रीमदानन्दतीर्थभगवत्पा(दा)चार्यविरचिता
न्यासपद्धतिः समाप्ता

श्रीः श्रीः श्रीः

---

शके १८१० सर्वधारिसंवत्सर अधिक चैत्रवद्य १३ सोमवारदलि बेलगावियलि लेखन समाप्ति ।

॥ श्री मध्वेशार्पणमस्तु ॥